# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




५० वर्षे
३–४ अङ्कौ

मार्गशीर्ष–फाल्गुनपूर्णिमे
दिसम्बर–मार्च, १९९५-९६ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]


सम्पादकः

**डॉ० आद्याप्रसादमिश्रः**

अनुसन्धानसंस्थाननिदेशकः

उपसम्पादकः

**डॉ० हरिश्चन्द्रमणित्रिपाठी**

प्रकाशनाधिकारी






५० वर्षे

३-४ अङ्कौ

वार्षिकं मूल्यम्—१०० रूप्यकाणि

दिसम्बर-मार्च, १९९५-९६ ई०

परामर्शदातृसम्पादकमण्डलम्

डॉ० मण्डनमिश्रः, कुलपतिः, अध्यक्षः

१. डॉ० श्रीकान्तपाण्डेयः (प्रथमः), वेदवेदाङ्गसंकायाध्यक्षः

२. डॉ० राधेश्यामधरद्विवेदी, दर्शनसंकायाध्यक्षः

३. डॉ० नरेन्द्रनाथपाण्डेयः, साहित्य-संस्कृति-संकायाध्यक्षः

४. डॉ० पुरुषोत्तमप्रसादपाठकः, श्रमणविद्या-संकायाध्यक्षः

५. डॉ० सत्यव्रतशर्मा, आधुनिक-ज्ञान-विज्ञान-संकायाध्यक्षः

६. डॉ० आद्याप्रसादमिश्रः, संयोजकः

❁ ❁ ❁

प्रकाशकः —
डॉ० हरिश्चन्द्रमणित्रिपाठी
प्रकाशनाधिकारी,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

मुद्रकः —
विजय-प्रेस,
सरसौली, भोजूबीर
वाराणसी

प्राप्तिस्थानम्—
विक्रय-विभागः, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी-२२१ ००२

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ५० वर्षे | मार्गशीर्ष-फाल्गुनपूर्णिमे, वि० सं० २०५२ | ३-४ अङ्कौ |
|---|---|---|


# कतिपयपाणिनीयसूत्रमीमांसा*


आचार्यश्रीरामप्रसादत्रिपाठी

व्याकरण-योगतन्त्रागमविभागाध्यक्षचरः,

वेदवेदाङ्गसङ्कायाध्यक्षचरश्च

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी


❁❁❁

[ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणाम्—
अष्टा० ६।४।११ ]

अबादीनामुपधाया दीर्घः स्यादसम्बुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव। समर्थसूत्रे 'उद्गातारः' इति भाष्याप्रयोगात्।

अत्र तत्त्वबोधिनी व्याख्या—अप्तृन्-'तुरिष्ठेमेयस्सु'-इतिवत् इत्येव सिद्धे तृन्-तृचोर्भेदेनोपादानं 'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम्। तेन 'न कोपधायाः'[1] इत्यत्र सामान्योक्तावपि अकतद्धितयोरेव को गृह्यते, न कमात्रम्। तेन यदग्रे वक्ष्यति—'कोपधप्रतिषेधे तद्धितवुग्रहणम्' इति तदुपपन्नं भवतीत्येके।

---

*निबन्धोऽयं "सारस्वती सुषमायाः" षट्चत्वारिंशद्वर्षीयतृतीय-चतुर्थाङ्कतः क्रमशः प्रचलन्नस्ति।

1. अष्टा० ६।३।३७।

अन्ये त्वाहुः — 'अप्तृ' इत्येव वक्तव्ये तृन्तृजिति भेदेनोपादानम् अर्वणस्तृ-व्यावृत्तये। यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिद्ध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम्। तेन 'अनिनस्मिन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति सिद्धमिति व्युत्पत्तिपक्षे तृन्नन्तत्वात् तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह— नियमार्थमिति। औणादिकानामन्येषां संज्ञा-शब्दानां मा भूदित्येतदर्थमित्यर्थः। धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवतीति तत्र दीर्घो भवत्येव। धातारौ, धातारः। अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृ-भ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम्। तेनेति। पितरौ, पितरः, भ्रातरौ, भ्रातरः—इत्यादौ दीर्घो नेत्यर्थः।

अत्र कौमुदीकृतां मते तृन्नन्तत्वात् तृजन्तत्वाद्वा सिद्धे व्युत्पत्तिपक्षे नप्त्रादि-ग्रहणं नियमार्थमिति। अयमाशयः —अस्मिन् सूत्रे तृन्तृजित्यंशस्य नियम्यत्वम्। नप्त्रादिसप्तकग्रहणस्य तु नियामकत्वम्। तत्र नियामकांशस्य उद्देश्यताऽवच्छेदकं रूपम्—उणादिनिष्पन्नतृन्तृजन्तनप्त्रादिसप्तकान्यतमाङ्गत्वम्। तद्व्यापकं रूपम्—उणादिनिष्पन्नतृन्तृजन्ताङ्गत्वम्। अप्तृन्तृजित्यस्य तृन्तृजंशे उद्देश्यताऽवच्छेदकं रूपम्—तृन्तृजन्ताङ्गत्वम्। तद्व्याप्यं रूपम्—उणादिनिष्पन्नतृन्तृजन्ताङ्गत्वम्। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन तृन्तृजन्ताङ्गत्वाऽवच्छिन्ने सङ्कोचे कृते सति—उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानामुपधादीर्घश्चेत्, तर्हि नप्त्रादिरूपसंज्ञा-शब्दानामन्यतमस्यैवेति पर्यवस्यति, तेन पितृ-भ्रातृप्रभृतीनां संज्ञाशब्दानां नोपधा-दीर्घः। उद्गातृशब्दस्य तु भवत्येवोपधादीर्घः —समर्थसूत्रे 'होता पोता नेष्टोद्गातारः' इति भाष्यप्रयोगात्।

उद्देश्यताऽवच्छेदकरूपग्रहणे पर्याप्तिर्नादर्तव्या इति पूर्वमुक्तमेव, तेन प्रकृते 'सम्बुद्धिभिन्नसर्वनामस्थानाव्यवहितपूर्वत्वविशिष्टतृन्तृजन्ततदाद्यन्तङ्गित्वम्, नियम्य-शास्त्रीयोद्देश्यताऽवच्छेदकं वाच्यम्। 'सम्बुद्धिभिन्नसर्वनामस्थानाव्यवहितपूर्वत्व-विशिष्टोणादिनिष्पन्नसंज्ञाशब्दात्मकतृन्तृजन्ता-तदादि-नप्त्रादिरूपान्ताङ्गावयवनिर्दि-श्यमाननप्त्रादिशब्दत्वम्' इत्यादिरूपं नियामकशास्त्रीयोद्देश्यताऽवच्छेदकं न वचनीयम्, निष्प्रयोजनत्वात्, सम्भवति लघौ गुरौ तदभावात्। भाष्यकृद्भिस्तु नप्तृग्रहणमेव नियामकमित्युक्तम्।

तेषामयमाशयः —ण्वुल्तृचाविति सूत्रे[१] तृचश्चकारो व्यर्थः। न च अप्तृन्नित्यत्र-विशेषणार्थः, तत्रापि तृ इत्येव सिद्धेः। न च तृ इत्युच्यमाने 'मातरौ, पितरौ' इत्यादौ 'दीर्घापत्तिस्तत्र तृप्रत्ययस्य निरनुबन्धकत्वादिति वाच्यम्, नप्तृग्रहणस्य योनि-

१. अष्टा० ३।१।१३३'।

सम्बन्धिवाचिनां चेदस्यैव नान्येषां योनिसम्बन्धिवाचिनामिति नियमादित्युक्तम्, भाष्यकृता ण्वुल्तृचाविति सूत्रे। नेष्टृप्रभृतिग्रहणं तु प्रपञ्चार्थमेव, तेषां 'तृन्'[1] इति सूत्रे भाष्ये साधितत्वात्। एवमुद्गातृशब्दस्याप्यौणादिकत्वमप्रामाणिकमेव।

अथ नियामकशास्त्रीयोद्देश्यताऽवच्छेदकं रूपम्—योनिसम्बन्धिवाचित्व-विशिष्ट-तृप्रत्ययान्ततदादित्वविशिष्टनप्तृशब्दान्ताङ्गत्वम्। तद्व्यापकं रूपम्—योनिसम्बन्धिवाचित्वविशिष्टतृप्रत्ययान्ततदादित्वविशिष्टान्ताङ्गत्वम्। 'तृ' इति नियम्यशास्त्रीयोद्देश्यताऽवच्छेदकं रूपम्—तृप्रत्ययान्ततदाद्यन्ताङ्गत्वम्। तद्व्याप्यं रूपम्—योनिसम्बन्धिवाचित्वविशिष्टतृप्रत्ययान्ततदाद्यन्ताङ्गत्वम्—उक्तमेव। तद्रूपावच्छिन्नातिरिक्तत्वेन तृप्रत्ययान्ततदाद्यन्ताङ्गत्वावच्छिन्ने सङ्कोचे कृते सति—योनिसम्बन्धिवाचिनां तृप्रत्ययान्तानां चेदुपधादीर्घस्तर्हि नप्तृशब्दस्यैव, तेन पितृ-भ्रातृ-प्रभृतीनां व्यावृत्तिः सिद्ध्यति।

## [ गतिकारकेतरपूर्वपदस्य यण् नेष्यते—अष्टा० ६।४।८२ वा० ]

'गतिकारकपूर्वपदस्यैव यण्' एषा भाष्यकारस्य इष्टिरस्ति। वार्तिकपदेनाप्येतदुच्यते—

"एरनेकाचोऽसंयोगपूर्वस्य"[2] इति नियम्यं सूत्रम्। अत्र 'अचिश्नुधातुभ्रुवाम्.....'[3] इत्यतः 'अचि' इति 'धातु' इति च पदमनुवर्तते। 'इणो यण्'[4] इत्यतो यण् इति पदमनुवृत्तम्। धातुपदमानृत्योभयोर्विशेषणं संयोगस्य अङ्गस्य च। तत्र संयोगस्य विशेषणादिह यण् सिध्यति—उन्न्यौ उन्न्यः इति। हरिम्, हरो इत्यादिसिद्धयर्थं धातोरङ्गविशेषणता। अन्यथा—प्रध्यम्, प्रध्य इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्यात्। अतश्च धात्ववयवकृतसंयोगपूर्वकत्वाभावविशिष्टेकारान्तधात्वन्ताङ्गावयवनिर्दिश्यमाने वर्णान्तधातुघटकान्त्यालरूपस्येवर्णस्य यण् स्यादजादौ प्रत्यये परतः। अत्राङ्गं द्विविधं भवितुमर्हति सपूर्वपदकम्, अपूर्वपदकं च। आद्यं यथा प्रध्यौ, प्रध्यः। द्वितीयं यथा निन्यतुः, निन्युः इत्यादि। नियामकं वचनम्—गतिकारकपूर्वपदस्यैवेति। तदीयोद्देश्यताऽवच्छेदकं रूपम्—गतिकारकान्यतरपूर्वपदकत्वविशिष्टं तादृशमङ्गत्वम्। तद्व्यापकं रूपम्—सपूर्वपदकत्वविशिष्टं तादृशमङ्गत्वम्। नियम्यसूत्रम्—एरनेकाच इति। तदीयोद्देश्यताऽवच्छेदकं रूपम्—सपूर्वपदकापूर्वपदकान्यतरत्वविशिष्टं तादृशमङ्गत्वम्। तद्व्याप्यं रूपम्—सपूर्वपदकत्वविशिष्टं तादृशमङ्गत्वम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन नियम्यसूत्रीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—सपूर्वपदकस्य तादृशस्य अङ्गस्य चेत्तर्हि गतिकारकान्यतरपूर्वपदकस्यैव। तेन शुद्धा धीर्यस्येति विग्रहे शुद्धधियौ, शुद्धधिय इत्यादौ यण्व्यावृत्तिः सिद्धयति।

---

१. अष्टा० ३।२।१३५;     २. तदेव—६।४।८२;     ३. तदेव—६।४।७७।
४. तदेव—६।४।८१।

## [ ब्रह्म-भ्रूण-वृत्रेषु क्विप्—अष्टा० ३।२।८७ ]

एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात्। ब्रह्महा, भ्रूणहा, वृत्रहा। 'क्विप् च'[1] इत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेव, इति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेवेति द्विविधो नियम इति भाष्यम्। अत्र तत्त्वबोधिनीव्याख्या—

चतुर्विध इति। अयमाशयः—इह सूत्रे श्रुतत्वात् पूर्वं ब्रह्मादय उद्देश्यास्ततोऽनन्तरं प्रकृतित्वाद् हन्तिः, ततः परिशेषाद् भूत इति। क्विप् तु सर्वान्ते निर्देष्टव्यः। विधेयत्वात्। तदेवं वचनव्यक्तिः। ब्रह्मादिषूपपदेषु हन्तेर्भूते क्विबिति। एवं स्थिते यत्रैवकारस्ततोऽन्यत्र नियम इति न्यायेन नियमोऽत्र भवन्ननन्तरे भवति। ततश्च ब्रह्मादिष्वेवेत्यवधारणे हन्तेस्तदनन्तरं निर्दिष्टत्वादुपपदान्तरसम्बन्धनिवृत्तिफलको नियमो भवति। ब्रह्मादिषु हन्तेरेव भूते इत्यवधारणे त्वनन्तरत्वाद् विशेषेऽपि प्राथम्यादुपपदनियमो धात्वन्तरनिवृत्तिफलकः। 'ब्रह्मादिषु हन्तेर्भूत एव क्विप्' इत्यवधारणे तु क्विब्हन्त्योरानन्तर्येऽविशिष्टेऽपि प्राधान्यात् कालान्तरसम्बन्धनिवृत्तिफलकः प्रत्ययनियमः। ब्रह्मादिषु हन्तेर्भूते क्विबेवेति वचनव्यक्तौ प्रत्ययान्तरसम्बन्धनिवृत्तिफलकः कालनियमः। सोऽयं प्रकृत्युपपदप्रत्ययकालनियमानां विवेकः। अगृह्यमाणविशेषात्तु चतुर्विधस्यापीह ग्रहणम्। तत्र ब्रह्मादिष्वेव हन्तेरिति प्रकृतिनियमे भूत इत्याश्रयणाद् वर्तमानकाले भविष्यत्काले चोपपदान्तरेऽपि भवत्येव। पुरुषं हन्ति, हनिष्यति वा पुरुषहा। अरिहयोरिहयोगविचक्षणः। अरीन् हन्ति इति अरिहा स चासौ योगश्च अरिहयोगस्तत्र विचक्षण इत्यर्थः। प्रकृतिनियमफलं तु पुरुषं हतवान् पुरुषहा इति भूतार्थे प्रयोगाभावः। ब्रह्मादिषु हन्तेरेवेत्युपपदनियमेऽपि भूत इत्याश्रयणाद् वर्तमानभविष्यत्कालयोर्धात्वन्तरादपि भवत्येव। वृत्रं जयति, जेष्यति वा वृत्रजिदिति। उपपदनियमफलं तु वृत्रं जितवान् वृत्रजिदिति प्रयोगाभावः। भूत एव क्विबिति प्रत्ययनियमेऽपि ब्रह्मादिष्विवरयुक्तेरुपपदान्तरे वर्तमानभविष्यत्कालयोर्हन्तेः क्विब् भवत्येव। पुरुषं हन्ति हनिष्यति वा पुरुषहा, अरिहेति प्राग्वत्। प्रत्ययनियमफलं तु ब्रह्माणं हन्ति ब्रह्महेत्यादिप्रयोगाभावः। भूते क्विबेवेति कालनियमेऽपि ब्रह्मादिष्विवरयुक्तेरुपपदान्तरे भूतेऽपि प्रत्ययान्तरं भवत्येव। पितृव्यं हतवान् पितृव्यघाती। इह 'कर्मणि हनः'[2] इति भूते णिनिः। कालनियमफलं तु 'ब्रह्माणं हतवान् ब्रह्मघाती' इति प्रयोगाभावः। सोपपदश्च प्रत्ययो नियमेन व्यावर्त्यते, निष्ठा तु भवत्येव, वृत्रं हतवानिति। भाष्यकारस्तु—प्रकृति-कालनियमावेवाशिश्रियत्। तस्यायमाशयः—धातु-कालौ हि नेह सूत्रे श्रुतौ; किन्तु प्रकरणलक्षणजघन्यप्रमाणेनोपस्थितौ। अतस्तयोरेवोपरोधो

---

१. अष्टा० ३।२।७६;   २. तदेव—३।२।८६।

न्याय्यः, न तु उपपदप्रत्यययोः, श्रुत्युपस्थापितत्वात्। एवं न्यायोपष्टब्धेन भाष्येण सह विरोधाद्वृत्तिमतमुपेक्ष्यमेवेति कैयटे स्थितम्। यस्त्विह हरदत्तेनोक्तंधातूपपदविषयं नियमद्वयं भाष्ये प्रदर्शितमिति, तत्र धातुकालविषयमिति वक्तव्ये उपपदग्रहणं प्रामादिकमित्यवधेयमिति तत्त्वबोधिनीव्याख्या।

अत्र सिद्धान्तभूतभाष्यकारमतमाश्रित्य नियामक-नियम्यशास्त्रयोरुद्देश्यताऽवच्छेदकधर्म-तद्व्याप्य-व्यापकधर्मयोश्च विचारः क्रियते। तत्र कर्मवाचकब्रह्माद्युपपदकभूतकालिकक्रियार्थकहन्धातुत्वम् उद्देश्यताऽवच्छेदकम्—'ब्रह्म-भ्रूण-वृत्रेषु क्विप्' इति नियामकसूत्रस्य। तद्व्यापकरूपम्-कर्मवाचकोपपदकभूतकालिकक्रियार्थकहन्धातुत्वम्। 'क्विप् च'[1] इति नियम्यसूत्रीयमुद्देश्यताऽवच्छेदकं रूपम्—सोपपदकधातुवृत्तिधातुत्वम्। तद्व्याप्यं रूपम् — कर्मवाचकोपपदकभूतकालिकक्रियार्थकहन्धातुत्वम्। एतद्रूपाऽवच्छिन्नाऽतिरिक्तत्वेन सोपपदकधातुत्वाऽवच्छिन्ने सङ्कोचे कृते सति कर्मवाचकोपपदकभूतकालिकक्रियार्थकहन्धातोश्चेत् क्विप् प्रत्ययस्तर्हि कर्मवाचकब्रह्माद्युपपदकभूतकालिकक्रियार्थकहन्धातोरेव—इति फलति। ततश्च पुरुषं हतवान् इति पुरुषहा इति न भवति। पुरुषं हन्ति इति पुरुषहा इति भवत्येव। काशिकामतेऽपि नियम्यनियामकसूत्रयोरुद्देश्यताऽवच्छेदकधर्मयोर्व्याप्यव्यापकरूपस्य विचारो भाष्यकारीयरीत्येव कार्यः। परन्तु ब्रह्मादिष्वेव, हन्तेरेव, भूत एव, क्विबेव—इत्येवं चतुर्ष्वपि अंशेषु अवधारणं विचार्यम्। भाष्यमते — हन्तेश्चेत् क्विप्, वृत्रादिषूपपदेष्वेव इति प्रकृतिनियमतात्पर्यम्। 'ब्रह्माद्युपपदकभूतकालिकक्रियार्थकहन्धातोरेव' इत्यस्य पर्यवसानं 'हन्तेश्चेत् ब्रह्मादिषूपपदेष्वेव' इत्यत्रैव भविष्यति—इति कृत्वा प्रकृतिनियमनमेतदिति मन्तव्यम्।

'भूते' इति कालनियमस्वरूपं तु 'भूते क्विबेव' इत्येवं मन्तव्यम्। यत एवकारस्ततोऽन्यत्र नियम इति सिद्धान्तात्। एवं च 'ब्रह्मादिषूपपदेषु हन्तेर्भूते प्रत्ययश्चेत् तर्हि क्विबेव' इत्येवं रीत्या विधेयदले एवकारो योजनीयः। तत्र च पाक्षिकनियमस्वरूपं भवति, न तु परिसंख्यारूपम्। अतश्च व्याप्यव्यापकभावविचारस्य नास्त्यावश्यकता। एतन्नियमफलं तु ब्रह्माणं हतवान् 'ब्रह्मघातो' इति 'कर्मणि हनः'[2] इत्यनेन णिनिप्रत्ययाभावो बोध्यः।

## [ सुकर्मपापमन्त्रपुण्येषु कृञः—अष्टा० ३।२।८९ ]

सौ कर्मादिषु च कृञः क्विप् स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्, कर्मकृत्, पापकृत्, मन्त्रकृत्, पुण्यकृत्। क्विबेवेति नियमात् कर्म कृतवानित्यत्र अण् न। कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः, अत्र न

---

१. अष्टा० ३।२।७६ ; २. तदेव—३।२।८६।

क्विप्। भूत एवेति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावान्यस्मिन्नुपपदे क्विप्। शास्त्रकृत्, भाष्यकृत्। अत्र तत्त्वबोधिनीव्याख्या—त्रिविध इति—धातुनियमस्त्विह नेष्यत इति भावः। क्विबेवेतीति। भूते क्विबेवेति प्रत्ययान्तरसम्बन्धनिवृत्तिफलककालनियमादित्यर्थः। कृञ एवेतीति। सुकर्मादिषु कृञ एवेति धात्वन्तरसम्बन्धनिवृत्तिफलकोपपदनियमादित्यर्थः। भूत एवेतीति। भूत एव क्विबिति कालान्तरसम्बन्धनिवृत्तिफलकप्रत्ययनियमादित्यर्थः। स्वादिष्वेवेतीति। स्वादिष्वेव कृञ इत्युपपदान्तरसम्बन्धनिवृत्तिफलकधातुनियमाभावादित्यर्थ इति।

भाष्यकारीयदृष्ट्या तु 'भूत एव क्विप्' 'भूते क्विबेव' इति काल-प्रत्ययविषयकं नियमद्वयमेवेष्यते। तद्व्यावृत्तिफलं तु मूले उक्तमेव।

## [ सोमे सुञः—अष्टा० ३।२।९० ]

सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि। अत्र तत्त्वबोधिनीव्याख्या—

सोमे सुञः—इहापि चतुर्विधो नियम इति वृत्तिः। एवमुत्तरसूत्रेऽपि। तत्र भूतकालस्य क्विपि नियतत्वात् सोमं सुतवान् सोमसावः, अग्निं चितवान् अग्निचाय इत्यण् न भवति। सुनोतेः सोम इवोपपदे नियतत्वात्, चिनोतेस्तु अग्नावेवोपपदे नियतत्वात्। सुरां सुतवान् सुरासुत्, इष्टकाश्चितवान् इष्टकाचिदिति न भवति, किन्तु सुरासावः, इष्टकाचाय इत्यणेव भवति। सोमस्य सुनोतावेव धातोर्नियतत्वात्, अग्नेस्तु चिनोतावेव नियतत्वात्। सोमं क्रीतवान् सोमक्रीः, अग्निं भृतवान् अग्निभृद् इति क्विप् न भवति, किन्तु सोमक्रायः, अग्निभार इत्यणेव भवति। भूत एव क्विपो नियतत्वात् सोमं सुनोति सोष्यति वेत्यर्थे क्विप् न भवति। तथा अग्निं चिनोति चेष्यति वेत्यर्थे क्विबभावः, किन्त्वणेव।

भाष्यकारीयदृष्ट्या तु कालनियमः प्रत्ययनियम इति नियमद्वयमेवोक्तसूत्रद्वये आश्रयणीयम्। तथा हि—सोमरूपकर्मवाचकपदोपपदे सति सुञ्धातोः क्विप्प्रत्ययश्चेत्तर्हि भूतार्थकसुञ एव, अर्थात् सुञ्धात्वर्थे भूत एव। ततश्च सोमं सुनोति सोष्यति वा इत्यर्थे क्विपो व्यावृत्तिः सिद्ध्यति। एषा प्रत्ययनियमव्यवस्था बोध्या। अथ च 'तादृशसुञ्धातोर्भूते प्रत्ययश्चेत्तर्हि क्विबेव' इति कालनियमो द्रष्टव्यः। अतश्च सोमं सुतवान् इत्यत्र अण्प्रत्ययो न भवति।

अत्रेदं बोध्यम्—'सुकर्मपापमन्त्रपुण्येषु कृञः' इति सूत्रे त्रिविधो नियमः स्वीकृतः काशिकाकृता। तत्र स्वादिष्वेवेत्येवमाश्रित्य धातुनियमाभाव उक्तः,

तत्फलं च शास्त्रं कृतवान् शास्त्रकृत्, भाष्यं कृतवान् भाष्यकृदित्यादिप्रयोगाणां सिद्धिरित्युक्तम्। परन्तु इदं नातीव रोचते, 'शास्त्रं करोति' इति विग्रहे शास्त्रकृदित्यादि साधयितुं शक्यमेव, वर्तमानत्वस्याविवक्षायामर्थतो भूतत्वबोधः। अतश्च चतुर्विधो नियमोऽत्रापि स्वीकर्तुं शक्यते। अदसीयमुद्देश्यताऽवच्छेदकं रूपम्—स्वाद्युपपदक-भूतार्थककृञ्धातुत्वम्। तद्व्यापकं रूपम्—कर्मवाचकपदोपपदक-भूतार्थककृञ्धातुत्वम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन 'क्विप् च' इति सूत्रीयोद्देश्यताऽवच्छेदकावच्छिन्ने सोपपदक-धातुत्वावच्छिन्ने सङ्कोचे कृते सति चतुर्विध-नियमसिद्धिर्निराबाधा।

## [ इजादेः सनुमः—अष्टा० ८।४।३२ ]

सनुमश्चेद् भवति, तर्हि इजादेर्हलन्ताद् विहितो यः कृत् तत्स्थस्यैव। प्रेङ्खणीयम्। इजादेः किम्—'मगि सर्पणे' प्रमङ्गनीयम्। नुम्ग्रहणमनुस्वारोपलक्षणार्थम्। अट्कुप्वाङिति सूत्रेऽप्येवम्। तेनेह न। प्रेन्वनम्। इह तु स्यादेव—प्रोम्भणम्। अत्र तत्त्वबोधिनी—इजादेः सनुमः—'कृत्यचः' इत्येव सिद्धे नियमार्थमिदमित्याह—सनुमश्चेदित्यादि। इह हल इत्यनुवृत्तं तदन्तपरम्, न तु तदादिपरम्। इजादेर्हलादित्वासम्भवात्तदाह—हलन्तादिति। विहित इति। यदि तु विहितविशेषणं न व्याख्यायेत, तर्हि नियमार्थता न लभ्येत, णिजन्ताद् विहितस्यापि कृत्स्थनकारस्य णिलोपे कृते हलन्तात् परत्वेन 'णेर्विभाषा' इति विकल्पं बाधितुं विधेः सम्भवात्। इष्टापत्तौ तु अणिजन्तप्रकृतिकानीयरप्रत्ययान्तं प्रेङ्खणीयमित्याद्युदाहरणं न स्यात्; किन्तु णिजन्तप्रकृतिकमेवोदाहरणं स्यात्। किं चास्य सूत्रस्य नियमार्थत्वाभावात् प्रमङ्गनीयमित्यत्र 'कृत्यचः' इत्यनेन णत्वं स्यात्, अतो विहितविशेषणमवश्यं स्वीकार्यमिति दिक्।

अत्र नियामकनियम्यसूत्रयोरुद्देश्यताऽवच्छेदकधर्मयोस्तदीयव्यापकव्याप्यधर्मयोश्च विचारो विधीयते।

तत्र नियम्यं सूत्रम् -'कृत्यचः' इति। तदीयोद्देश्यतावच्छेदकधर्मः—उपसर्गस्थनिमित्ताव्यवहितपरोऽचः परो धातुविहितकृत्प्रत्ययघटको यो नकारस्तद्वृत्तिनत्वम्। नियामकं सूत्रमस्ति—'इजादेः सनुमः'। तदीयोद्देश्यताऽवच्छेदको धर्मः—उपसर्गस्थनिमित्तात् परोऽचः परः सनुम्कैजादिहलन्तधातुविहितकृत्प्रत्ययघटको यो नकारस्तद्वृत्तिनत्वम्। अदसीयो व्यापको धर्मः—उपसर्गस्थनिमित्तात् परः, अचः परः सनुम्कधातुविहितकृत्प्रत्ययघटको यो नकारस्तद्वृत्तिनत्वम्। अयं धर्मो नियम्यसूत्रीयोद्देश्यताऽ-

वच्छेदकधर्मस्य व्याप्योऽप्यस्ति। अत एतद्धर्मावच्छिन्नातिरिक्तत्वेन नियम्यसूत्रोयोद्देश्यताऽवच्छेदकावच्छिन्ने सङ्कोचे कृते सति 'प्रमङ्गनीयम्' इत्यादौ व्यावृत्तिः सिद्धा प्रेङ्खणीयमित्युदाहरणं च सम्पन्नम्।

अपर्याप्तधर्मस्योद्देश्यताऽवच्छेदकतया ग्रहणे तु—नियामकसूत्रस्योद्देश्यताऽवच्छेदको धर्मः सनुम्केजादिहलन्तधातुत्वम्। तद्व्यापको धर्मः सनुम्कधातुत्वम्। नियम्यसूत्रोयोद्देश्यताऽवच्छेदकं सनुम्कानुम्कान्यतरधातुगतं धातुत्वम्। तद्व्याप्यो धर्मः — सनुम्कधातुत्वम्। तदवच्छिन्नातिरिक्तत्वेन सङ्कोचे कृते सतीष्टसिद्धिर्निराबाधा।

एवं च—उपसर्गस्थान्निमित्तात् परोऽचश्च परः सनुम्केजादिहलन्ताद्धातोः परत्वविशिष्टकृत्प्रत्ययघटको यो नकारस्तस्य णत्वं भवेच्चेत्, तर्हि—उपसर्गस्थान्निमित्तात्परः अचः परो यः सनुम्केजादिहलन्तधातुविहितकृत्प्रत्ययघटको नकारस्तस्यैव। तेन मगि सर्पणे इत्यस्मात्प्रोपसृष्टादनीयर्प्रत्यये सति प्रमङ्गनीयमित्यत्र णत्वाभावः सिद्धः।

## [ अन उपधालोपिनोऽन्यतरस्याम्—अष्टा० ४।१।२८ ]

निषेध डापोर्वचनसामर्थ्यात् पर्याये सिद्धे डाबुभाभ्यामित्यत्रान्यतरस्यां ग्रहणं किमर्थमिति चेदुच्यते—योगविभागार्थम्, तत्र मनः इति निवृत्तम्, अनो बहुव्रीहेर्डीप् चानुवर्तनीयम्। एवं चानो बहुव्रीहेर्डीब्वा स्यादित्यर्थः। अथ च पूर्वेणैव डापि सिद्धे पुनर्विधानमिदम् ऋन्नेभ्य इति ङीपा सह विकल्पार्थम्।

अन उपधालोपिन इति सूत्रं तु नियमार्थम्। अनो योऽसौ विकल्पः स उपधालोपिन एवेति। एवं च बहुधीवर्यौ, बहुधीवानौ, बहुधीवेति रूपत्रयं सिद्धमिति बहुव्रीहौ वा इति नापूर्वं वचनमिति। नियमस्य फलं तु सुपर्वा चारुपर्वा इत्यादावनुपधालोपिनि ङीप् न भवति, किन्तु डाप्निषेधावेव भवतः। अयं च योगविभागोऽवश्यमभ्युपेयः। अन्यथा बहुधीवरीत्यत्र प्रकरणान्तरस्थेन अन उपधालोपिन इति हि वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि ऋन्नेभ्य इति प्राप्तं ङीपमनूद्य तत्सन्नियोगेन विधीयमानो यो 'वनो र च' इति रेफः, स न सिद्ध्येत्। ननु 'वनो र च' इति सूत्रमेव ङीब्रौ विधत्तामिति चेत्, न, उभयविधौ गौरवात्। किञ्च उभयविधायकत्वेऽपि अनो बहुव्रीहेरित्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः, सन्नियोगशिष्टत्वात्। भाष्ये तु अनो बहुव्रीहेरित्यस्यानन्तरम् "उपधालोपिनो वा" इति सूत्रमस्तु, अन उपधा इति प्रदेशान्तरस्थं सूत्रं डाप्सूत्रे च अन्यतरस्यां ग्रहणं च मास्त्वित्युक्तम्।

अत्र नियम्यनियामकसूत्रयोरुद्देश्यताऽवच्छेदकधर्मविचारः, तदीयव्याप्यव्यापकधर्मस्य च विचारः क्रियते। तत्र नियामकं सूत्रम्—'उपधालोपिनो वा' इति। अत्र 'बहुव्रीहेरुधसो ङीष्' इत्यतो बहुव्रीहिग्रहणम्, 'संख्याव्ययादेर्ङीप्' इत्यतो ङीप् चानुवर्तते। अतश्च अन्नन्ताद् बहुव्रीहेरुपधालोपिनो वा ङीप् स्यादित्यर्थः सम्पद्यते। एवं च उपधालोपित्वविशिष्टमन्नन्तबहुव्रीहित्वमदसीयमुद्देश्यताऽवच्छेदकं रूपम्। नियम्यं तु सूत्रद्वयम्—डाबुभाभ्यामन्यतरस्यामित्यत्र विभक्तो योगः अन्यतरस्यामिति। तस्यार्थः अन्नन्ताद् बहुव्रीहेर्डाब्वा स्यात्। डाबुभाभ्यामिति पूर्वेण डापि सिद्धे पुनर्विधानमिदम्—ऋन्नेभ्य इति ङीपा सह विकल्पार्थम्। अतश्चैतत्सूत्रद्वयीयमुद्देश्यताऽवच्छेदकम् अन्नन्तबहुव्रीहित्वम्, नान्तप्रातिपदिकत्वम्—एतदन्यतरत्। तत्रोपधालोपित्वविशिष्टान्नन्तबहुव्रीहित्वरूपस्य नियामकसूत्रीयोद्देश्यताऽवच्छेदकस्य व्यापकं रूपम् –अन्नन्तबहुव्रीहित्वम्। नियम्यसूत्रद्वयीयस्योक्तस्यान्यतरस्योद्देश्यताऽवच्छेदकस्य व्याप्यं रूपम्, एतद् अन्नन्तबहुव्रीहित्वं ग्राह्यम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन उक्तान्यतरोद्देश्यताऽवच्छेदकावच्छिन्ने सङ्कोचे कृते सति अन्नन्ताद् बहुव्रीहेः स्त्रीत्वविवक्षायां ङीष् विकल्पश्चेत्, तर्हि अन्नन्तबहुव्रीहेरुपधालोपिन एव। तेन सुपर्वा, चारुपर्वा इत्यादौ अनुपधालोपिनि ङीबभावः सिद्धः। तत्र डाब्निषेधावेव भवतः।

## जानपदकुण्डगोणस्थल···(अष्टा० ४।१।४२) इत्यादि-सूत्रे अमत्रग्रहणम्

अमत्रे हि स्त्रीविषयत्वाभावादप्राप्तो ङीष् विधीयते, न तु नियम्यते। वस्तुतस्तु–'पिठरं तु न ना कुण्डम्' इति विश्वकोशात् कुण्डशब्दस्य स्त्रीविषयत्वाभावः स्फुट एव, कमण्डलुसंस्थानस्यानुगतत्वात् तद्रूपाऽमत्रवाचिनः कुण्डशब्दस्य पशुवृक्षादिवज्जातिवाचित्वमस्त्येव, अतः सूत्रान्तरेणैव ङीषि सिद्धे इदं नियमार्थमिति, तेन अमृते जारजायां कुण्डेत्येवेति। एवं च अस्यांशस्योद्देश्यताऽवच्छेदकं रूपम्—अमत्रार्थकास्त्रीविषयककुण्डशब्दत्वम्। तद्व्यापकं रूपम्—अस्त्रीविषयकानुगतसंस्थानवज्जातिवाचकादन्तकुण्डशब्दत्वम्। नियम्यं शास्त्रम्—'जातेरस्त्रीविषयादयोपधात्'। तदीयोद्देश्यताऽवच्छेदकं रूपम्—अस्त्रीविषयकजातिवाचकायोपधादन्तप्रातिपदिकत्वम्। एतद्व्याप्यं रूपम्—अस्त्रीविषयकानुगतसंस्थानवज्जातिवाचकादन्तकुण्डशब्दत्वम्। अतश्च—अस्त्रीविषयकानुगतसंस्थानवज्जातिवाचकादन्तकुण्डशब्दत्वाऽवच्छिन्नातिरिक्तत्वेन जातेरस्त्रीत्यस्योद्देश्यताऽवच्छेदकावच्छिन्ने सङ्कोचे कृते सति अस्त्रीविषयकानुगतसंस्थानवज्जातिवाचकादन्तकुण्डशब्दाच्चेत् ङीष्प्रत्ययस्तर्हि अमत्रार्थंकास्त्रीविषयकादन्तकुण्डशब्दादेव। तेन जारजायां कुण्डा इत्येव। यदि तु—'कुण्डी कमण्डलौ जारात् पतिपत्नीसुते पुमान्' इति मेदिनीकोशात् कमण्डलुरूपेऽमत्रे नित्य-

स्त्रीत्वं विज्ञायते, तदा जातेरस्त्रीत्यनेनाप्राप्तो ङीष् विधीयते, न तु नियम्यते। नियामकत्वं तु—'पिठरं तु न ना कुण्डम्' इति कोशमनुसृत्य नियतस्त्रीत्वाभावाद् बोध्यम्।

## [ वोतो गुणवचनात्—अष्टा० ४।१।४४ ]

अत्र सूत्रे उतो ग्रहणाभावे शुचिरित्यत्र ङीष्प्रत्यय आपद्येत। 'खरुसंयोगोपधान्न' इति वार्तिकसामर्थ्येनात्र सूत्रेऽत इत्यस्यानुवृत्तिर्न भवतीति बोध्यते। शुचिशब्दे शुच्धातोरौणादिकः किन्प्रत्ययः। उणादीनामव्युत्पत्तिपक्षं स्वीकृत्य 'कृदिकारादक्तिनः' इत्यस्यात्र प्रवृत्त्यभावो बोध्यः। शब्देन्दुशेखरे तु शुक्लेति प्रत्युदाहरणमुचितमिति प्रोक्तम्, संयोगोपधादिति निषेधस्तु खरुपदसाहचर्येणोकारान्त एव। अथवा 'पीता' इत्यस्य प्रत्युदाहरणत्वं बोध्यम्। यदि तु—अस्यां स्थितौ 'शोणात् प्राचाम्' इत्यस्य नियामकत्वमुक्तम्—अदन्ताद् गुणवाचिनश्चेत् शोणशब्दादेव, तदा तु 'हरित्' इत्यस्य प्रत्युदाहरणत्वं मन्तव्यम्। अत्र प्रसङ्गेन शोणात् प्राचामित्यस्य नियामकत्वपक्षे नियम्यनियामकशास्त्रयोरुद्देश्यताऽवच्छेदकं किम्, तद्व्यापकं व्याप्यं च रूपं किम्? इति विचार्यते। तत्र नियामकसूत्रीयमुद्देश्यताऽवच्छेदकम्—गुणवाच्यदन्तशोणशब्दत्वम्, तद्व्यापकं रूपम्—गुणवाचकादन्तशब्दत्वम्। नियम्यसूत्रमस्ति—'वोतो गुणवचनात्'। उत इत्यस्याभावे तदीयमुद्देश्यताऽवच्छेदकं रूपम्—अदन्तादिसाधारणगुणवाचकत्वम्। तद्व्याप्यं रूपम्—गुणवाचकादन्तशब्दत्वम्। तत्र गुणवाचकादन्तशब्दत्वाऽवच्छिन्नातिरिक्तत्वेन अदन्तादिसाधारणगुणवाचकत्वाऽवच्छिन्ने सङ्कोचे सति गुणवाचकादन्तशब्दाच्चेत् ङीष्प्रत्ययः, तर्हि गुणवाच्यदन्तशोणशब्दादेवेति बोध्यताम्।

## [ गद-मद-चर-यमश्चानुपसर्गे—अष्टा० ७।१।६६ ]

इदं सूत्रं यत्प्रत्ययं विदधाति। तत्र यमधातोः पोरदुपधादित्येव यत्प्रत्ययः सिद्धः। अतश्चायं यमांशे नियामकम्। तत्रादसीयमुद्देश्यताऽवच्छेदकम्—अनुपसृष्टयमधातुत्वम्। तद्व्यापकं रूपम्—यम्धातुत्वम्। पोरदुपधादित्यस्य नियम्यं सूत्रम्—तदीयोद्देश्यतावच्छेदकम्—अदुपधकत्वविशिष्टपवर्गान्तधातुत्वम्। तद्व्याप्यं रूपम्—यम्धातुत्वम्। एवं च मध्यपातियमधातुत्वावच्छिन्नातिरिक्तत्वेन अदुपधकपवर्गान्तधातुत्वावच्छिन्ने सङ्कोचे कृते सति यम्धातोश्चेद् यत्प्रत्ययस्तर्हि अनुपसृष्टयमधातोरेवेति फलति, एवं च प्रयन्तुं योग्यं प्रयाम्यमित्यत्र यत्प्रत्ययो न भवति, अपि तु हलन्तत्वाद् ण्यद् भवति।

## [ एहि मन्ये प्रहासे लृट्—अष्टा० ८।१।४६ ]

एहि मन्ये इत्यनेन युक्तं लृडन्तं नानुदात्तं क्रीडायाम्। एहि मन्ये भक्तं भोक्ष्यसे, भुक्तं तत्त्वतिथिभिः। प्रहासे किम्—एहि मन्यसे, ओदनं भोक्ष्ये इति सुष्ठु मन्यसे। गत्यर्थलोटा लृडित्यनेनैव सिद्धे नियमार्थोऽयमारम्भः, एहि मन्ये युक्ते प्रहासे एव नान्यत्र, एहि मन्यसे ओदनं भोक्ष्ये। अत्र 'गत्यर्थलोटा लृण चेत् कारकं सर्वान्यत्' इति सूत्रेणैव अनुदात्तनिषेधे सिद्धे इदं सूत्रं नियमार्थम्। तत्रादसीयोद्देश्यताऽवच्छेदकधर्मः—एहि मन्ये इत्येतद्योगविशिष्टप्रहासद्योतकत्वविशिष्ट-लृडन्त-तदादित्वम्। तद्व्यापको धर्मः—एहि मन्ये इत्येतद्योगविशिष्टलृडन्ततदादित्वम्। गत्यर्थलोटा लृडित्यस्योद्देश्यताऽवच्छेदको धर्मः—गत्यर्थलोटा युक्तत्वविशिष्टं लृडन्त-तदादित्वम्। तद्व्याप्यं रूपम्—एहि मन्ये इत्येतद्योगविशिष्टलृडन्ततदादित्वम्। एतन्मध्यपातिरूपाऽवच्छिन्नातिरिक्तत्वेन 'गत्यर्थलोटा युक्तत्वविशिष्टलृडन्ततदादित्वाऽवच्छिन्ने सङ्कोचे कृते सति—एहि मन्यसे, ओदनं भोक्ष्ये इति सुष्ठु मन्यसे, इत्यत्र प्रहासाभावात् (यथार्थकथनात्) एतन्निषेधाभावः सिद्ध्यति।

## [ यद्धितुपरं छन्दसि—अष्टा० ८।१।५६ ]

यद्धितुपरं तिङन्तं नानुदात्तम्—उदसृजो यदङ्गिरः। उशन्ति हि। आख्यास्यामि तु ते। निपातैर्यद्यदीति, हि चेति, तु पश्येति च सिद्धे नियमार्थमिदम्। एतदीयमुद्देश्यताऽवच्छेदकं रूपम्—यद्-हि-तु एतच्छब्दत्रयान्यतमपरत्वविशिष्टं तिङन्त-तदादित्वम्। तद्व्यापकं रूपम्—एतच्छब्दत्रितययोगविशिष्टं तिङन्ततदादित्वम्।

नियम्यं शास्त्रम् — निपातैर्यदिति, हि चेति, तु पश्य पश्यतेति चैतत्त्रयम्। तदीयोद्देश्यताऽवच्छेदकं रूपम्—निपातसंज्ञकयदित्यादिना, हि इत्ययेन, तु पश्य पश्यतेत्यादिना च युक्तं यत्तिङन्तं तदादि, तद्गतं तत्त्वम्। तद्व्याप्यं रूपम्—यद्-हि-तु एतच्छब्दत्रितयान्यतमयोगविशिष्टं तिङन्ततदादित्वम्। एतन्मध्यपातिरूपाऽवच्छिन्नातिरिक्तत्वेन नियम्यसूत्रत्रयीयान्यतमोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति 'एतैरेव परभूतैर्योगे नान्यैरिति' फलितं भवति, अतश्च 'जाये स्वा रोहावेहि'—अत्र रुहेर्लोट्, वस्, शप्, 'आडुत्तमस्य पिच्च', 'लोटो लङ्वदिति' लङ्वद्भावात् 'नित्यं ङितः' इति सलोपः। आङ्पूर्वादिणो लोट्, सिपो हिः, एहि-एतेन परभूतेन युक्तस्य रोहावेत्यस्य लोट् चेति प्राप्तो निघातप्रतिषेधो नियमान्निवर्त्यते, तेन स्वःशब्दाश्रयो निघातो भवति, एहि इति गत्यर्थलोटा युक्तस्य लोडन्तस्य निघातो भवति।

## [ आशिषि नाथ इति वाच्यम्—अष्टा० ७।४।६१ ]

आशीरर्थे नाथतेरात्मनेपदं स्यात्—इत्यर्थकेनानेन वार्तिकेनात्मनेपदं विधीयते। तत्र नाथृधातोर्घटकस्य यकारोत्तरस्य ऋकारस्यानुदात्तस्य उपदेशोऽजनुनासिक इदित्यनेनेत्संज्ञायां नाथेरनुदात्तेत्त्वसम्पत्त्या 'अनुदात्तङित आत्मनेपदम्' इत्यनेन आत्मनेपदस्य सिद्धौ इदं वार्तिकमात्मनेपदस्य नियामकम्। नाथतेरात्मनेपदं चेत्, तर्हि आशिष्येव, तेन याच्ञादौ न, अतस्तत्र नाथति इत्येव।

नियामकशास्त्रीयोद्देश्यताऽवच्छेदकं रूपम्—आशीरूपेऽर्थे वर्तमानानुदात्तेत्त्वविशिष्टनाथधातुत्वम्। तद्व्यापकं रूपम्—याच्ञाद्यर्थेषु वर्तमानानुदात्तेत्त्वविशिष्टनाथधातुत्वम्। नियम्यं सूत्रमस्ति—"अनुदात्तङित आत्मनेपदम्"। तदीयोद्देश्यताऽवच्छेदकं रूपम्—अनुदात्तेत्त्वविशिष्टधातुत्वम्, औपदेशिकङिदन्तधातुत्वम्—एतदन्यतरत्। तद्व्याप्यं रूपम्—याच्ञाद्यर्थकानुदात्तेत्त्वविशिष्टनाथधातुत्वम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन उक्ताऽन्यतराऽवच्छिन्ने सङ्कोचे कृते सति आशिष्यर्थे एव नाथतेरात्मनेपदं फलति।

## [ युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः, प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च—अष्टा० १।४।१०५, १०६ ]

आभ्यां सूत्राभ्यां तत्र तत्र निमित्ते मध्यमो विधीयते। मध्यमसंज्ञा च 'सिप्-थस्-थ' 'थास्-आथाम्-ध्वम्' इत्येतेषां प्रत्ययानाम्। तेषां च विधानम्—"तिप्-तस्-झि" इति सूत्रेण सिद्धमेव, अतो मध्यमविधायकमिदं सूत्रद्वयं नियामकत्वेन ग्रहीतुं युज्यते। एतदीयोद्देश्यताऽवच्छेदकरूपम्—

प्रयुज्यमानाप्रयुज्यमानान्यतरत्वविशिष्ट-समानाधिकरणयुष्मदुपपदकत्वविशिष्टधातुत्वम्। प्रहासाभिव्यञ्जकमन्योपपदकधातुत्वम्—इत्येतदन्यतरत्। तद्व्यापकं रूपम्—युष्मदुपपदकत्वविशिष्टधातुत्वम्, मन्योपपदकत्वविशिष्टधातुत्वम्—एतदन्यतरत्। नियम्यं सूत्रमस्ति—तिप्तस्झि इत्यादि। तदीयोद्देश्यताऽवच्छेदकं रूपम्—सामान्येन धातुत्वम्। तद्व्याप्यं रूपम्—उक्तान्यतरदेव। तादृशमध्यपातिरूपाऽवच्छिन्नातिरिक्तत्वेन धातुत्वाऽवच्छिन्ने सङ्कोचे कृते सति—युष्मदुपपदकत्वविशिष्टधातुत्व-मन्योपपदकत्वविशिष्टधातुत्वेत्येतदन्यतरावच्छिन्नाद् धातोश्चेद् मध्यमस्तर्हि उक्तसूत्रद्वयीयोद्देश्यताऽवच्छेदकावच्छिन्नादेव धातोः। एवं च देवदत्ताद्युपपदे अस्मद्युपपदे वा न मध्यमः। अयं च परिसंख्यारूपो नियमः। पुनश्च पाक्षिकप्राप्तिगर्भो नियमोऽप्यत्र भवितुमर्हति। स च सूत्रद्वयीयोद्देश्यताऽवच्छेदकाऽवच्छिन्नाद् धातो-

र्लादेशश्चेत्, तर्हि मध्यम एव, न तु प्रथमादिरित्येवं रूपः। तेन 'त्वं पचति' इति न भवति।

ईदृशी एव नियमस्थितिः —'अस्मद्युत्तमः', 'शेषे प्रथमः' इत्यनयोः सूत्रयोरपि।

## [ आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य—अष्टा० १।३।६३ ]

अत्र 'पूर्ववत् सनः' इत्यस्मात् पूर्ववदित्यनुवर्त्य वाक्यभेदेन व्याख्यायते। पूर्ववदेव आत्मनेपदम्, न तु तद्विपरीतमिति, तेन इन्दाञ्चकारेत्यादौ कर्तृगेऽपि फले न आत्मनेपदम्। अत्र च प्रमाणम्—'आम्प्रत्ययवत्' इति वचनमेव। अन्यथा पूर्ववदित्यनुवृत्त्यैवानुप्रयोगस्य कृञः आमः पूर्वेण तुल्यमित्यर्थलाभादिष्टसिद्धेः किं तेन आम्प्रत्ययवदित्यनेन। अत्र पूर्ववदेवात्मनेपदमिति व्याख्यानेन पाक्षिकप्राप्तिफलकनियमलाभः, विधेये एवकारसम्बन्धात्। वस्तुतोऽयं वाक्यभेदोऽसङ्गत एव। 'मरुवज्जलमुशीनरेषु' इति कथनेन त्रिधा सादृश्यबोधः, तथा हि—मरुदेशे जलमस्ति, तर्हि अत्रापि (उशीनरेषु) अस्ति।

मरुदेशे जलं नास्ति चेत्तर्हि अत्रापि नास्ति। तत्रोभयं स्यात्तर्हि अत्रापि उभयं स्यादिति। एवं प्रकृतेऽपि—आम्प्रकृतेरात्मनेपदं भवति चेत्—तर्हि अनुप्रयुज्यमानेऽपि तदुद्देश्यता स्यात्। न भवति तर्हि अतोऽपि न भवतु। उभयं भवति, तर्हि अस्मादपि उभयं भवतु। अनेन रूपेण सकलेष्टसिद्धौ वाक्यभेदकथनं गौरवावहं प्रतीयत इति गुरवस्त्रिपाठिचरणाः, 'तिवारी जो' इत्युपाभिधानाः पाणिन्यवतारभूताः प्रातःस्मरणीयाः श्रीहरिनारायणत्रिपाठिनो व्याचक्षते स्म।

शेखरादिमहाग्रन्था भान्ति भानीव यद्भुवि।
स मेऽस्तु सततं स्वान्ते श्रीहरिनारायणो गुरुः॥

## [ स्थादिष्वभ्यासेन चाभ्यासस्य — अष्टा० ८।३।६४ ]

प्राक् सितात्स्थादिषु अभ्यासेन व्यवायेऽपि षत्वं स्यात्। एषामेव चाभ्यासस्य न तु सुनोत्यादीनाम्। निषिषेध, निषिषिधतुः। अत्र तत्त्वबोधिनी—इह द्वे वाक्ये, आद्यं षत्वविध्यर्थम्, द्वितीयं तु नियमार्थमित्याशयेनाह—व्यवायेऽपि षत्वमेषामेव चेति। स्थादीनां दशानामेव अभ्यासस्य षत्वमित्यर्थः। तत्फलं तु षू प्रेरणे, अभिसुसूषति, अत्रोक्तनियमादभ्याससकारस्य न षत्वम्। द्वितीयस्य तु स्तौतिण्यारिति नियमान्न भवति। अभिसिषासति इत्यत्र तु षणोऽभावादभ्यासात् परस्य षत्वम्, पूर्वस्य तूक्तनियमान्नेति बोध्यम्। स्यादेतत्, निषिषेधेत्यादौ अभ्यासस्य उपसर्गात्

सुनोति इत्यनेन सिद्धम्, अभ्यासात् परस्य तु आदेशप्रत्यययोरित्यनेनेति किमाद्य-वाक्येन। अत्राहुः—फलत्रयार्थमाद्यं वाक्यम्—१. अषोपदेशार्थम्, तथा हि—सेनया अभियातुमिच्छति — अभिषिषेणयिषति। २. अवर्णान्ताभ्यासार्थञ्च—अधांसनं गोत्र-भिदोऽधितष्ठौ। ३. षणि प्रतिप्रसवार्थं च —अभिषिषिसति, षिच क्षरणे। स्तौतिण्यो-रिति नियमात् षभूते सनि निर्वर्तितमपि षत्वमुपसर्गमाश्रित्यात्र भवतीति।

## [ स्थादिष्वभ्यासेन चाभ्यासस्य—अष्टा० ८।३।६४ ]

अभ्यासस्यायमाभ्यासस्तस्येत्यर्थः। इदमर्थेऽण्प्रत्ययः। एतस्य फलं तु सकारेण सहाभेदेनाऽन्वयः, अन्यथा वैयधिकरण्यं स्यात्। 'उपसर्गात् सुनोति सुवति' इत्यनेनैव सिद्धे अयमंशो नियामकः। अतश्चैतदीयोद्देश्यताऽवच्छेदकं तद्व्यापकं च रूपं विचार्यते।

अत्रोपसर्गात् सुनोतीत्यत उपसर्गादिति अनुवर्तते, इण्कोरित्यस्य चाधिकारः। 'अपदान्तस्य मूर्धन्यः' इत्यपि अधिकृतमस्ति। 'सहेः साडः सः' इत्यतः स इति षष्ठ्यन्तं पदमनुवृत्तमस्ति। एवं च "उपसर्गस्थनिमित्तावधिकपरत्वविशिष्टस्थादिधातुसम्बन्धि-नोऽभ्यासस्य यः सकारस्तद्वृत्तिसत्त्वमदसीयोद्देश्यताऽवच्छेदकम्। तद्व्यापकं रूपम्—उपसर्गस्थनिमित्तावधिकपरत्वविशिष्टं सुनोत्यादिधातुसम्बन्ध्यभ्यासावयवसकारवृत्ति-सत्त्वम्।

नियम्यं सूत्रमस्ति—उपसर्गात् सुनोति ...इत्यादि। तदीयोद्देश्यताऽवच्छेदकं रूपम्—उपसर्गस्थनिमित्तावधिकपरत्वविशिष्टसुनोत्यादिधातुसम्बन्धिसकारवृत्तिसत्त्वम्। तद्व्याप्यं च रूपमस्ति—उपसर्गस्थनिमित्तावधिकपरत्वविशिष्टसुनोत्यादिधातुसम्ब-न्ध्यभ्यासावयवसकारवृत्तिसत्त्वम्। एतन्मध्यपातिरूपावच्छिन्नातिरिक्तत्वेन, उपसर्गात् सुनोतीत्यस्योद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति स्थादिदशानामेवाभ्यासा-वयवो यः सकारस्तस्यैव षत्वमिति फलति। अतश्च अभिसुसूषति इत्यत्राभ्याससका-रस्य न षत्वम्। द्वितीयस्य तु स्तौतिण्योरेवेति नियमान्न भविष्यति षत्वमिति सुधियः सहृदया विचारयन्तु।

## [ अट्कुप्वाङ्नुम्व्यवायेऽपि—अष्टा० ८।४।२ ]

अत्र योगविभागः। व्यवायेऽपीति प्रथमो योगः। अट्कुप्वाङ्नुमिति द्वितीयो योगो नियामकः। तत्र 'रषाभ्यां नो णः समानपदे' इत्यनेन रषाभ्यां व्यवहित-परस्य नस्य णत्वं न प्राप्नोति, तदर्थं 'व्यवायेऽपि' इति प्रथमो योगो विधायकः। तत्फलं 'कर्तॄणाम्' इत्यादौ ऋवर्णघटकेनाज्भागेन व्यवायेऽपि णत्वं भवति। 'ऋवर्णान्नस्य णत्वं वाच्य'मिति वार्तिकं न करणीयमिति भावः।

अट्कुप्वाङ्नुमिति सौत्रत्वाल्लुप्तभिस्विभक्तिकम्। अत्र व्यवाये इत्यस्यानुवृत्तौ सत्याम्—अट्कुप्वाङ्नुम्भिर्व्यवायेऽपि रषाभ्यां नस्य णत्वमित्यर्थः। तत्र च 'व्यवायेऽपि' इत्यनेनैव सिद्धे इदं नियामकम्। एतदीयोद्देश्यताऽवच्छेदकं रूपम्—अडादिकर्तृकव्यवायत्वम्। तद्व्यापकं रूपम्—आक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वम्। 'व्यवायेऽपि' इत्यस्योद्देश्यताऽवच्छेदकं रूपम्—यत्किञ्चित्कर्तृकव्यवायत्वम्। तद्व्याप्यं रूपम्—आक्षरसमाम्नायिकवर्णकर्तृकव्यवायत्वम्।

एतन्मध्यपातिरूपाऽवच्छिन्नातिरिक्तत्वेन यत्किञ्चित्कर्तृकव्यवायत्वाऽवच्छिन्ने सङ्कोचे कृते सति—आक्षरसमाम्नायिकवर्णकर्तृकव्यवाये नस्य णत्वं चेत्तर्हि अडादिकर्तृकव्यवाये एव, इति पर्यवस्यति। तच्च न निर्दोषम्। कृत्स्नम्, कार्त्स्न्यम्, पृश्निः, मृत्स्ना—इत्यादिषु णत्ववारणेऽपि 'आदर्शेन' इत्यादौ णत्ववारणमशक्यम्, ऐकारेणाटा व्यवधानात्। अतश्चात्र निषेधमुखेन प्रवृत्तिर्विधेया तथा सति 'अडादिकर्तृकव्यवायातिरिक्तव्यवाये णत्वं न भवतु' इति फलितं भविष्यति, ततः 'आदर्शेन' इत्यत्र तद्भिन्नशकारेण व्यवायसत्त्वे णत्वाभावः सिद्धः। अथवा 'चुटुतुलशर्व्यवाये न' इति निषेधसूत्रेण णत्वाभावः सम्पाद्यः। इदं च निषेधसूत्रं भाष्यकृता न्यासरूपेणोपस्थापितम्।

लघुशब्देन्दुशेखरे एतत्सूत्रपाठनावसरे 'आदर्शेन' इत्युदाहरणमुद्घाट्य सोल्लासं व्याख्यातवद्भिर्वैयाकरणकेसरिभिः पाणिन्यवतारभूतैः परमगुरुवरैः 'तिवारी जी' इत्युपाभिधानैः प्रातःस्मरणीय-परमश्रद्धेय-श्रीहरिनारायणत्रिपाठिभिः प्रोक्तम्—"किं तत्र परमाणुर्वै यत्र मज्जति मन्दरः" इति। अयं भावः श्रीगुरूणाम्—'आदर्शेन' इति प्रयोगे णत्ववारणे प्रयतमाना महान्तोऽपि मान्यमान्या विद्वांसो मूर्च्छितायन्ते, अतस्तत्र समवहितैर्भाव्यम्। अस्तु—

परमगुरुभिः 'स्नुलव्यवायेन' इति निषेधवचनेन काशिकविद्वत्परम्परया समाधानं विधाय पाठितम्—यत् अट्कुप्वाङ्नुमित्यस्य नियामकत्वे विधिमुखेन प्रवृत्तावपि 'आदर्शेन' इत्यत्र दोषोद्धारः कर्तुं शक्यते। एतद्विषये सस्मितमुक्तम्—एकदा पण्डितप्रवरः मोकाटे इत्युपाह्वः श्रीगणपतिशास्त्री मया सह मेलितुं मद्गृहमागतवान्। वार्तालापप्रसङ्गे मया स पृष्टः, यद् भोः अट्कुप्वाङ्नुमित्यस्य पाठनप्रसङ्गेऽस्य नियमस्य किं विधिमुखेन प्रवृत्तिरपि परमगुरुभिः प्रातःस्मरणीय-भरद्वाजोपाधिविभूषितैः श्रीदामोदरशास्त्रिभिर्निर्दिष्टा न वा? तदा झटिति तेनोक्तम्—आम्, नूनमुक्तम्, तदित्थम्—अडादिकर्तृकव्यवायत्वं परिहाय अडादिनिष्ठकर्तृत्वमदसीयोद्देश्यतावच्छेकं मन्तव्यम्, तद्व्यापकं च 'आक्षरसमाम्नायिकवर्णनिष्ठकर्तृत्वम्'। 'व्यवायेऽपि' इत्यस्योद्देश्यताऽवच्छेदकं यत्किञ्चिन्निष्ठकर्तृत्वम्।

तद्व्याप्यं रूपम्—आक्षरसमाम्नायिकवर्णनिष्ठकर्तृत्वम् । एतद्रूपावच्छिन्नातिरिक्तत्वेन यत्किञ्चिन्निष्ठकर्तृत्वाऽवच्छिन्ने सङ्कोचे सति—आक्षरसमाम्नायिकवर्णनिष्ठकर्तृत्वेन निरूपके व्यवाये सति नस्य णत्वं चेत्, तर्हि—अडादिनिष्ठकर्तृत्वेनैव व्यवाये, अधुना 'आदर्शन' इत्यत्र दोष आञ्जस्येन निराकृतः। अत एव शेखरकृताऽपि लिखितम्—अडादिभिरेव व्यवाये इति ।

एषा विधिमुखीया प्रवृत्तिरत्यन्तं सुगुप्ताऽऽसीत् परमगुरुभिः श्रीत्रिपाठिमहाभागैः, तदीयपरमगुरुवरैः श्रीदामोदरशास्त्रिभारद्वाजमहामान्यैश्च प्रकाशपथमानीता। ते गुरुवराः कोटिसंख्याकैरसंख्यातसंख्याकैर्वा प्रणामाञ्जलिभिः संस्तूयन्ते। तयोर्विषये मङ्गलाभिवादनमपि अन्ते—

शेखरादिमहाग्रन्था भान्ति भानीव यद्धृदि ।
स मेऽस्तु सततं स्वान्ते हरिनारायणो गुरुः ॥
महामहाद्युपाध्यायं शब्दारण्ये विहारिणम् ।
मृगेन्द्रं तं गुरुं नौमि श्रीदामोदरशास्त्रिणम् ॥ इति ।



# प्रभिन्ने प्रस्थाने ( तुलनात्मकपद्धतिविमर्शः* )

आचार्यश्रीगोविन्दचन्द्रपाण्डेयः

आचार्यचरः,

प्राचीनभारतीयेतिहास-संस्कृतिविभागस्य

गोरखपुर-राजस्थान-प्रयागविश्वविद्यालयानाम्

कुलपतिचरश्च,

राजस्थान-प्रयागविश्वविद्यालययोः

❀❀❀

आदौ यशःकान्तिशेषान् दिवङ्गतान् प्राचार्य-ग्रिफिथ-महोदयान् सादरं स्मरामि यन्नाम्ना इयं व्याख्यानमाला विश्वविद्यालयेन प्रवर्तिता, तन्माला-ग्रथने च प्रथम-पुष्पाहरणाय अकिञ्चिज्ज्ञोऽप्येष जनो विद्वन्मण्डलीमण्डनैः श्रीमद्भिर्मण्डनमिश्रमहाभागैः सुहृत्-सहजेन स्नेहेन कृपया चात्राहूय अनुग्रह-पात्रमकारि। अत्रभवतां विपश्चितां पुरतः स्थित्वा सुगभीरं च धर्म-दर्शनविषय-मधिकृत्य यदपरिशीलितशास्त्रोऽपि किञ्चिद् वक्तुमुपक्रान्तोऽस्मि तन्न तथा त्रिवदिषया यथा व्याख्यानव्याजेन भवतां दिदृक्षयैव। प्राच्यप्रतीच्ययोः प्राचीन-नवीनयोरन्वीक्षामार्गयोः समन्वयोपक्रमं विधित्सन्, "कदाचिदत्रभवन्तो विद्वांसः प्रक्रममिममनुमोदिष्यन्त" इति दुराशयास्मि गृहीतचापलः "प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः"।

ग्रिफिथ-महोदयैराङ्ग्लभाषया अनूदिता वेदाः, तथा च वेदविद्यानुशीलन-परायणानां कृतं महत् साहाय्यम्। विदितमेव यत् कालेन वेदभगवान् दुरा-लक्ष्याशयो जातः, तदभिप्रायान्वेषणे च येः परिश्रमो व्यधायि तेष्वन्यतमो विश्व-विश्रुतो मोक्षमूलरमहोदयः[1]। तस्येव व्याख्यासरिणमनुसृत्य ग्रिफिथमहोदये-र्व्यरचि स्वकोयोऽनुवादः। मोक्षमूलरमहोदया आधुनिकधर्मतत्त्वविज्ञानस्य, तदानीं शर्मण्य-भाषया रेलिगियोन्स-विसेनशाफ्त अथवा रेलिगियोन्स-गेशिस्ते इत्याख्यस्य नूतनविद्याविभागस्य प्रवर्तकत्वेन प्रसिद्धाः। अतश्च ग्रिफिथ-महोदय-स्मृति-व्याख्यानमालायास्तुलनात्मक-धर्म-दर्शन-विषयताऽपि स्फुटमेव भजत्यौचित्यम्।

---

* निबन्धोऽयं विदुषा लेखकेन प्राचार्यग्रिफिथ-स्मृति-व्याख्यानमालायां पठितः।

१. द्रष्टव्या मर्सिया-इलियाड — सं०, एन्साइक्लोपीडिया ऑव रिलिजन्स।

परम्परागतादागमानुसारिशास्त्रात्तदनुषङ्गिदर्शनाच्च भिद्यते तुलनात्मक-धर्मदर्शनमिदम्। परम्पराप्रसिद्धं धर्मपरिशीलनं परम्पराविशेषमेव विषयीकरोति, तुलनात्मकाध्ययनं तु नानाधर्मसम्प्रदायांस्तुलयति सदृशासदृशतया ऐतिहासिकतया च व्यवस्थितं सर्वधर्मसङ्ग्रहं विषयोकरोति दार्शनिकालोचनस्य। एवञ्च तुलना-पुरस्सरं धर्मविषयं दर्शनमेव तुलनात्मक-धर्मदर्शनं प्रतिपत्तव्यम्। यथा नवीनं कलादर्शनं राजनीतिदर्शनं वा नैकपरम्परासङ्गृहीतविषयं तथैव धर्मदर्शनमपि नवीनम्। विश्वतोऽस्य वृत्तिः स्वतन्त्रप्रज्ञात्मिका च प्रवृत्तिः। तथापि परस्पर-विरोधित्वादस्य विभागानां स्फुटमेवापेक्ष्यते पुनर्विचारः।

**व्याख्यान-विषय-प्रयोजन-निर्देशः**

"यत्र विश्वं भवत्येकनीड"मिति यत् पुरातनैर्मनोषिभिराशंसितम्, तदद्यत्वे लौकिक-प्रज्ञा-प्रासाद-गवाक्षात् प्रेक्षमाणा नवीना अपि विद्वांस आशंसन्ति। तत्र तु प्रतिबन्धकेषु नाना-धर्म-सम्प्रदायानां मिथोविरोधाः सविशेषं लक्ष्यन्ते। तेषां परिजिहीर्षानुष्ठाने मयाऽप्यात्मा नियोक्तव्य इति मत्वा प्रतिभासमानेषु नाना-धर्मगतेषु भेदेषु पारमार्थिकमैक्यं जिज्ञासितमस्मिन् व्याख्यानावसरे। प्रथमे व्याख्याने नानाधर्माणां तुलनात्मकपद्धत्या यद् गवेषणमद्यत्वे प्रवृत्तं तत्समीक्षा-पुरस्सरं प्रज्ञाभिन्नश्रद्धापर्वाणि विचारार्थविषयतयोपात्तानि। द्वितोये व्याख्याने प्रज्ञाप्रासादभूमयो गवेषणाया विषयीकृताः। उभयोरप्यनयोः समुच्चितं शोर्षकम् "एकं सद् विप्रा बहुधा वदन्ति" इति भवतां विदितमेव। तत्र प्रथमद्वितीययो-र्व्याख्यानयोः शीर्षके यथाक्रमं "प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च" इति, "यत्सानोः सानुमारुहत्" इति च।

**धर्म-शब्दार्थः**

विधानं साधनं चैव लोकस्थितिमथापि च।
वस्तुस्वभावविज्ञानं ब्रूते धर्मो विधारणात्॥ १।

धर्मशब्दस्य व्युत्पत्तिनिमित्तं तावद् "धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः" इत्यनेनैव प्रसिद्धवचनेन स्फुटीभवति। रिलिजन-शब्देनापि बन्धः सम्बन्धो वा सूच्यते। शब्दप्रवृत्तेर्निमित्तं च गवेषमाणेन देवायतन-चैत्य-चर्च-मस्जिदादिषु वासुदेव-बुद्ध-क्रिस्त-मुहम्मदादिषु वेद-त्रिपिटक-बाइबिल-कुरानादिषु च श्रद्दधानेषु जनेषु धर्म-चारिण इति व्यवहारमालोकयता गौरव-प्रसाद-भक्त्यादिसंवलित-श्रद्धाबुद्धि-रेवास्य निमित्तमिति निश्चेतव्यम्। ननु कः पदार्थो धर्मो नाम कश्चोपायस्तदव-गमायेति अनुयोगद्वयमपि अन्योन्यापेक्षमर्धवृगलायमाणम्, केचिद् हि सौगतादयः मेयाधीनां मानसिद्धिम्, अपरे पुनः मानाधीनामेव मेयसिद्धिमामनन्ति। सदृशी

चैव स्थितिः पदपदार्थसम्बन्धविनिर्णयेऽपि[1]। तथापि परम्परावाहिनि शब्दव्यवहारे सम्प्रदाय एव प्रथमतः समालोचनीयः शब्दार्थनिर्णयार्थम्। तथा च धर्मशब्दे समुच्चारिते कश्चित् क्रिस्तानुयायी स्वधर्मप्रवर्तकमेव स्मरेत् शूलारोपिताकारम्, समवेतोपासनागारं वा गोलार्धशिखरं गगनोन्मुखविहितसन्धानमिव शरानीकाभ-शिखम्, नूतननियमाभिलिखितं पस्तकं वा, त्रैतं वा सैद्धान्तिकं सन्देशं वा विश्व-जन्यस्य प्रेम्णः परप्रहारसहनशीलताया वा। स एव क्रिस्तधर्मानुयायी हिन्दुधर्म इति श्रुत्वा स्मरेत् प्रयागे कुम्भपर्व बहुजनसम्मर्दं दिग्वासोभिः साधुभिः समाकीर्णं कीर्तनानुनादितम्, स्मरेद्वा नानाहस्तपादमस्तकादिविचित्रितानि देवताचित्राणि चित्रोयमाणचेताः, बहुदेववादं वा स्पृश्यास्पृश्यविवेकवैषम्यविस्तारं वा। अद्भुत-वेशान् योगिनस्तापसान् वा। एवं च नानाधर्मानुयायिनः स्वधर्मं परधर्मांश्च भिन्नभिन्नमेवाभिजानन्ति। क्रिस्तानुयायिषु सुगतानुयायिषु च शास्त्र-धर्म-सङ्घात्मकं प्रसिद्धं त्रिरत्नम्। मोहम्मदीयेषु तादृशसङ्घाभावेऽपि सनेतृकानुयायिसमवायात्म-कोऽस्त्येव सङ्घः। हिन्दुषु वेदैर्वर्णाश्रमव्यवस्थया कर्मकाण्डेन च बहुविधेन चिरं लक्ष्यते स्म धर्मः, तथैव च हिन्दुधर्मस्य विवरणं लक्ष्यते अलबेरुनीकृतमेकादशे क्रिस्ताब्दशतके, षोडशे अबुलफ़ज्लकृते आइने-अकबरीत्याख्ये सप्तदशे शतके 'दबिस्ताने-मजाहिब' इत्याख्ये प्रसिद्धग्रन्थे। अष्टादशे शतके आबे दूबानाम्ना पर्यवेक्षकेण विचित्राचारसमुदाचारविशेषैरेव हिन्दवो वर्णिताः।

एतेषु दिवसेषु बहवः पाश्चात्या विपश्चितो हिन्दूनां नानाकृत्यकलापेषु समुदाचार-रीति-रूढिषु देशकालविप्रकीर्णासु कञ्चिदन्वयिनं धर्ममेव लक्षणक्षमं न पश्यन्ति। तेषां मतेन नास्त्येव किञ्चित् सामान्यं तत्त्वं हिन्दुधर्मस्य, नाना-सजातीया भेदा एवं तत्त्वभ्रान्तिमुपजनयन्ति। यत्तु शास्त्रेषु विवेचनं तत्केषाञ्चित् शिष्टानां विदुषामेव वाग्विलासः, न तस्य व्यवहारेण कश्चिदान्तरः सम्बन्धः। सिद्धान्तभेदेऽपि हि सम्प्रदायेषु स एवास्पृश्यतादिलक्षितो जातिधर्मः सर्वान्प्रति अविशिष्टः। अनेकासु च निषादादिजातिषु हिन्दु-इति ख्यातासु नास्त्येव कश्चि-

---

१. इदमत्र तात्पर्यम्—ज्ञानमेव प्रमाणं प्रतिपद्यमाना बौद्धा ज्ञानस्य वस्तुतन्त्रत्वाद् वस्तुनश्च स्वलक्षण-सामान्य-लक्षणाभ्यां विभक्तत्वाद् ज्ञानमपि प्रमाणभूतं प्रत्यक्षानुमानाख्यं द्विधा व्यवस्थापयन्ति, नैयायिकमतेन तु करणात्मकानि प्रमाणानि सम्प्लवन्ते प्रमेयेषु। धर्मे पुनः बुद्धादिसाक्षात्कारं प्रमाणीकुर्वन्ति सौगतादयः, वैदिकास्तु वेदानेवालोच्य धर्मस्वरूप-मध्यवस्यन्ति। एवं बौद्धमते धर्मं साक्षात्कृत्य तल्लक्षणं प्रवेदितं भगवता बुद्धेन, वैदिक-मते तु वेदेभ्यो लक्षणं विज्ञाय धर्मोऽन्वेष्टव्यः। धर्मः परमार्थतः परोक्षोऽपरोक्षो वेति विप्रतिपत्तिमूलम्। तु० मम भक्तिदर्शनविमर्शः, पृ० ५४-५५।

च्छास्त्रप्रचारः, धर्मप्रकारस्तु देवताप्रसादनात्मक-कर्मकाण्ड एव उपाध्यायनेतृकः। सन्ति च नास्तिका अपि लोकोत्तरं किमपि तत्त्वमप्रतिपन्नाः कर्मकाण्डानुष्ठानं वा शान्तिनाथादयः संयमिनस्त्यागिनश्च परहितनिरता यान् धर्मबाह्यान् वक्तुं नोचितं स्यात्[1]।

आभ्युदयिको नैःश्रेयसिकश्चेति प्रसिद्धौ भेदौ धर्मस्य[2]। आभ्युदयिकोऽपि लौकिकपारलौकिकहितप्रदत्वाद् द्विविधः। आचार-व्यवहारनियामको लौकिकः सांस्कारिकानुष्ठानिकश्च पारलौकिकः। प्रत्यग्वेद्यः साङ्केतिक-चैतसिको लोकोत्तरो धर्मः। पूर्वपूर्वपुरस्सरश्च उत्तरोत्तरो भेदः। एवमादिमं स्थूलतमं व्यापकतमं च रूपं धर्मस्य लोकनीतिविशेषात्मकम्। सर्वेषु च परम्परानुगेषु समाजेषु आचारव्यवहार-व्यवस्था धर्ममूला धर्मसंसृष्टा वा लक्ष्यते। लोकः समाजो वा जातिर्भवेत्, देशः सङ्घो वा।

इत्थं धर्मशब्देन व्यवह्रियमाणासु व्यवस्थासु चतुर्धा विभाजनमापाततो नासमीचीनं प्रतिभाति। प्रथमतस्तु सन्ति जातीयधर्मास्तत्तज्जातीयसंस्कृतिपरि-वेष्टिताः लोकैषणाप्रधाना देवतावेशदीक्षितगुरुसम्प्रदायानुसारेण देवतोपासनाद्यदृष्ट-साधनाः। ततश्च दृश्यन्ते अन्ये महापुरुषप्रवर्तितशास्त्रानुसारिसङ्घात्मका धर्माः। ततोऽप्यन्ये चिरन्तनशास्त्रसम्प्रदायेन वर्तमाना अव्यविच्छिन्नजातिसमवायसहिता देशविशेषधर्माः। ततोऽप्यन्यो निःस्वार्थकरुणानां जितात्मनां योगिनां विश्वजन्यो धर्मः। एष च जातीय-चिरन्तन-सम्प्रदायात्मक-प्रवर्तितसनातनभेदेन चातुर्विध्यं भजन्नपि धर्मश्चतुर्णामपि तत्त्वानां चतुर्ष्वपि भेदेषु न्यूनाधिकमात्रया समनुप्रवेशाद् वस्तुत एक एवान्वयो भिन्नपर्यायः। चत्वारि तत्त्वानि इत्थं निर्देष्टुं शक्यानि जातीय-संस्कृतिः, चिरन्तनसम्प्रदायः, प्रवर्तकशासनम्, सनातनो योगश्चेति। जातीयसंस्कृति-गर्भिताः पुरातीता धर्मास्तुलनात्मकधर्मविज्ञानेनाधुना पर्यालोच्यन्ते। तत्र तुलनात्मक-पद्धतिर्द्विविधा स्वीक्रियते भाषाशास्त्रनिबन्धना प्रत्यक्षपर्यवेक्षणनिबन्धना च, उभयथापि च सा तुलनात्मिका। चिन्तनसम्प्रदायवाहिनो धर्माः स्वस्वशास्त्रेषु अर्थ-निर्वचनमीमांसाभ्यां व्यवस्थापिताः, आधुनिकैस्तद्गतजातिधर्मपक्षस्य पर्यवेक्षणेन

---

१. द्रष्टव्यम्—गून्थर-डी-सोन्टाइमर तथा हरमान् कुल्के ( सं० ) हिन्दुइज्म रिकन्सट्रक्टेड ( १९७१ ); साधुशान्तिनाथेन योगिना महता तर्काटोपेन सर्वधर्मखण्डनं व्यधायि स्वकीये क्रिटिकल फिलॉसफी ऑव रिलिजन्स' इत्याख्ये ग्रन्थे।

२. तु० नागार्जुनकृताया रत्नावल्याः प्रथमः परिच्छेदोऽभ्युदयनिःश्रेयसोपदेशाख्यः। द्र० प्रो० के० सच्चितानन्दमूर्त्तेः सारनाथ-संस्थाने दत्तं भाषणं नैःश्रेयसधर्म इत्याख्यम् ( प्रकाशितं सारनाथतः १९८४ )।

सम्प्रदायस्य च इतिहासनिरूपणपुरस्सरमेव परीक्षा विधीयते, आगमानुसारिसम्प्रदायाः स्वस्वधर्मशास्त्रैर्दर्शनैश्च परीक्ष्यन्ते, आधुनिकाश्च तान् समाजविज्ञानोपायैस्तर्केण च परीक्षन्ते। सनातनधर्मस्तु साधकानां सिद्धान्तैर्वचनैः कार्यैश्च प्रकाशिताया आध्यात्मिक्या अनुभूतेर्विमर्शनेव परीक्ष्यः। मनोविज्ञानशास्त्रिभिश्चाध्यात्मदर्शन-विद्भिश्चेयं परीक्षा नानेव विधीयते।

मानवीयत्वादस्ति धर्मस्य पक्षद्वयम्—आन्तरश्च बाह्यश्चेति, मनोवाक्-काय-कर्माणि त्रीण्यपि व्याप्नोति धर्मः, एकस्याप्यन्यथात्वे मिथ्यात्वमाविशेत्तदितरद्वयम्। धर्मस्य तत्त्वतो भावतश्च सत्यनिष्ठतां मन्यमानाः पुरातनसम्प्रदायवर्तिनो विचारकास्तस्य ज्ञानात्मकमाध्यात्मिकं पक्षं प्रायेण प्रधानं स्थापयन्ति, धर्मेऽनास्थावन्तश्चाधुनिका बहवो वैज्ञानिका बाह्यं सामाजिकरीत्यनुमोदितं कर्मपक्षमेव प्रधानं ज्ञानपक्षं च गौणमवधारयन्ति। ते धर्मस्य तत्त्वं सामाजिककृत्येष्वेव पश्यन्ति, न तत्त्वज्ञाने। तथाप्यसन्दिग्धं पक्षद्वयवत्त्वं धर्मस्य। न चेमौ पक्षौ पृथक् पृथक् सम्यग्विवेचनार्हौ। तत्रायं निभालनीयो दृष्टान्तः। विश्वविश्रुतस्य कथाकारस्य शरच्चन्द्रचट्टोपाध्यायस्यास्ति काचित् कथा **शेष प्रश्न** इत्याख्या, तत्र नायिका शिवानी नाम्ना तर्कनिपुणा नास्तिक्यप्रवणा च। येऽपि आस्तिक्यं युक्तिभिः प्रतिपादयन्ति तान् सा पटु खण्डयति। तर्कस्य हि प्रतितर्कजनकत्वादप्रतिष्ठितत्वमेव तर्कस्यानेन सुविशदं निदर्शितं कथाकृता। अन्ते कथाया नायिका कञ्चित् पुरुषं पश्यति यो न विवदति शास्त्रार्थेषूदासीनः, परार्थे तु त्यजति स्वकीयां तनुमनायासेनैव। तस्यात्मत्यागस्य वृत्तान्तं विज्ञाय शिवानी तस्य निष्ठाया महिमानं बुद्ध्वात्मनस्तर्कग्रन्थिलां मतिं तुच्छामवैत्[1]। हृदयनिहितं धर्मस्य तत्त्वं कर्मणैवात्र स्फुटं प्राकाशि। विनोबाभावे इत्याख्या महात्मानोऽप्यब्रुवन् जलमिव कर्म क्षालयति चित्तमिति[2]। एतदेव विपरीतेनापि दृष्टान्तेन शक्यं प्रकटयितुम्। फौर्स्टर इत्याख्यस्य प्रसिद्धस्याङ्ग्ल-कथाकारस्यास्ति 'भारतयात्रा' ( पैसेज टु इण्डिया ) इत्याख्या कथा। तत्र गौड़-बोले इत्याख्यः कश्चित् पुरुषो वेदान्तसम्मतां वार्तां कुर्वाणोऽपि न स्वचारित्र्ये कांश्चिदपि उदात्तानध्यात्मगुणान् प्रकाशयति। तेन मिथ्याचारगन्ध एव ततो लभ्यते[3]। एतादृशमेव गन्धं बहवोऽन्वीक्षका आधुनिका धार्मिकमण्डलीषु लभमानास्तत्र विजहति विश्वासम्। एतेन उभयविधा अपि अन्तग्राहकाः परीक्षकाः प्रत्यादिष्टाः शास्त्रमात्रं प्रतिपन्ना आचारमात्रं वा। सम्प्रदायलब्धश्रद्धाबुद्धिपूर्वा अर्थैषणा धर्म इति धर्मस्य प्रथमं लक्षणं

---

१. सर्वथा स्वात्मसमर्पणेनैव परमार्थं उपेय इति निदर्शितं कथायां राजेन्द्रेण दह्यमानदेवायतन-रक्षार्थं स्वप्राणानुत्सृजता।

२. गीताप्रवचनम् इत्याख्ये ग्रन्थे;  ३. फौस्टर, पैसेज टु इण्डिया।

शक्यते वक्तुम्। तथा च निर्गलितं धर्मतत्त्वमित्थं शक्यते विवरीतुम्। नानाचैत्त-धर्मसङ्घातो नानाप्रवृत्तिः पुरुषः[1]। नानाप्रतिघातमागम्य आत्मानं प्रविभज्य भुवो निम्नोन्नततामनुसरन्ती नानाधाराभिः प्रवहन्ती सरिदिव मानवचर्याऽपि। नाना-भोगाननुसन्दधानस्य कर्माणि सम्पादयतो विद्यास्थानानि जिज्ञासमानस्य सृजतश्च विद्याकाव्यकलाशिल्पानि प्रवहति मानवस्य जीवनधारा नानादिक्षु प्रविभक्ता। अनिशं समीहाप्रयुक्तो विचेष्टमानोऽपि नासौ लभते सन्तृप्तिमैकान्तिकीमात्यन्तिकीं च। यतो हि नाल्पे सुखमस्ति, भूमैव सुखम्। यदा तु समग्रश्रेयोरूपं भूमानमेव पर्यपते समग्रेणात्मना तदा धर्मवर्त्मनि प्रतिष्ठते। तद्यथा कर्मसु परमं किमपि कर्तव्यं यदा बुध्यते निरवग्रहम्, तदायं धर्मबुद्धया प्रयोजितो द्रष्टव्यः। प्रायेण दृष्टफलेषु कर्मसु परिणामाकलनेनैव अभिसन्धिपुरस्सरमेव च प्रवृत्तिर्भवतीति न तेषु निरवग्रहपरमता-बुद्धिः अवकाशं लभते। लोकोत्तरसम्बन्धेन अध्यात्मबुद्धया वा तादृशी बुद्धिः सम्भविनी सैव च कर्मयोगात्मिका। तत्त्वानि जिज्ञासमानोऽपि यदा यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति परमं तत्त्वं जिज्ञासते तदाप्यस्य गतिर्न व्यत्येति ज्ञानमार्गाद् धर्मस्य। भोगेष्वपि यदा सुखदुःखे उपेक्ष्य सहजमात्मानन्दं लीलारसं वा सर्वत्रानुसन्धत्ते तदा भक्तियोगमेव लभते। एवञ्च एकाग्रतामापन्नैः कर्मज्ञानभावैः तत्तद्योगमवाप्य समग्रं परमार्थं परमात्मानं भगवन्तं पर्येषमाणो धर्मयात्रामार्गं प्रतिष्ठते। खण्डखण्ड-विकीर्णमिव पुरुषं नवीनेन प्रमाणेन संयोज्य जन्मेवापरं ददात्यस्मै धर्मसाधना। आत्मानं विखण्डितेषु कर्मभोगानुसन्धानेषु क्षपयन् प्राकृतः पुरुषस्तेन उन्मीलित-चक्षुरार्यो भवति परमार्थतो द्विजः[2]। लभ्यते नूतना दृष्टिस्तेन दूरादिवालक्ष्यते अमृतं पदं यदर्थं जुहोति सर्वस्वं कृतसङ्कल्पः[3]। श्रद्धाबुद्धेः पर्येषणीयस्यार्थस्य ससाधनस्य लक्षणप्रमाणाभ्यां विवेचनं दर्शनेन करणीयं स्यात्। भक्तिसहजाया विश्वासफलाया-स्तस्यास्तत्त्वविवेचनात्पूर्वं तु तथ्यनिरूपणमपेक्षितम्। निरूपणविवेचनपद्धत्योश्च प्रति-पादनमप्यपेक्षितम्। कथं धर्मपरम्परातथ्यानि निरूपणीयानि कथं च तानि तत्त्वानि विवेचनीयानीति बहुशो विचारितमाधुनिकतुलनात्मकधर्मविद्याविद्भिः परम्परावादि-भिश्चाचार्यैः।

---

१. सौगते सिद्धान्ते सञ्ज्ञा–वेदना–संस्काराः चित्तसम्प्रयुक्ता धर्माः चैत्ता अभिधीयन्ते। द्र० अभिधम्मत्थसङ्गहो (१९६७), ख० १, पृ० ८।

२. सौगतनये पृथग्जनेभ्यो विविच्यन्ते आर्याः लोकोत्तरमार्गप्रविष्टाः। प्रसिद्धानि चत्वारि सत्यानि आर्याणामित्यार्यसत्यानि। द्र० अभिधर्मकोशभाष्यम्–६।१।२। विद्यागृहीतजन्मा-न्तरश्च स एव वैदिकपरम्परायां परमार्थतो द्विज इत्यभ्यधीयत।

३. तथा चामृतवरपदं पर्येषमाणो बोधिसत्त्वः सङ्कल्पितसर्वस्वत्यागो बभूवेति प्रसिद्धम्।

मनीषिभिस्तु भारतीयैर्देशान्तरीयैश्च दृष्टः सम्प्रदायभेदेष्वपि सनातनः सार्वभौमश्च धर्मः प्राचीनैः।

**धर्माणां तर्कातीतमद्वैतम्, सम्प्रदायभेदाश्च**

गुह्यः सनातनो धर्मो वेद्यः प्रत्यात्ममेव यः।
जनतानुग्रहार्थं स आगमेषु प्रकाश्यते ॥ २।

तत्तदुपाध्यवच्छेदाद् वासनादिप्रभेदतः।
सम्प्रदायात्मना धर्मास्तस्मादेव विजज्ञिरे ॥ ३।

स्वीयाद्वैतमतिक्रामि विस्मृत्येव प्रवर्तिताः।
नानाप्रकल्पितैः शास्त्रैः सत्यवार्धेः प्लवैरिव ॥ ४।

एवञ्च सम्प्रदायात्मना प्रवर्तमानो धर्मो नैकभूमिषु सन्निविष्टः, सनातनपदे प्रतिभामात्रगोचरो व्यक्तश्च वैखरीभूमौ नानात्वभागागमरूपेण। आगमा अपि नानादेशकालेषु नानाभाषाः समाश्रित्य नानारुचिवासनाधिकारभिन्नेषु जनेषु प्राकाश्यं लभन्ते। आगमवचनानि च भिन्नाशयानि क्वचिद् नेयार्थानि दुःसमाधेयानि च विषयीकृत्य परिष्कर्तुं न्यायाविष्कृतसङ्गत्या च व्यवस्थापयितुं यतन्ते शास्त्राणि। आगमे समानेऽपि भिद्यन्ते शास्त्रीयाणि प्रस्थानानि किमुत भिन्नेष्वागमेषु। विवदन्ते चैवं प्रस्थानानि प्रतिसम्प्रदायं सम्प्रदायभेदेन च।

ननु भिन्ना एव धर्मसम्प्रदायाः स्फुटं विलक्षणानि च दर्शनप्रस्थानानि, तत्राभेददिदृक्षा तु काञ्चनमृगान्वेषणमिवेति चेत्, न सर्वेष्वेव धर्मेषु नैकैर्मनीषिभिर्मार्गिणां व्याख्यानानां च लक्ष्ये अद्वैतमुद्घोषितम्। तथा च ऋक्संहितायाः प्रथममण्डले अस्यवामीये सूक्ते ऋषिर्दीर्घतमा अविद्यातमांसीव विधमन्तीम् ऋचं काञ्चिदपश्यत्, तद्यथा—

इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्।
एकं सद् विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥
( ऋ० १।१६४।४६ )

बहुधा उद्धृता इयं श्रुतिस्तथापि प्रहेलिकेव प्रतिभासमाना तिष्ठति यथा नातिस्फुटा दिव्याकृतिः काचिद् अन्विष्यमाणा अन्तरान्तरा तडिदिव स्मितदीप्ता चकास्याद् रहस्यध्वान्तोपगूढा च स्वपरिज्ञानाय उपनिमन्त्रयेत च। अत्र अद्वैते स्पष्टं निरूपितेऽपि नैके प्रश्ना विचारशीले चेतसि उद्यन्ति, तद्यथा—वाक्येऽस्मिन् विशेष्यभूतं सत् कथमवधार्यम्, कथं सदसद्विभागलक्षणं कर्तव्यम्। एवञ्च किमेकानेकविभाजकम्,

विप्राः किं वैदिका एवाभिप्रेताः, वदनं च तेषां किं यादृच्छिकं वचनम्, न्यायसम्मतो वादः, अर्थवाद एव वा। के च श्रोतारोऽभीष्टा यानुद्दिश्य विप्रा वदन्ति। का च भाषा तैः प्रयुज्यते, किं वैदिकी एव भाषा अभिप्रेता। कथं चाभिधेयाकारा अभिधान-प्रकारैः सम्बद्धाः। सङ्क्षेपेण—

सत्तत्त्वं किं कथं कार्यमेकानेकविभाजनम्।
के विप्रा वदनं किं वा प्रकाराः के का वागपि ॥ ५ ॥

ननु कथमस्यामृचि एतावन्तः प्रश्नाः समुत्थाप्यन्ते स्पष्टार्थत्वादस्याः। नाना-वैदिका देवाः परमार्थतो न भिन्नाः, तेषां नामानि एवं भिन्नानीत्येवानया प्रतिपाद्यते। नेयमृक् सर्वधर्मविषया नापि दार्शनिकमीमांसोत्थापनमस्याः प्रयोजनमिति चेत्, नैतादृशी व्याख्या सम्यग्विचारं विना स्वीकारमर्हति। किमत्र इन्द्रादय उपलक्षण-त्वेन नोक्ताः, किम् अल्ला-यीशु-आदयो देवा नास्मिन् सति निवेशनीयाः। विप्राः किं नान्यत्र देशेषु सम्प्रदायेषु वा लभ्याः। वस्तुतस्तु, यथा परस्ताद् विवेचयिष्यते, एक एव सनातनो गुह्यश्चागमः सर्वानित्यागमानां मूलभूतः। स एव नानागमेषु यत्र तत्र प्रतिबिम्बितः सर्वधर्मभेदं व्यञ्जयति। नानागमानां पारमार्थिकत्वं तु न निष्पर्यायं भवितुमर्हति निष्पर्यायिपरमार्थस्य देशनातिक्रान्तत्वात्[1]। तस्मादेव गगनशिखरात् पतिता आपो नानासानुषु प्रवणेषु च जनयन्ति नानास्रोतांसि तथैव धर्मस्रोतांस्यपि अतिक्रामिमूलसंलग्नानि व्यक्तं प्रवहन्ति भेदेन।

इदं च स्मर्तव्यं यत् सायणाचार्यैरस्या ऋचो व्याख्याने देवानामेकत्वं तात्त्विकम्, अनेकव्यपदेशयोग्यत्वं च तेषां कर्माधिकारभेदेन गुणभेदेन वा निरूपितम्। तदित्थम्—"अमुमादित्यमैश्वर्यविशिष्टमिन्द्रमाहुः। अथोऽपि चायमादित्यो दिवि भवः सुपर्णः सुपतनो गरुत्मान् गरणवान् पक्षवान् वा। एतन्नामको यः पक्ष्यस्ति सोऽप्ययमेव। कथमेकस्य नानात्वमित्युच्यते। अमुमादित्यमेकमेव वस्तुतः सन्तं विप्रा मेधाविनो देवता-तत्त्वविदो बहुधा वदन्ति। तत्तत्कार्यकरणेनेन्द्राद्यात्मानं वक्ष्यन्ति। एकैव सा महानात्मा देवता स सूर्य इत्याचक्षत इत्युक्तत्वात्। किञ्च तमेव वृष्ट्यादि-कारणं वैद्युताग्निं यमं नियन्तारं मातरिश्वानमन्तरिक्षे श्वसन्तं वायुमाहुः। सूर्यस्य ब्रह्मणोऽनन्यत्वेन सार्वात्म्यमुक्तं भवति"। अत्र आदित्यपरत्वेनाप्युपक्रम्य ब्रह्मपरत्व-

---

१. माध्यमिकदर्शनस्य स्वातन्त्रिकशाखाचार्याणां भावविवेकाख्यानां परमार्थद्वयप्रतिपादनम् अत्र स्मर्तव्यम्। द्र० द नव नालन्दा-महाविहार-रिसर्च-पब्लिकेशन्स वाल्यूम नं० १, पृ० ३०१-२।

मस्या ऋचो भाष्यकारेण दर्शितम् । वस्तुतो दिव्यः सुपर्णो गरुत्मानिति तु आदित्यमेव लक्षयति, न पक्षिणं कञ्चित्, तथा चादित्योऽपि उद्देश्यभूतस्य ब्रह्मणो नानानामसु अन्यतमः ।

इदमप्यवधेयं यद् अस्या ऋचः पूर्ववर्तिनो ऋग् वाक्चतुष्टयवादमुल्लिखति, तद्यथा—

चत्वारि वाक् परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥

अत्र व्यक्ताया मानववाचः अपर्याप्तत्वं सूचितम्[1] । न सा गुहाहितं सत्यं सम्यक् पूर्णतया वाभिधातुं समर्था नाना च मानवीया भाषा भिद्यमाना अपि समानं बौद्धमर्थमात्मापरोक्षं वार्थं प्रकाशयितुं यतन्ते सङ्केतभेदात्तु तेन संवाद-स्थाने विवाद एव कोलाहलायते । तथा च भगवता बुद्धेन उदानसंगृहीते प्रथमनाना-तीर्थिकसूत्रे हस्तिनमदृष्ट्वा स्पर्शसाहाय्येनैव तं वर्णयतां जात्यन्धानामौपम्येन निर्दिष्टम्—

इमेसु किर सज्जन्ति एके समणब्राह्मणा ।
विग्गय्ह नं विवदन्ति जना एकंगदस्सिनो[2] ॥

तुलनीयानि च बुद्धवचनानि अष्टकवर्गीयाणि—"एकं हि सच्चं न दुतिय-मत्थि", "न हेव सच्चानि बहूनि लोके", "तक्कं च दिट्ठीसु पकप्पयित्वा सच्चं मुसाति द्वय धम्मम्माहु" इत्यादीनि[3] ।

विकल्पात्मिका वैखरीवाग् विभज्यैव विषयान् निरूपति, न सा समग्रदर्शिनी, तदाग्रहाच्च प्रवर्तत एकान्तवादः, ततश्च विवादो विग्रहश्च[4] । अनेन सूच्यते अद्वयं सत्यं प्रज्ञागोचरम्, न वाचा सम्यक् प्रतिपाद्यम् । अयमेवाशयो दीर्घतमसोऽपीति शक्यते वक्तुम् ।

अत्र नवीनाः पाश्चात्त्या व्याख्याकृतः प्रत्यवतिष्ठन्ते, सायणीयं भाष्यम् अद्वैतवादप्रभावितम्, तथा च अर्थनिर्वचनेऽत्र कालविपर्यासजन्या भ्रान्तिरुदाहृता । वैदिका ऋषयः प्राचीनकाले बभूवुः सर्वथा चानभिज्ञाः परवर्तिदार्शनिकमतानाम्,

---

१. तु० फ्रित्स शुऑन, ट्रेन्सेन्डेन्ट यूनिटी ऑव रिलिजन्स ( आंग्लानुवादः, प्र० थियॉसोफिकल पब्लिशिंग हाउस, १९९३ ) ।

२. उदानं अट्ठकथा ( इगतपुरी, १९९५), ख० २, पृ० २७५-८० ।

३. सुत्तनिपातो, अट्ठकथा (इगतपुरी, १९९५), ख० २, पृ० २४७ प्र० ।

४. तत्रैव, पृ० २४३ प्र० ।

नानादेवांस्ते अस्तुवन् अयजंश्च। देवास्ते नाना नाम-रूप-कर्मभिर्भिन्ना एव। यावद् देवानां सामान्यधर्माः ज्योतिर्मयत्व-विभूतिमत्व-शुभत्वादयोऽवबुद्धा ऋषिभिस्ते सजातीयतया दृष्टाः। यथा कस्यचिद् राष्ट्रस्य निवासिनो राष्ट्रान्तरेषु नृपान् स्वनृपसदृशान् पश्येयुः। स्तुत्यर्थं च स्वनृपमेव एकं नृपं प्रधानताख्यापनार्थं वदेयुः। तथैवात्रापि स्वेष्टदेवस्य स्तुतिः अर्थवादश्च कल्पनीयः। न वैदिकैः ऋषिभिर्देवबहुत्वोत्तीर्णं सजातीयभेदरहितमेकं देवतत्त्वमवबुद्धम्। तथा च प्राचीनसामीयदेशेषु नाना जना नाना देवान् अभजन्, स्वराष्ट्रविजये च स्वदेवमपि विजयिनम् अन्यांश्च देवान् पराजितान् मेनिरे, पराजितांश्च देवान् बहुधा परास्य तत्स्थाने स्वदेवं प्रतिष्ठापयामासुः। तेनापि यद् देवाद्वैतं स्थापितं न तत्र पारमार्थिकी अद्वयेश्वरबुद्धिः कल्पयितुं शक्या। भारते तु नानाजातयो गणाश्च न तथा तीव्रे परस्परोपघातिनि संघर्षे निरता अभूवन् यथा प्राचीनसामीयदेशेषु। अतश्च भारते नानाजातीयः समवायः सङ्करश्च द्वावपि जायमानौ विचारक्षेत्रेऽपि सदृशं समवायं सङ्करं च जनयामासतुः। जातयो देवा मतानि सम्प्रदायाश्च नाना असमाहिता एव व्यवस्थापिताः। यथा अनया प्रक्रियया नैकं राष्ट्रीयतासूत्रं रचितं तथैव विचारक्षेत्रे युक्तिसहं दार्शनिकैकवाक्यतासूत्रमपि न रचितम्। या च सनातनागमकथा उल्लिखिता तत्र नैतिहासिकं प्रमाणं किञ्चिदुपलभ्यते। नाना आगमा नानाजातिषु नानासम्प्रदायमूलभूता इतिहाससाक्ष्यगोचरा भवन्ति, न तु कश्चिदेकः सनातनश्च आगम इति चेत्, वस्तुतस्तु सर्वेषु धर्मेष्वेक एव आगमः परमार्थतः स्वीक्रियते वेदो वा स्याद् योशुसन्देशो वा स्यात् कुरानो वा स्यात्, न वैदिकाः क्रिस्तीया मुहम्मदीया वा स्वागमातिरिक्तं कमप्यागमं प्रतिपादयन्ति। शाश्वतो दिव्यो वा आगम एक एवेति सर्वं मन्यन्ते, ममत्वाभिनिवेशेन च स्वमेवागमं पारमार्थिकमभ्युपगच्छन्ति। कौशेयकोशेष्विव वेष्टितानि नानासम्प्रदायशास्त्राणि भारते देशान्तरेषु च नाद्यापि विवादपदाद् उन्मग्नानि, या च तुलनात्मिका पद्धतिर्नवीनैरभ्युपगता सापि नाद्यावधि सामीयधर्माणां स्वोत्कर्षाग्रहपङ्काद् उन्मग्ना। तथापि स्थूणानिखननन्यायेन सनातनधर्मसम्मतं मूलाद्वैतं प्रतिष्ठापनीयम्, तुलनात्मकपद्धतिसमालोचनेन च सम्प्रदायसंवादः प्रवर्तनीयः।

**साम्प्रदायिकभेदेभ्यः संवादाभिमुखी प्रवृत्तिस्तद्भेदाश्च**

प्राचीनसम्प्रदायेषु दृष्टं नान्यत्र गौरवम्।
शास्त्रार्थकटुता दृष्टा तेष्वसमग्रदर्शिषु ॥ ६ ॥

संशयाज्जनमुक्तेश्च तुलनान्नीतितस्तथा।
संवाददर्शनात् साध्या विश्वधर्मैकनीडता ॥ ७ ॥

वैज्ञानिकदृशा वा स्यादितिहासदृशाथवा ।
दर्शनालोचनेनापि त्रिधा धर्मानुशीलनम् ॥ ८ ॥

प्राचीनाः सर्वदेशेषु प्रत्यपद्यन्त यदादिमो मानवः कृतयुगाख्ये स्वर्णयुगाख्ये वा निर्दोषे युगे न्यवसत् । तथा चानुश्रूयते—

"न राज्यं नैव राजासीत् न दण्डो न च दाण्डिकः ।
धर्मेणैव प्रजाः सर्वा रक्षन्ति स्म परस्परम्"[1] ॥

यथा भारते तथैव यवनचीनादिषु देशान्तरेष्वपि प्रचलितम् आद्या मानवजातिः सदाचारपरा सहजेनैव ज्ञानेन चिरन्तनार्षपरम्परायातमन्ववर्तत धर्ममिति । धर्मोऽप्यमक्षुण्णा रीतिः, अविज्ञातमूलः समयः, आर्षोपदेशो गणादेशोऽपि सममेवेत्यभजद् वैश्वरूप्यमिव । तथा च प्रसिद्धैर्विधिवेत्तृभिः 'हेनरी' मेन इत्याख्यैर्नियमः प्रत्यपादि—"रूढिरेव विकासक्रमेण विधिरूपेण व्यवर्ततेति"[2] । मतमिदं तु राजनियोगमेव पारमार्थिकं विधिमभ्युपगम्य प्रवर्तितमिति नादरणीयमस्माकम्, तथापि प्राचीनगणजातिषु अविभक्तकार्यसंस्थासु आचार-व्यवहार-नियामको धर्मोऽप्यविभक्तरूपविशेषः सामान्यप्रेरणात्मक एवाभूदिति विज्ञायते ततः । स तु न प्राकृताज्ञाननिबन्धनः प्रत्युत आर्षोपदेशनिबन्धनः प्रतिपत्तव्य इति तु प्राचीनमतानुसारेण । ननु आर्षोपदेशनिबन्धनः प्राचीनधर्मश्चेद् नानाजातिषु समानेनैव तेन भाव्यमासीत्, न तु तथेति चेत्, न, धर्मोपदेशस्य देशकालपात्रादिसापेक्षत्वाद् युक्त एव तद्भेदः । यावद् जातीयसंस्कृतयो भिन्नलक्षणाः, तावद् धर्मोऽपि नाभिन्नलक्षणो भवितुमर्हति । ननु आदिमा मानवा अधर्मेणैव हिंसापरेण किं नावर्तन्त यथा मात्स्यन्यायोपपादकाः प्राचीनाः कौटिल्यादयो नवीनाश्च हॉब्सादयः प्रतिपादयन्तीति चेत्, न, तादृशमतस्य विरुद्धतथ्योपलब्धेः सत्प्रतिपक्षितत्वात् । वस्तुतस्तु आदिमानव इति मानवस्वभावस्यैवोपलक्षणम्, यतो हि नेतिहासगवेषणायां क्वचिदपि आदिरुपलभ्यते । मानवस्वभावविषये द्वे इमे धारणे एकान्तवादिभिः प्रयोजनविशेषं धर्मतन्त्रपोषणात्मकं राजतन्त्रपोषणात्मकं वाधिकृत्य चिरात् प्रवर्तिते मानवो धर्मपरायणोऽधर्मपरायणो वेति । द्वावप्यन्तौ परिवर्ज्य धर्माधर्मात्मकत्वं मानवस्वभावस्य स्वीकार्यमित्येव युक्तं प्रतिभाति[3] । तदेव च देवासुरकल्पनायामप्यभिव्यक्तम्[4] । यत्र यतो मूलाद् धर्मः प्रभवति तेषु आर्षोपदेशः प्राधान्यं भजतीति निर्विवादम् ।

---

१. महाभारतम्, शान्तिपर्व (राजधर्मपर्व), वनपर्व ।

२. द्र० हेनरीमेन, एन्शेन्ट लॉ ( प्रथमं प्र० १८६१ ) ।

३. तथा च धर्मशास्त्रेषु मानव्यां दण्डनीत्यां च संलक्ष्यते । सर्वथा अधर्मपरायणश्चेन्मानवो भवेत् स्वकुटुम्बमपि न पालयेद् राजापि प्रजा भक्षयेदेव । सर्वथा धर्मपरायणश्चेद् मानवो न दण्डव्यवस्थां राज्यं वापेक्ष्येत । ४. इदं तु गीतासु सुस्पष्टम् ।

किंस्वरूपश्चायमादिमो धर्मोऽभूत् ? प्रायेण विधिप्रधान इति विज्ञायते प्राचीनेतिहासाद् अधुनाप्यनुवर्तमानगणजातिवीक्षणेन च । विधिश्चायं प्रवर्तयति मनुजान् संस्कारेषु बलिप्रदानेषु यज्ञानुष्ठानेषु नानादेवताप्रसादकोपासनासु तथा नियमयत्याचारव्यवहारान् । तत्त्वोपदेशपक्षश्चास्य धर्मस्य प्रायेण आख्यानैः गीतिभिर्वा प्राकाश्यत । पाश्चात्त्येष्वेतानि आख्यानानि प्राचीनकाले रहस्याख्यानानि व्यपदिश्यन्ते स्म, अद्यत्वे तु मिथ्याख्यानान्येव[1] ।

आदिमयुगे प्रविभक्तास्वपि जातिषु सङ्करस्तासु अनियतं प्रावर्तत एव। सभ्यतोदये प्राथमिकसाम्राज्यकाले पृथक् पृथगेव धर्मप्राणाः संस्कृतयः प्रादुर्बभूवुः स्वस्वविशेषं च सोद्योगमरक्षन् । एकतो यद्यपि शिल्पोपकरणेषु, विलाससाधनेषु, शस्त्रास्त्रेषु परस्परसम्पर्काद् अन्योन्यभावनं प्रवृत्तम्, तथापि अपरतो भाषासंस्काराविनाभाविनो भावाः परत्र दुःसम्प्रेष्या एव स्थिताः, तथा च नानाधर्मपरम्परासु विचारभूमिकसिद्धान्तनिष्ठाः सांस्कारिकानुष्ठाननिष्ठाश्च परस्परमसम्पृक्ता इवाभूवन् । एवं च प्राचीनकाले संस्कृतिभेदानुविधायिनो लक्ष्यन्ते धर्मप्रविभागा अपि। सौगतं शासनं प्रथमतो जातीयं राष्ट्रियं च सीमाबन्धनं भित्त्वा देशान्तरेषु शान्तिपूर्वमेव प्रसादकानां प्रयत्नात् प्रसारमलभत तत्तद्भाषास्वीकारेणोपासकानां कृते च शीलविधानं विवर्ज्य तत्तत्समाजविधानस्वीकारेण च। क्रिस्तीयशासनमपि तथैव भुवि प्रासरत्, न तु शान्त्या न वा संस्कृत्यन्तरस्वीकारेण । मुहम्मदीयधर्मः अरबसाम्राज्यसमकालमेव विजययशःपताकेव सर्वत्रास्थाप्यत । एते त्रयो धर्मा नानाजातिषु संस्कृतिषु च प्रसारं लभमाना अपि सिद्धान्तदृष्ट्या आचारोपासनादिदृष्ट्या वा स्वस्ववैशिष्ट्यं तत्तत्संस्कृतिषु न व्यलापयन्त । तेषां शास्त्राणि स्वस्वसम्प्रदायमूलत्वेन स्थितानि ।

इदमत्रावधेयम् । सम्प्रदायरचना त्रिभूमिका लक्ष्यते । तत्रागमः प्रथमा भूमिका आधारभूता । आगमाशयं लक्षणैः परिच्छेत्तुं प्रवृत्तानि शास्त्राणि यत्र श्रद्धायाः

---

१. तथाचार्यवरस्य प्लातोनः संवादेषु आख्यानानि विचारहस्यानीव समुल्लिखितानि । तथा च ब्राह्मणग्रन्थेषु आख्यानानि तत्त्वविवरणार्थमुदाहृतानि । आध्यात्मिकतत्त्वपरतया आख्यानानि व्याचचक्षिरे अध्यात्मवादिन इति निरुक्तादवगम्यते । मीमांसकास्तु तानि अर्थवादपराणि प्रतिपादयन्ति । पौराणिकाख्यानानि न लौकिककथातुल्यानीति न विवादास्पदम् । आधुनिकैरपि कतिपयैर्विद्वद्भिरियं प्राचीना व्याख्यासरणिः स्वीकृता, तद्यथा कैम्बल-कुमारस्वाम्यादिभिः । अपरथा आख्यानमिथ्यात्वप्रतिपादकोऽर्वाचीनः पक्षः टाइलर, प्रिमिटव कल्चर-आदिषु प्रसिद्धेषु ग्रन्थेषु विस्तरेण प्रतिपादितः ।

प्रज्ञायाश्च समागमः, शास्त्रार्थ-समर्थन-परिष्कार-परीक्षादिना च प्रवर्तन्ते तदनुषङ्गीणि दर्शनानि । परिच्छेदाश्चेते सपरिष्कारा: सम्प्रदायवैशिष्ट्यं निर्धारयन्ति । इदमप्यवधेयं यत् संस्कृतेर्गभीरतमां दृष्टिमुन्मीलयन्नपि आगमः स्वतन्त्रतया प्रवर्तते, शास्त्रं पुनरागमानुसारितया न स्वतन्त्रम् । एवं च संस्कृतिरागमः शास्त्राणि च सदर्शनानि त्रिवृतिमवरचयन्ति कोशं धर्मसम्प्रदायानाम् । विशेषतस्तु शास्त्राणि स्वपरम्परारचितजालनद्धाक्षाणीव लक्ष्यन्ते । अतश्च धर्मसम्प्रदायाः शास्त्रैर्विभक्ताः परस्परमनवबुध्यमानास्तिष्ठन्ति । पारम्पर्यगौरवाक्रान्तेषु व्यतीतयुगेषु बहुश्रुता अपि शास्त्रिणः प्रायेण अधिचिक्षिपुः परान्, अहिंसन्नपि तान् । तथा च स्कौलेष्टिकदर्शनाभिज्ञा अपि मध्यकालिककैथलिकसङ्घाधिकारिणः सावोनरोलं ब्रूनो–गौलिलीयो च स्वतन्त्रविचारकौ यातनासु न्यपातयन् । अल्बेरुनीत्याख्यो विश्वविश्रुतो मुस्लिमपण्डितः क्रिस्ताब्दानामेकादशे शतके भारतमियाय भारतीयशास्त्राणि चाधीत्यापि न तेषु तात्त्विकं किमप्यधिजगाम । अन्येऽपि मुहम्मदीया विद्वांसो मध्ययुगे स्वधर्मप्रभुत्वविस्तारकाले परधर्मान् अधर्मानिव निरयगामिनो व्यजिज्ञपन् । तथा चाधुनिके काले पाश्चात्त्या ईशपुत्रीया नानाभारतादिदेशान् विजित्य तत्तद्देशीयान् क्रिस्तधर्मं बलवदपि प्रवेशयितुकामाः स्वेतरधर्मान् भूयसा निनिन्दुः । भारतेऽपि समानसंस्कृतिमध्येऽपि शास्त्रिणां साम्प्रदायिको द्वेषः शास्त्रार्थविचारेषु दृश्यत एव । तथा कुमारिलेन चैत्यवन्दनादिर्न धर्म इत्युद्घोषितम्, भगवत्पादैः प्रद्वेषः सम्भावितो भगवतो बुद्धस्य प्रजासु, धर्मकीर्तिना वेदप्रामाण्यवादो मूढबुद्धिलक्षणमित्यध्यवसितम्[1] । तथापि एतादृशः परमतव्युदासः पण्डितवाद एव, न धर्मानुयायिनां हार्दिको द्वेषः । नापि धर्मवैलक्षण्यकारणेन परहिंसा प्रायेणानुमता भारते कांश्चिदपवादान् विहाय[2] । हिंसाभावेऽपि शास्त्रेषु सम्प्रदायबाह्यशास्त्राणामनवबोधः प्रायेण स्थित एव यथा वैदिकेषु बौद्धानां यथा वा माध्वेषु अद्वैतिनाम् ।

यद्यपि स्वस्वधर्मैकान्तनिष्ठाः स्वस्वसम्प्रदायासक्तबुद्धय आगमानुसारिणः शास्त्रिणो बाह्येषु शास्त्रेषु न निरभिनिवेशया तत्त्वजिज्ञासया प्रवृत्ताः, तथापि पूर्वोक्ततत्तद्धर्मविस्तारकाले नानाधर्मसम्प्रदायानां सम्पर्कवशात् सञ्जातमेव

---

१. द्र० श्लोकवार्तिकं न्यायरत्नाकरसहितम्, ( वाराणसी, १८९८ ), पृ० ३८, शारीरकभाष्यम्, २।२।३२ ।

२. अल्बेरुनीत्याख्यो विद्वान् स्वभारतविवरणे कथयति—भारतीयाः शास्त्रिणः शास्त्रार्थप्रिया अपि न विवादेषु हिंसया स्वनिष्ठां प्रदर्शयामासुरिति । तु० नीलकण्ठशास्त्री, हिस्टरी ऑव साउथ इन्डिया, पृ० ४२४ ।

अन्योन्यभावनमंशतः। तथा च पूर्व-एशियाक्षेत्रे विस्तारमाप्नुवतः सौगतधर्मस्य नूतनाः कतिपये जेनप्रभृतिसम्प्रदाया उदपद्यन्त[१]। एवञ्च मोहम्मदीयधर्मस्य विस्तारकाले बौद्ध-यवन-हीब्रू-आदिधर्माणां तस्मिन् प्रभावो विश्लेषितो विद्वद्भिः[२]। क्रिस्तधर्मेऽपि हीब्रू-मित्रधर्मयोर्यवनदर्शनस्य च प्रभावो विदित एव[३]। अद्वैत-वेदान्ते गौडपादीये महायानप्रभावः प्रतिपादितो नैकैर्विद्वद्भिः[४]। तथा च भक्ति-दर्शनेषु मोहम्मदीयः प्रभावो मध्यकाले प्रत्यपादि[५]। किन्तु एतादृशेषु परस्परप्रभावेषु सत्स्वपि प्रायेण नैते सम्प्रदायास्तान् स्वीकुर्वन्ति। यत्र स्वीकुर्वन्ति तत्रापि स्वविचारोपादानतयैव तद् निरूपयन्ति।

एवञ्च नानाधर्मेषु काले काले सम्पर्कमायातेष्वपि न तेनैव तेषां स्वेतरेषु दृष्टिपरिवर्तनविशेषः समजनि। अकबरसमकालिको बदायूनी हिन्दून् भूरिशो निनिन्द किन्तु तत्समकालिक एव अबुलफज्लः स्वतन्त्रदृष्टेरकबरस्य प्रभावात् तेषु बहूनपश्यद् गुणान्। तेन सिद्ध्यति न हि परसम्पर्कमात्रेण धर्मः प्रभावग्रहणे समर्थो भवति, अपि तु उदारचेतोवृत्तीनां परस्परसम्पर्कात्। तथा च योरोपे क्रिस्तीयाष्टादश-शतके प्रबोधनाख्यैतिहासिकप्रवृत्तेः प्रभावान्नूतना आदर्शा दृष्टयश्च प्रथमतो योरोपीयानन्ततश्च सर्वदेशेष्वपि जनान् भावयामासुः[६]। आगमेषु तदनुसारिशास्त्रेषु

---

१. बोधिधर्माख्य आचार्यो दक्षिणभारतात् चीनदेशं गत्वा यं ध्यानसम्प्रदायं प्रावर्तयत् स एव चीने छन् जापाने च जेन् नाम्ना प्रसिद्धिमगमत्।

२. यवनदार्शनिकप्रवरोऽरिस्तुतलः सर्वमुहम्मदीयदार्शनिकाचार्यैः प्रमाणभूतो मतः, तथा च इब्नेसिनाचार्ये इब्नरुश्दे च स्फुटं दृश्यते सूफीमते बौद्धानां प्रत्यभिज्ञादर्शनस्य च प्रभावः संलक्ष्यः। द्र० राधाकृष्णन् ( सं० ), फिलॉसफी ईस्ट एण्ड वेस्ट, खण्डो द्वितीयः, पृ०, १७० प्र० तु० एनमारीशिमेल, मिस्टिकल डाइमेन्शन्स ऑफ इस्लाम ( १९७५ ) पृ० १४-३७।

३, यवनदर्शनमेवाश्रित्य क्रिस्तीयाचार्यैः स्वदर्शनं व्यवस्थापितमिति सुविदितम्। तथा अरिस्तु-तलमनुसृत्यैव अक्विनासाचार्यैः सिद्धान्तसङ्ग्रहः ( सुम्मा ) प्रतिपादितः। द्र० कोपल्सटन, एक्विनास।

४. द्र० विधुशेखरभट्टाचार्याणाम् आगमशास्त्रम् ( प्र० कलिकाताविश्वविद्यालयतः १९५०)

५. द्र० ताराचन्द, इन्फ्लूयेन्स ऑफ इस्लाम ऑन इन्डियन कल्चर।

६. द्र० विल डूरेन्ट, हिस्टरी ऑव सिविलिजेशन, खण्डो नवम-दशमो।

धर्ममात्रे च तर्ककटुः संशयो दार्शनिकैर्वैज्ञानिकैश्च प्रकाशितः[1]। यथेष्टं च धर्मग्रहणे धर्मत्यागे च जनानां स्वातन्त्र्यं तेषां स्वातन्त्र्याधिकारेऽनुमतम्[2]। राज्यस्यापि धर्मात् धर्मसंघाच्च स्वातन्त्र्यं चिरकालिकयुद्धानन्तरं स्वीकृतम्[3]। तेन धर्मनेतृणां संघाधिकारिणां शास्त्रिणां च राज्यव्यवहारे शिक्षाप्रबन्धे स्वसम्प्रदायनियमने च एकाधिकारोऽपहस्तितः, प्रथमतः पाश्चात्यदेशेषु। शनकैश्चान्यत्रापि तदर्थं क्रियते प्रयासः सुमतिभिः। बलवत्स्वमतस्थापनाद् निवारितास्तार्किकैर्वैज्ञानिकैश्च दूषिता धर्मशास्त्रिणः स्वसम्प्रदायमण्डनार्थं स्वतन्त्रतर्कमुपादातुं प्रचक्रमिरे। ततश्च शर्मण्यदेशीयज्ञानपरमार्थवादिदर्शनमाश्रित्य नवीनैव धर्मविज्ञानसरणिः प्रादुर्भूता[4]।

---

१. दिदरो-वोल्तेयरादयः क्रिस्तधर्मसङ्घं प्रत्याचख्युः फ्रांसदेशे, ह्यूम-गिबन-बेन्थमादयस्तथैव आंग्लदेशे बुद्धिस्वातन्त्र्यं प्रत्यपीपदन्। बुद्धिवादिनः प्रत्यक्षवादिनश्चोभयेऽपि तिरश्चक्रुरागमप्रामाण्यम्।

२. धर्मस्वातन्त्र्यपरा नैपोलियनप्रवर्तिता विधिव्यवस्था शनैः प्रायः सर्वेषु योरोपीयदेशेषु प्रासरत्।

३. "त्रिंशद्वर्षयुद्धान्ते वैस्टफेलियासन्धौ ( १६४८ तमे क्रिस्ताब्दे ) एतादृशी नीतिः योरोपीयराष्ट्रैः प्रायः स्वीकृता। ततः प्रभृति राज्यस्य धर्मात् स्वातन्त्र्यं बहुषु देशेषु स्वीकृतम्। धर्मात् स्वातन्त्र्यं धर्मसङ्घीयप्रभुत्वात् तन्निर्दिष्टविधिव्यवस्थातश्च राज्यस्य स्वातन्त्र्यं सूचयति। व्यवहारनियमाः स्वकार्यनीतिश्च राज्येन शास्त्रीयविधिनैरपेक्ष्येण निर्धारणीया। राजकीयनीत्या दृष्टविज्ञानाश्रितया ऐहिकहितसुखपरमया च भाव्यमिति तात्पर्यम्। एषा धर्मनिरपेक्षा नीतिरेव वर्तमाने भारते सर्वधर्मसमभाव इति व्यपदिश्यमाना अर्थान्तरं प्राप्नोति।

४. आधुनिकयोरोपीयदार्शनिकेषु परां प्रसिद्धिं गतः शर्मण्यदेशीयः काण्टाचार्यो ह्यूमप्रतिपादितप्रत्यक्षवादमूलकसंशयेभ्यो विज्ञानं धर्मं चोभयमपि स्वदर्शनेन अतिक्रामीतिविशेषितेन रक्षितुमियेष। प्रत्यक्षगृहीतप्रतिभासान् अनादिविकल्पैः संयोज्य प्रवृत्तत्वाद् विषयविज्ञानस्य न तत्प्रामाण्यं संशयवादेन विचालयितुं शक्यम्। एवं ज्ञानस्य विषयोऽनुभवसिद्धस्तत्प्रकारः प्राक्सिद्धो बुद्धिस्वरूपनिबन्धनः, तद्यथा "घटो रक्त" इत्यत्र देशकालविशेषाऽऽलिङ्गितोऽर्थो रक्ताभासतया गृह्यमाणो रक्तगुणविशिष्टं घटद्रव्यमित्यध्यवसीयते। रक्ताद्याभासः प्रत्यक्षबलादेव देशकालाकारालिङ्गितो ज्ञानविषयो द्रव्यगुणादिप्रकाराः प्राक्सिद्धा बौद्धाः। एवं ज्ञाने प्रत्यक्षाध्यवसाययोरन्वयं विधाय विज्ञानप्रामाण्यं रक्षन् काण्टो धर्मं परोक्षत्वादेव ज्ञानागोचरं प्रतिपादयामास। तथापि निष्कामकर्त्तव्यबुद्धिः

अपरतश्च प्रत्यक्षवादमाश्रित्य डार्विनोयं च विकासवादं प्रतिपद्य संस्कृतीनां धर्माणां च मूलावस्थान्वेषणं विकासक्रमान्वेषणं च प्रारब्धम्[१] । अयं चोद्भूवस्तुलनात्मक-धर्मविज्ञानस्य येन जर्जरिताः प्राक्तनाः श्रद्धाप्राकाराः ।

स्मरणीयमत्र 'मैथ्यू आर्नल्ड' इत्याख्यस्य विद्योतमानकीर्तेराङ्ग्लकवेः प्रसिद्धं काव्यम्—डोवरवेलाख्यम् । ततः पद्यमेकं मयानूदितं श्रूयताम्—

"पूर्वं श्रद्धासमुद्रः परिगतधरणिर्मेखलेवोज्ज्वलासीद्
अद्यत्वे लोकतोऽसौ व्यपसरति ततो नीरसा भूतटान्ताः ।
यत्रास्तीर्णा विवर्णा गतजलवसनाः शर्करास्तत्र चास्य
दीर्घः कारुण्यरावः श्रुतिपथविषयो नैशवाते विलोपी ॥
..... .... .... .... .... ..... ..... .... .... .... .... ..... ... ...
आश्वासो नैव लभ्यः क्वचिदपि भुवने वर्धमाने तमिस्रे
युध्यन्ते तत्र सेना जनितकलकला मोहराज्येऽविवेकाः[२] ॥

श्रद्धा अद्यत्वे ह्रासमुपैति वेलेव सिन्धोः, विरोधिनश्च कलहायमाना नैशान्धकारे युध्यमानाः सेना इव ।

अज्ञानसंघर्षं चेममपाकर्तुं प्रवृत्तं नवीनं धर्मविज्ञानं यद् रेलिगियोन्सगेशिस्ते इति नाम्ना प्रायेण प्रसिद्धं यच्चाङ्ग्लभाषया 'कम्पेरेटिव रिलिजन' इत्याख्यया व्यपदिष्टम् । बहुशाखमिदं विज्ञानम् । तथा—

वैज्ञानिकदृशा वा स्याद् इतिहासदृशाथवा ।
दर्शनालोचनेनापि त्रिधा धर्मानुशीलनम् ॥ ९ ॥

एकास्य शाखा मोक्षमूलरप्रवर्तिता तुलनात्मकभाषाशास्त्रेण निकटसम्बद्धा, अपरा नानासमाजशास्त्रेष्वन्तर्भूता विशेषेण नृतत्त्वविद्यायां समाजशास्त्रे मनो-

---

पुरुषस्य स्वरूपबोधसहजा क्रतुः स्वातन्त्र्यममृतत्वं कर्मफलदायकमीश्वरं चापादयतीति तन्मतम् । तेन एतेषां त्रयाणां स्वातन्त्र्यामृतत्वेश्वराणां सत्यत्वं ज्ञानाविषयमपि विश्वासार्हम् । एवं काण्टीयदर्शनं धार्मिकीं श्रद्धां प्रत्यक्षानुमानानुपपाद्यामपि आचारमूलभूतविवेकापाद्यां प्रत्यपादयत् । काण्टीयदर्शनमनुसृत्य परिवर्त्य च श्लायरमाखरो हेगलादयो धर्मतत्त्वं व्याचख्युः । द्र० रायमुण्डश्मित्, कांट, वी व्राइ क्रितिकेन, ( स्तुतगार्त, १९६९ ) ।

१. अस्या धाराया मूलं ह्यूमनाम्नः प्रसिद्धतमस्य आंग्लदार्शनिकस्य कृतिषु द्रष्टव्यम्—ह्यूम, डायलॉग्स कन्सर्निंग नेचरल रिलिजन ।

२. अस्ताचलीयमित्याख्ये मदोये ग्रन्थेऽयमनुवादो द्रष्टव्यः ।

विज्ञानशास्त्रे च। पुनश्च धर्मेतिहासः सर्वासु धर्मानुशीलनशाखासु प्राधान्यमिदानीं भजति। धर्मतत्त्वान्वीक्षा तु दर्शनशास्त्रेषु नवीनधर्मविज्ञाने ( थियालजी इत्याख्ये ) चान्तर्भूता। इदमपि स्मरणीयं यद् मोक्षमूलरीयं तुलनात्मकधर्मानुशीलनं विगत-शताब्द्या अन्तिमे चरणे लब्धप्रसरं प्रायेण पञ्चाशता वर्षैर्ह्रासमगमत्। तत्स्थाने च धर्मेतिहास एवेदानीमभिषिक्तः।

एवञ्च साम्प्रतिके काले नवीनमिव युगं धर्मतत्त्वावबुभुत्साया: शनैः शनैराविर्भवत्संलक्ष्यते। नानागमेषु शास्त्रेषु च प्रचरत्सु न कश्चिदिदानीं स्वागमपादोपसङ्ग्रहणेनैव कृतार्थः स्यात्। सर्वेष्वपि धर्मसम्प्रदायेषु अद्यत्वे सन्त्येव विपश्चितो ये स्वधर्मे निष्ठावन्तोऽपि परधर्मेषु तत्त्वप्रतिपत्तिं सम्भावयन्ति[1]। पुनश्च तार्किकसमीक्षां निराचिकीर्षुर्धर्मशास्त्रिभिर्धर्मतत्त्वमेव प्रमाणयितु-मिच्छद्भिरन्यैरपि स्वपरयूथ्यैः सन्धिरभीष्टः। धर्मतत्त्वे हि प्रतिष्ठिते तद्विषये धर्मशास्त्रीया विवादा अपि लभेरन् प्रतिष्ठाम्। पक्षान्तरे च भ्रान्तिमात्रं चेद् धर्मो मूलतः, सर्वा एव धर्मशाखा अपि भ्रान्ता निपतेयुः। अतश्च धर्मतत्त्व-जिज्ञासाया एव इदानीं प्राधान्यमास्तिकानां नास्तिकानां च। धर्मदर्शनं च प्राचीन-शास्त्रपरम्परोत्सङ्गं विहाय ऐतिहासिकं वैज्ञानिकं च धर्मनिरूपणं तुलनात्मकं समालोच्य नवावतारं गृह्णाति।

मोक्षमूलराचार्याः प्राचीनार्यभाषायां तन्निबद्धवाङ्मयस्य तत्र व्यक्तधर्म-संस्कृतीनां च अध्ययनाध्यापनप्रचारणेषु निरता यावज्जीवं महनीयां सारस्वत-साधनां चक्रुः। सुविदितमेव यत्ते सायणभाष्यसहिताया ऋग्वेदसंहितायाः प्रकाशन-मंशतश्चानुवादं विधाय भगीरथायमाणा विलुप्तप्रायां वेदसरस्वतीमवतारया-मासुः। अन्येषामपि एशिया-महाद्वीपीय-धर्मागमानामनुवादा नानाविद्वत्कारितास्तैः 'सेक्रेड् बुक्स ऑव द ईस्ट' ( प्राच्यदेशीय-पवित्र-ग्रन्थावली ) इति नाम्ना प्राकाश्यं नीताः। प्राचीनार्यभाषासु देवानां नामाख्यानादिविचारणया आर्यधर्मस्य मूल-स्वरूपं तैर्निर्णेतव्यं मतम्। एतेन नानागमानां देवाख्यानतुलनया तद्वाचक-शब्दानां च निर्वचनेन प्राचीनार्यधर्मस्य मूलस्वरूपविषये मोक्षमूलराचार्यैरा-विष्कृता सिद्धान्ताः इत्थं संक्षिप्य प्रतिपादयितुं शक्याः। आदिमो मानवः प्रकृते-र्भाषाया वा स्वरूपं न सम्यग् बुबुधे। सूर्यादीन् प्रकृतेर्विभूतिमद्रूपाणि विलोक्य स

---

१. तथा च फ्रितसहॉफ श्वॉन-मार्कोपेलिस-सय्यदहुसैनस्र-विल्फ्रिड-कैंटवेल-स्मिथ-कुमार-स्वाम्यादीनां कृतयः पर्यालोच्याः। संक्षेपेण एतेषां कृतिसमुल्लेखो द्र० नस्र, रिलिजन एण्ड द ऑर्डर ऑव नेचर ( १९९६ ), पृ० १-२८, तु० अमलदास, जोन एण्ड गिस्पर्ट-सौख, थियोलजाईजिंग इन इण्डिया ( १९८१ )।

तेषु, इन्द्रियातीतस्य कस्यापि भावस्य उदात्तस्य च अव्यक्तमाभासमुपलभमानस्तत्र देवत्वं कल्पयामास। परोक्षतत्त्वाभासे वस्तुतो धर्माधारभूतेऽपि तत्स्वरूपमनवबुध्य आदिममानवः प्राकृतपिण्डाभिन्नान् देवान् मेने। तद्वर्णने या रूपकालङ्कृता भाषा प्रयुक्ता कविभिः, तयाऽपि स विमोहितश्चैतन्यारोपं पारमार्थिकं व्यवस्यति स्म। एवञ्च यथाकथञ्चिद् लब्धोऽपि देवताभासो भाषाव्यामोहेन देवानाम् असदेव रूपचरित्रादिकल्पनया मिथ्याप्रत्ययः सञ्जातः। सर्वासु च देवकल्पनासु प्राचीनार्यजातेः सौराख्यानकल्पनमेव मुख्यमित्यपि मोक्षमूलरः प्रत्यपिपादयिषत्।

तुलनात्मकभाषाशास्त्रे शब्दरूपाणां निष्पत्तिः ऐतिहासिकविकासप्रक्रियाङ्गत्वेन अवबोध्या आसीत्, तथा चार्यजातेर्मूलेतिहासस्तद्धर्मविकासक्रमश्च शब्दविकासतुलनया रेखाङ्कनसन्निभो न्यरूप्यत। तिस्रोऽवस्थास्तत्र निर्दशिताः। भारोपीयाख्यायां प्रथमावस्थायां प्रमुखा देवा अभूवन् द्यौः, वरुणः, अग्निः, सूर्यः, अन्ये च येषां नामानि तुलनीयरूपेषु भारतीयार्यभाषासु यौरोपीयार्यभाषासु च प्राचीनतमे भाषास्तरे उपलभ्यन्ते। द्वितीयावस्थायां भारतीयैरानीयेति संज्ञितायाम् इन्द्र-मित्र-सोमादयो देवाः प्रादूर्भूता इत्यनुमीयते। तृतीयावस्थायां तु भारतीयायां वेदेषूपलभ्यमाना विशिष्टा देवा विष्णुरुद्रादयो लक्ष्यन्ते। इदं तु स्मर्तव्यं यत्तिसृणामप्यवस्थानां देवा वेदेषु उपास्यमाना उपलभ्यन्ते। तत्र केचिद् ज्यायांसोऽन्ये कनीयांसस्तदुद्भव-विकासदृशेत्येव तेषु भेदः।

यद्यपि सायणभाष्यं मोक्षमूलराचार्यैः सपरिश्रममधीतं प्रकाशितं च, तथापि तन्मते सविशेषोपकारित्वेऽपि सायणस्य, कथं वेदा न व्याख्यातव्या इत्येतदेव सायणादवगन्तव्यम्। तिरस्कारश्चायमन्यैरपि मोक्षमूलरदिशा पर्यटद्भिः पाश्चात्त्यैर्विद्वद्भिः प्रायेणोरीकृतः।

अत्र हेतुस्तु मुख्यतया तेषां भारतीयपरम्परागतदेवतादिविषयावधारणेषु मिथ्यात्वप्रतिपत्तिरेव। आत्मनो दृष्टिमाग्रहशून्यां वैज्ञानिकानुसन्धानोचितां विख्यापयन्तोऽपि ते वस्तुतः स्वकीयनिष्ठाविषयं क्रिस्तधर्ममेव प्रमाणीकुर्वन्ति, तथापि एकान्तनिष्ठां स्वचिरन्तनपरम्परागतामुदारीकुर्वन्तस्ते क्रिस्तात्प्राक्तनानपि धर्माँल्लेशतः सत्यप्रतिष्ठान् स्वीचक्रुः। अवधेयं यद् रोमंटिसिज्म इत्याख्यस्य लिबरलिज्म इत्याख्यस्य च वादस्य प्रभावस्तेष्वराजत्। श्लायरमाखर इत्याख्यो धर्मशास्त्री धर्मस्य मूलं मानवचेतसि प्रत्यपादयत्[1]। अतीन्द्रियभासः स्वपारतन्त्र्यप्रतीतिश्च धर्ममूलभूतां चेतोवृत्तिं विशेषयतः। क्रिस्तधर्मबाह्यास्तु धर्मानु-

१. द्र० मर्सिया इलियाड ( सं. ), एन्साइक्लोपीडिया ऑफ रिलिजन्स।

भूतिविशिष्टा अपि तद्विषयं न सम्यगवबुध्यन्ते योशुवचनाप्रतिपत्तेः। तथा च विश्वविश्रुतैर्हेगलाचार्यैरपि स्वकीयदर्शनस्य द्वन्द्वात्मकादर्शवादाख्ययाभिलक्षितस्य अङ्गभूते धर्मदर्शने नानाधर्माणां विकासक्रमेण क्रिस्तधर्म एव पर्यवसानमिति प्रतिपादयाञ्चक्रे[१]। हेगलोयदर्शने प्राक्सिद्धप्रत्यया: सदादयोऽपूर्णपरिच्छित्ति-वशाद् विचारोन्मोलितस्वान्तर्गतविरोधाः स्वात्मानं स्वतःपूर्णतरप्रत्ययेषु समर्पयन्तः सोपानमिव रचयन्ति तार्किकं तत्त्वप्रतिपत्तोनाम्[२]। विशुद्धतत्त्वप्रतिपत्तीनां कालिकेतिवृत्तस्य चास्मिन् दर्शने समान एव क्रमः प्रतिपादितः[३]। तेन इतिहासे पूर्वपूर्वतरधर्माः स्वोत्तरोत्तरधर्मेभ्योऽविकसिततरा इति निगमनोयम्। श्लायर-माखरहेगलयोर्दार्शनिकप्रतिपत्तिषु भेदे सत्यपि उभौ धर्मेषु विकासित्वमाक्रिस्त-धर्मात् प्रतिपन्नौ। एतादृशमेव मतं मोक्षमूलरीयतुलनात्मकधर्ममोमांसायामपि लक्षयितुं शक्यम्।

एवञ्च विज्ञानमिति विख्यापितेऽपि मोक्षमूलरप्रवर्तिते धर्मपरिशीलने अभ्युपगतो लक्ष्यते कश्चिद् दृष्टिविशेषो यन्मूलं शर्मण्यदेशीये उदारधर्मशास्त्रे ( लिबरल थियालजीत्याख्ये ) हेगलीये च बुद्धयनुसारिधर्मदर्शने। आर्यजातीय-मूलान्वेषणप्रवृत्तिस्तत्र हर्डरादिदृष्टान्तितरोमान्सवादनिबन्धनेति सम्भाव्यते[४]। यच्चास्य तुलनात्मकविज्ञानस्य नातिचिरेण ह्रासः समजनि तत्रास्य धर्मोत्कर्षा-पकर्षसिद्धान्तस्य इतिहासनिरूपणेनैव गतार्थत्वाभ्युपगमाऽपि हेतुः[५]। प्रायेण धर्मशास्त्रिणोऽस्मिन् सिद्धान्ते ईशप्रकाशितागमस्यातर्क्यपूर्वत्वस्यावमानमेवा-पश्यन्। प्रथमवैटिकनसंगीतौ पोपमहानुभावैः सकलकैथलिकधर्मसंघाधिपतिभि-र्विकासवादः प्रबलतया खण्डितः[६]। असन्दिग्धोऽपि क्रिस्तीयमतेन क्रिस्तधर्मोत्कर्षो न विकासवादेन साध्यः।

पुनश्च पक्षान्तरे समानरूपाणां तुलनात्मकाध्ययनं तदीयेतिहासपर्या-लोचनया विना सम्भवति, इतिहासेनैव हि तत्तद्रूपस्य अर्थवत्त्वसन्दर्भाः सांस्कृतिका

---

१. द्र० चार्ल्स टेलर, हेगेल ( १९७५ ) पृ० ४८०-५१०; हेगेल, एन्सिक्लोपेदी ( हाम्बुर्ग, १९६९ ) पृ० ४४६-५० ।

२. द्र० हेगेल, पूर्व० पृ० ५१-१९८ ।

३. तु० टेलर, पूर्व० पृ० ३८९ प्र० ।

४. कैम्ब्रिज मॉडर्न हिस्टरी ( प्रथमसंस्करणम् ) खण्डः अष्टादशशतकविषयः ।

५. तु० इलियाड, पूर्व० "कम्पैरेटिव रिलिजन" इति निबन्धः ।

६. तद्विपर्ययेण द्र० डोकुमेण्ट्स ऑव वैटिकन टू ( १९६६ ) ।

ज्ञायन्ते[1]। इतिहासोऽपि पुनः प्राचीनकालिकः पुरातत्त्वविद्यया विना न प्रवर्तते[2]। एवमितिहासपुरातत्त्वविद्याभ्यामुपबृंहिता एव पुरातनाभिलेखाः स्वार्थं सम्यगुन्मीलयन्ति, प्राचीनभाषाणां धर्माणां वा साहित्योपलब्धानि रूपाणि इतिहासविच्छिन्नानि तुलयित्वा न तेषामर्थप्रयोजनाभिसम्बन्धाः प्रतिवेध्याः। उदाहरणान्यत्र कतिपयानि प्रस्तूयन्ते। क्रीटद्वीपीयोत्खननेन तथा माइकेलवेन्द्रिसकृत-लिनियर-बी-लिपि-रहस्योद्घाटनेन प्राचीनयवनसभ्यतोदयकालस्येतिहासो नवीनेनैव प्रकाशेनोद्भासितः, तेन ज्ञातो विपुलांशो यवनभाषाशब्दानां देवकथानां च यवनेतरसभ्यताया अधमर्णः। एवमेव सिन्धुसभ्यताविष्कारो भारते मोक्षमूलरादिभिर्न कदाचित् सम्भावितः। इदानीं तु आर्यजातिकल्पनैव नैकेषां मतेन युक्तितुलां युक्तमारोहति[3]। नित्यप्रवर्धमानेनैतिहासिकज्ञानेन प्राचीनधर्मविषये मोक्षमूलरादिमतानि बहुशोऽप्रामाण्यं प्रापितानि। रूपकानवबोधाद्देवकल्पना प्रादुर्भूतेति नार्हति कस्यचिदपि श्रद्धाम्। रूपकादिविवेचनं निरुक्ते समुपलभ्यते, देवानां पुरुषापुरुषविधत्वमुद्दिश्य एकानेकत्वविषये च तत्र विमर्शः सुविदित एव[4]। देवताविषये वेदान्तसूत्रेष्वपि तत्त्वविचारः प्राप्यते[5]। दयानन्दस्वामि-श्रीमदरविन्दादिनवीनाचार्यैरपि वैदिकदेवतास्वरूपं समालोचितम्[6]। एतादृशानि प्राचीननवीनपरीक्षकाणां मतान्यालोच्य मोक्षमूलरीयमतानि देवविषयाणि बालिशविजल्पितानीव प्रतिभान्ति। तत्र मुख्यो हेतुर्मोक्षमूलरादीनां क्रिस्तधर्मधृतश्रद्धानां तदितरप्राचीनधर्मेष्वश्रद्धैव।

---

१. युगभेदेन प्रसिद्ध एव धर्मभेदः। उक्तं हि देशकालकारणाद् धर्माधर्मौ विपर्यासं गच्छत इति। भाषा-विद्या-कला-विधि-नीत्यादि-समवायो विधृतसन्निवेशविशेषः समानचित्ताधिकरणः साध्यसाधनसङ्केतपारम्पर्यात्मकः संस्कृतिपदवाच्यः प्रकटयति बोध-सन्दर्भं सर्वशास्त्राणाम्। तद्यथा बुद्ध-क्रिस्त-मुहम्मदैः प्रवर्तितानि शासनानि स्वस्वयुगसंस्कृतिसापेक्षाणि—द्र० मम मीनिंग एण्ड प्रोसेस ऑव कल्चर, तु. पैलिकन थियॉलजी (त्रयः खण्डाः)।

२. लिखितग्रन्थानां तदा विरलत्वात्। प्राचीनदेवायतन-समाधि-राजकीयाभिलेखादीनां मुख्यतया ज्ञापकत्वात्। उदाहरणतया द्र० ब्रेस्टेड, डवलेपमेन्ट ऑव रिलिजन एण्ड थौट इन एन्शेन्ट इजिप्ट, हैरिसन, प्रोलेगोमेना टु ग्रीक रिलिजन।

३. द्र० भगवान सिंह, वैदिक हड़प्पन्स, स्वराज्य प्रकाश गुप्त, सरस्वती-सिन्धु सिविलिजेशन।

४. निरुक्तम्, ७।४-६।

५. वेदान्तसूत्राणि, १३।२६-३३।

६. दयानन्दः, ऋग्वेदभाष्यम्,
अरविन्दः, हिम्स टु मिस्टिक फायर।

अपरा धारा तुलनात्मकधर्ममीमांसायाः समाजविज्ञानाङ्गतया विकसिता। तत्प्रवर्तकाः सर्वेऽत्रेव धर्मेषु विगतश्रद्धाः प्रत्यक्षवादिदर्शनानुयायिनोऽभूवन्। प्रत्यक्षवादोऽयं 'पाजिटिविज्म' इति संज्ञितः क्रिस्तीयाष्टादशशतकादारभ्य उपरञ्जयत्याधुनिकं दर्शनं मूलतश्च धर्मविरोधिदिशा तत्प्रवर्तयति। जीवेश्वर–पाप–पुण्य–स्वर्ग–निरयादिपदार्थाः सर्वधर्मपरम्परासु प्रसिद्धा धर्मशास्त्रेषु विचार्यन्ते। (न च बौद्ध–जैनसम्प्रदाययोः ईश्वरो नाभ्युपगम्यते बौद्धे तु जीवोऽपीति वक्तव्यम्, तत्रापि संसारिणो, देवानां, कारुणिकस्य सर्वज्ञस्य च परमपुरुषस्य स्वीकारात्) धर्मशास्त्रीयाः पदार्थाः पुनरतीन्द्रियाः। स्वस्वागममेव तज्ज्ञाने धर्मशास्त्रिणः साधनं मन्यन्ते, आगमानुसारितया च तान् निरूपयन्ति। अतश्च धर्मशास्त्रानुरोधीनि दर्शनानि प्रमाणेषु मौलिभूतमागमं स्वीकुर्वन्ति, तत्साहाय्यार्थं च नानायुक्तीरनुमानाश्रिता अवतारयन्ति[1]। एवञ्च धर्मशास्त्रीयदर्शनेषु प्रयुक्तोऽनुकूलतर्क एकत आगमं समर्थयति, अपरतश्च न्यायाविरोधितामप्यस्य स्थापयति। इत्थमनेकधर्मपरम्परानुषङ्गिदर्शनेष्वनुकूलतर्को धार्मिकीं श्रद्धां न्यायबुद्ध्या सङ्गमयितुं प्रयतते तद्यथा आस्तिकेषु भारतीयदर्शनेषु क्रिस्तधर्मे वा स्कोलेस्टिकदर्शने। एतादृशेषु प्रयत्नेषु शास्त्राचार्यैर्वस्तुसतामर्थानां परोक्षापरोक्षविभागं विधाय आगमः कारुणिकसर्वज्ञवचनतयाऽवसीयमानोऽपरोक्षार्थप्रकाशकत्वेन निर्धार्यते। तद्यथा क्रिस्तधर्मे आगम ईश्वरस्यैव गृहीतमानवरूपस्य वचनमिति श्रद्धाय ईश्वरस्यास्तित्वसाधने पुनः बहून्यनुमानानि उपन्यस्तानि[2]। वैदिके धर्मे वेदः स्वयमेव नित्यज्ञानमयः ऋषिदृष्टः,

---

१. द्र० मीमांसोपन्यस्ता युक्तयः सर्वदर्शनसङ्ग्रहे सङ्क्षेपेणोपन्यस्ताः।

२. टॉमस एक्विनासाख्यैराचार्यैः कैथलिकदार्शनिकशिरोमणिभिर्विस्तरेण ईश्वरसाधने युक्तयः प्रदर्शिताः। ता इत्थं सङ्ग्रहीतुं शक्याः —

गतीनां प्रथमो हेतुरध्यक्षः सर्वकर्तृणाम्।
अनित्यानामधिष्ठानं पूर्णः सर्वनियोजकः॥

अत्र प्रथमो हेतुः सर्वथा अरिस्तोतलीयः। चतुर्थः अन्सैल्म प्रतिपादनात्प्रकारविशेषेण परां प्रसिद्धिं गतः। अयं प्रत्ययेनैव सत्तां साधयति। पूर्णनिर्दोषस्वरूपतयावधारित ईश्वरो न सत्तारहितो भवितुमर्हति, सत्ताभावस्य दोषरूपत्वात्। अतश्चेश्वरास्तित्वमीश्वरलक्षणादेव सिद्ध्यति। तुलनीयं योगसूत्रम्—तत्र निरतिशयं सार्वज्ञ्यबीजम्। गुणोत्तराणां कल्प्यमानायां श्रेण्यामीश्वरः सर्वश्रेष्ठ एव सर्वगुणः सर्वथा चादोषः। बहुशोऽयं तर्को विचारितः प्रायशश्च खण्डितो नव्यैः। तद्यथा कांटेन सत्तां स्वरूपानतिरिक्तां मन्वानेन। न लक्षणकल्पनेन वास्तविकत्वमपि सिद्ध्यति। द्र० कोपल्सटन फिलोसफी ऑव एक्विनास, पीटर्सन, ह्रास्कर, राशनबाख, बेसिंगर, फिलॉसफी ऑव रिलिजन ( १९९६ ), पृ० १४५-२२७, तु० विलियम पेलो, नेचरल थियोलजी, टेलर, मेटाफिजिक्स ( १९८३ )।

अथवा ईश्वरवचनमेव[1]। बौद्धजैनधर्मयोः सर्वज्ञवचनमेवागमोऽभ्युपगम्यते, सर्वज्ञत्वसाधने च युक्तिविन्यासो विधीयते[2]। बहुष्वपि प्रश्नेषु धर्मशास्त्रीयपदार्थ-विषयेषु विचारणार्हेषु द्वयं तत्र शेषानतिशेते—आगमप्रामाण्यम्, ईश्वरप्रामाण्यं च। ईश्वरवादिदर्शनेषु ईश्वरप्रामाण्यमेव मुख्यं तदधीनतयागमस्य, नास्तिकधर्मदर्शनेषु तु आगमप्रामाण्यमेव।

यदि ज्ञानं सर्वथैव ऐन्द्रियप्रत्यक्षमूलं क्वाशातीन्द्रियार्थानामीश्वरादीनां प्रामाणिकत्वावधारणस्य परोक्षत्वादेव तज्ज्ञानस्यासम्भवात्। अयमेव प्रत्यक्षमात्रवादः, धर्मविरोधिदर्शनानां मूलभूतः। भारतीयपरम्परायां तु लोकायतिका एव एतादृशं वादं प्रतिपन्नास्त्रयीमध्यात्मविद्यां च प्रत्याचख्युः[3]। अन्ये दार्शनिका अनुमानं स्वतन्त्रं प्रमाणं स्वीकुर्वाणा अपि प्रायेण प्रत्यक्षं साक्षात्कारात्मकमनैन्द्रियमपि स्वीचक्रुः[4]। मीमांसका मनुष्यस्यातीन्द्रियं ज्ञानं प्रत्याचक्षाणा अपि आगमम् अपौरुषेयं नित्यमतीन्द्रियज्ञानप्रकाशकं मेनिरे[5]। अतीन्द्रियं ज्ञानं प्रातिभाद् नित्याच्छब्दाद् ईश्वरवचनाद् वा भवतीति यथायोग्यं भारतीयसम्प्रदायाः स्वीचक्रिरे[6]। तेन प्रत्यक्षवादबुद्धिवादयोर्विवादो न तेषु तथा संलक्ष्यते यथा पाश्चात्त्येषु। तेषु प्राचीनकाले यवनाचार्येषु नासीदेवागमो नापि तत्प्रामाण्यचर्चा, देवाख्यानानि पुराणानि कविकल्पितानीति तिरस्कृतानि दार्शनिकैः, देहात्मसम्बन्ध आकार्यारक-

---

१. तु० अभ्यङ्करशास्त्रिकृतोपोद्घातस्तत्सम्पादितस्य सर्वदर्शनसङ्ग्रहस्य, पृ० ४९-५०।

२. द्र० तत्त्वसङ्ग्रहः, अतीन्द्रियार्थदर्शिपरीक्षा।

३. द्र० सर्वदर्शनसङ्ग्रहः, चार्वाकदर्शनम्, तु० कौटलीयमर्थशास्त्रम्, विद्यासमुद्देशः।

४. ईश्वरानुमानमुदयनोपन्यस्तं न्यायकुसुमाञ्जलौ सुप्रसिद्धम्। पञ्च च तत्र हेतव ईश्वर-साधनार्थमुक्ताः—

"कार्ययोजनधृत्यादेः पदात्प्रत्ययतः श्रुतेः।
वाक्यात्संख्याविशेषाच्च साध्यो विश्वविदव्ययः" ॥

ईश्वरानुमानचिन्तामणौ परिष्कारो द्रष्टव्यः। सौगतैरार्हतैश्च बहुधा दूषितमीश्वर-साधकानुमानम्—द्र० मम श्रमण—ट्रैडिशन, पृ०, ५२। प्र० तत्त्वसङ्ग्रहः, ईश्वरपरीक्षा प्रभाचन्द्रः, प्रमेयकमलमार्तण्डः।

५. द्र० श्लोकवार्तिकम्, पृ० ९७-१४८, ६६९-७२।

६. द्र० म० म० गोपीनाथ कविराज, दि डाक्ट्रिन ऑव प्रतिभा इन इण्डियन फिलॉसफी, सेलैक्टेड राइटिंग्स (१९९०)।

रकतया कल्पितस्तथा चेन्द्रियाणां देहनिश्रिततया अविशदज्ञानहेतुतया चानाश्वास्यत्वम्, बुद्धिमात्रगोचरत्वं चातीन्द्रियसतः, अपुरुषविधता तात्त्विकमस्तित्वं चेश्वरस्य प्रत्यपाद्यन्त[1]।

मध्यकाले आगमतर्कयोः समन्वयोऽसकृत् प्रतिपादितः। आगमेन दिव्यं सत्यं प्रतिपाद्यते। तर्केण ऐन्द्रियप्रत्यक्षसमनन्तरव्यापारवता सामान्यानि व्यावृत्त्या गृह्यन्ते तथा च मानवमर्यादाम् अनतिक्रम्य तत्त्व-प्रतिपत्तिः, एवं मानवीयबुद्धिजन्यं ज्ञानम् ईश्वरीयज्ञानम् आगमप्रकाश्यमप्राप्य अपि न तद् विरुद्धं भवति कदाचित्[2]। शीलविधिः आध्यात्मिकं तत्त्वमतीन्द्रियाः पदार्थाश्च न्यायेन आगमिकेनैव विनिर्णेयाः। तर्कबुद्धिस्तत्र व्यावृत्तिनिबन्धनं सामान्याकारमेव ज्ञानं लब्धुं शक्नोति।

आधुनिके युगे तत्त्वविचारकैः आगमप्रामाण्यं सर्वथैव त्यक्तम्। मानवीयग्रन्थसारूप्याद् आगमोऽपि मानवीयकृतिरेव। तस्य ईश्वररचितत्वप्रतिपत्तिः अन्धश्रद्धानिबन्धना एव। ज्ञानस्य पुनः द्वे एव साधने—ऐन्द्रियं प्रत्यक्षम्, बुद्धिव्यापारश्च तर्कानुमानादिः। देहातिरिक्तस्य चित्तव्यतिरिक्तस्य वात्मनः प्रमाणाभावादस्वीकारेण, लौकिकस्यैव मानवस्य तृप्तेः पुमर्थतया अभ्युपगमाच्च दर्शनमतीन्द्रियपरलोकादिविच्छिन्नं मानवीयं लौकिकञ्च सम्पन्नम्। तथापि आधुनिकविचारकेषु प्रत्यक्षवादबुद्धिवादयोर्विवादो विशेषेण समजनि। बुद्धिवादिभिरीश्वरास्तित्वप्रतिपत्तावथ आचारविषये समाजव्यवस्थाविषये राजनीत्यां च स्वतन्त्रबुद्धिरेव प्रमाणीकृता। ईश्वरोऽपि तैर्निर्गुणब्रह्मवद् मानवाकारस्वभावादिरहित एव परिकल्पितो मानवात्मनोऽपूर्णत्वबोधात् तत्प्रतियोगितया तथा परिच्छिन्नपरतन्त्रस्वभावस्य जगतो मूलत्वेनाक्षिप्तस्वभावः[3]। एवं स्कौलोस्टिकाचार्यैः साधितो मध्यकालिकः सन्धिरागमतर्कबुद्धयोराधुनिके काले भग्नः, तर्कबुद्धिश्च धर्मशास्त्रीयशिविरं विहाय स्वातन्त्र्यमेव स्वकीयं परलोकविमुखत्वं च उद्घोषयत्।

---

१. द्र० टेलर, प्लेटो ( १९६० ); अरिस्तोतिलेस, मेटाफिजिक्स ( अनु० वॉरिंगटन ), बर्नेट, ग्रीक-फिलॉसफी।

२. द्र० जिल्सों, द स्पिरिट ऑव मेडिईवल फिलोसफी, तु० विल डूरेन्ट, द एज ऑव फेथ।

३. तथा च देकार्तीयदर्शने उपपाद्यते ईश्वरास्तित्वम् द्र० मेडीटेशन्स।

प्रत्यक्षवादस्ततोऽपि दूरतरमुत्सारितवान् धार्मिकीमास्थाम् । आङ्ग्लदार्शनिक-चूडामणिः ह्यूमहाशयः प्रत्यक्षवादं तथा व्याख्यातवान् यथा लौकिकं ज्ञानं सम्भावनात्मकं तत्तद्विद्यात्मकमध्यात्मविद्यात्मकं तु नितान्तं सांशयिकमेव प्रतीतम् । तन्मतेन यत्किञ्चिदस्माभिर्ज्ञायते तस्य सर्वस्य द्वे एव मूले नीलपीतशीतोष्णाद्युपलम्भ ऐन्द्रियः, तद्विमर्शश्च[1] । एवञ्च प्रतिभासात्मकानि विकल्पात्मकानि च विज्ञानानि रचयन्ति मानवीयानुभवम् । तत्र ऐन्द्रियसंवेदनोपनीता एव विषया विमृश्यन्ते विकल्प्यन्ते च । अगृहीतमपि यद्यध्यवसीयते भ्रान्त एव सोऽध्यवसायः स्यात् । एतेन द्रव्यं कार्यकारणभावसम्बन्धः आत्मा चेति सर्व एवैते विकल्पाः प्रत्यक्षग्राह्यमतिक्रामन्ति, ततश्चाप्रामाणिका मन्तव्याः । गुणेषूपलभ्यमानेषु द्रव्यत्वारोपः, पूर्वापरीभूतेषु वृत्तेषु कार्यकारणसम्बन्धकल्पना, प्रत्ययप्रवाहे च तदतिरिक्तात्मविकल्पो मानाभावे सन्देहास्पदमेव । मानस्य प्रत्यक्षोपजीव्यरूपत्वात् । अनुमानं विकल्पानामन्तःसम्बन्धवशात्प्रवर्तमानं विकल्पमूलभूतप्रतिभासगृहीताकारान् नातिशेते । एतादृश्या ज्ञानमीमांसया अदृष्टाः शास्त्रीयपदार्थाः सर्व एव सन्दिग्धा भवन्ति । अस्मिन्प्रत्यक्षवादे विधेर्मूलमपि ज्ञानं न भवितुमर्हति तस्य तटस्थत्वात्, नैसर्गिकी प्रवृत्तीः रागद्वेषात्मिकैव विषयाभिमुखं विषयविमुखं वा प्रेरयते जनम् । कर्मणां दृष्टफलज्ञानं प्रवृत्तिनिर्दिष्टविषयेषु साफल्यार्थमेवोपयोगि, न तत् प्रवृत्तिं मूलतो निषेधितुं शक्नोति । तथा चाचारनीतिः समाजव्यवस्था राजनीतिश्च दृष्टसुखोपायतयैव निर्धार्या बुद्धिमद्भिः, न धर्मशास्त्रपर्यालोचनया ।

ह्यूमप्रवर्तितः प्रत्यक्षवादस्ततः प्रभृति अद्यावधि पाश्चात्यान् विचारकान् प्रबलतया प्रेरयति । तत्प्रतिपादितः संशयः परोक्षविषयेषु तदुत्तरवर्तिभिर्निषेध एव परिणामितः । तेषां मतेन यत्प्रत्यक्षोपलम्भयोग्यं नास्ति, तदसत्, तद् वचनमप्यनर्थकम्[2] । अदृष्टे मानाभावाद् जीवेश्वर-पाप-पुण्य-परलोकादिषु प्रतिषिद्धेषु धर्मस्वरूपं संवरणमात्रे लोकव्यवहारनीतिविशेष एव पर्यवस्यति[3] । एतया दृष्ट्या समाजविज्ञानविधासु धर्माणां तुलनापूर्वकं निरूपणं नानादिग्भिः प्रवर्तते । समाजविज्ञानप्रवर्तकः कौंतनामाचार्यः मानवबुद्धिमवस्थात्रयेण विवर्तिनीमाह । प्रथमावस्थायामनभिज्ञो मानवः प्राकृतिकपदार्थानां गतिपरिवर्तनादि विलोक्य तद् हेतुतया देवान् कल्पयामास । एषावस्था धर्मशास्त्रीया यस्यां नानाधर्मेषु

१. द्र० ह्यूम, एन एसे कन्सर्निग ह्यूमन अन्डरस्टैंडिंग ।

२. आधुनिकानां तार्किकप्रत्यक्षमात्रवादिनां लोजिकल पौजिटिविस्ट इत्याख्यानामिदं मतम् । द्र० फ्लू एण्ड मैकिन्टायर, न्यू एसेज इन फिलसौफिकल थियॉलजी ( १९५५ ) ।

३. तथा च बृहस्पतिमतमर्थशास्त्रे उद्धृतम्, द्र० कौटलीयम्, विद्यासमुद्देशः ।

यथेष्टं त्रिविधा देवाः कल्पिताः । द्वितीयावस्थायां सामान्यतत्त्वानि विकल्पितानि तत्त्वमीमांसकैर्दार्शनिकैः । तथा च प्रत्यक्षानियतत्वात् कल्पनाया अनेकांशै-र्निरङ्कुशत्वाच्च नानान्योन्यविरुद्धास्तत्त्वव्यवस्था मीमांसिताः । तृतीयावस्था वैज्ञानिकी अभिधेया प्रामाणिकज्ञानान्वेषणरूपा यस्यां तत्त्वानुमानं प्रत्यक्षनिदर्शनीयं भवति[1] ।

धर्मशास्त्राणि धर्मदर्शनानि चातीत्य प्रवर्तते धर्मतत्त्वविज्ञानं तुलना-त्मकम् । मोक्षमूलरीयं तुलनात्मकं ज्ञानं भाषाशास्त्रं वाङ्मयञ्च मुख्यत उपादाय प्रवृत्तम्, इदं च समाजशास्त्रीयं तुलनात्मकं धर्मविज्ञानं नानादिमसमाजानां जातोय-धर्मान् व्यवहाररूपान् प्रत्यक्षं पर्यालोच्य प्रवृत्तम् । प्रत्यक्षयोग्यव्यवहारेणैव धर्मोऽपि परिभाषितः । ननु कथं धार्मिको व्यवहारस्तदितरव्यवहारेभ्यो विवेचनोयश्चेद् अदृष्टकल्पनामूलकानुष्ठानपरिवर्जनादिलक्षणलक्षितो धार्मिको व्यवहार इत्यव-धेयम् । टाइलरप्रभृतिभिः संस्कृत्यङ्गभूत एव धर्मो निर्धारितः, संस्कृतिश्च तत्तद-वस्थजातीयसमुदायानाम् आचारविचारसमुदाचारसंहितारूपेण व्याख्याता[2] । एवं धर्मोऽपरिष्कृतमतीनामविकासावस्थानामादिमजातीनामेव लक्षणम् । टाइलरेण धर्ममूलभूतायै जीवकल्पनायै एनिमिज्म इत्याख्या दत्ता । स्वप्नेषु भ्रमे वा मृतान् बन्धून् आलोक्य अविवेकी मानवो देहातिरिक्तं जोवं कल्पयामास । तथा चाचेतनेषु तरु-वात-सूर्यादिषु गतिमत्तां विलोक्य तत्रापि चेतनान् पुरुषान् देवाख्यान् विभावया-मास । मैरेटमहाशयेन ऐनिमिज्म-स्थाने ऐनिमैटिज्म इत्याख्यो वादः पुरस्कृतः[3] । न चेतना अचेतनेष्वधिष्ठातारः प्रत्युत तदभिन्ना एव कल्पिता अभूवन्निति तस्याशयः । फ्रेजरमहोदयैः सुविदिते बृहद्ग्रन्थे स्वर्णशाखाख्ये धर्मानुष्ठानानि तदनुषङ्गितया च देवादिकल्पनं मिथ्येन्द्रजालान्नातिरिच्यन्ते स्मेति विभावितम्[4] । एवञ्च यथा यथा विज्ञानस्य समुन्नतिर्जायते तथा तथा धर्माख्यमिन्द्रजालवद् अपयाति मत्या-वरणं नीहार इव सूर्योदये ।

---

१ द्र० रेमाँ एरॉन, मेन करेन्ट्स इन सोसियोलॉजिकल थॉट, खण्डः प्रथमः पृ० ६५ प्र० ।

२. द्र० टाइलर, प्रिमिटिव कल्चर ( १९७१ ), एनिमिज्म इत्याख्यस्य जीववादस्यालोचनं दुर्कहाइमद्वारा अधोनिर्दिष्टग्रन्थे—पृ० ६८-७१ ।

३. द्र० मैरेट, द थ्रेशहोल्ड ऑव रिलिजन ( १९१४ ) ।

४. द्र० फ्रेजर, गोल्डन बाउ ( १९०७-१५ ) ।

"धारणाद् धर्म इत्याहुः" इति यदुक्तं धर्मलक्षणं तदत्र नृतत्त्वविद्याविचार्ये जातीयान्वितिलक्षणायाः संस्कृतेरभिन्नत्वेन परिलक्षिते धर्मे सम्यगेव घटते। किञ्च तत्सूत्रं येन जातीयसमुदायो दृढं समन्वेति, तदेव तु विचारणीयम्। पूर्वोक्तलक्षणो धर्मः सत्यनिष्ठाधृतसंस्कारनिबन्धनां व्यवस्थामाह। नृतत्त्वविदां मतेन जातीयनिष्ठा विज्ञानाज्ञानाभ्यां शबलायते। अदृष्टकल्पना तत्र अज्ञानाङ्गमेव। केचिद् धर्मनिष्ठां जातीयान्वितिसहायकं तत् प्रतिबिम्बमेव वा मेनिरे। तद्यथा दुर्कहाइम--आचार्यः समाजं दृष्टतथ्यरचनां मन्यमानः पवित्रापवित्र-विवेकमुपाश्रित्य प्रवृत्तनिष्ठाविशेषप्रयोजितं संघं धर्मं लक्षयामास ईश्वरं प्रति श्रद्धां च वस्तुतः समाजं प्रत्येव व्याचख्यौ। "न गणदेवो गणादन्यः" इति ब्रुवता तेन धर्मस्य गणसंहृतिकारित्वं मुख्यं कार्यमिति प्रत्यपादि[1]। अन्ये समाजसन्धानसूत्रं निगूढसंस्कारोपस्थापितमबोधपूर्वमपि भाषानियामकं व्याकरणमिवावधारयन्ति। तन्मतेन धर्मस्तत्तज्जातीयसंस्कारानुकूलवर्जनाभिः परिव्यूतः[2]। सर्वेष्वेतेषु मतेषु संस्कारानुष्ठानोत्सवादिप्रत्यक्षीकरणेन धर्मस्य अन्तःप्रयोजनं सामाजिकभूमिका च स्पष्टीभवति, नान्यत् किमपि तत्र सारमाध्यात्मिकं पारलौकिकं वा।

एतादृशं नृतत्त्वविज्ञानं धर्मं सर्वथा वार्तमानिकं प्रत्यक्षपर्यवेक्षणयोग्यं नियत-विकासावस्थं चावधारयत् तस्य अनियतेतिहासपरम्परारूपतां नितान्तमुपेक्षते, इतिहासश्चातीतरूपः शब्दचिह्नादिगम्यार्थरूपो वा न प्रत्यक्षयोग्यः। तथा च केवलया बाह्यप्रत्यक्षपरया दृष्ट्या व्यवहाररूपोऽपि धर्मो न पर्यालोचयितुं शक्यः[3]। व्यवहारस्यापि समीहाप्रयुक्तत्वात् समीहायाश्च मानसप्रत्यक्षविषयत्वात्। परव्यवहार-ज्ञानं परस्य प्रयोजनं भावं वा अज्ञात्वा कथं सम्यगालोचनपथमियात्[4]। न च प्रतिभागिप्रत्यक्षादिति वक्तव्यम्, तत्र हि पर्यवेक्षकः स्वविषयेण एकीभवन् जहात्येव बाह्यं तटस्थं च प्रत्यक्षम्[5]।

---

१. द्र० एरॉन, पूर्व०, २, पृ० २१ प्र०, दुर्कहाइम, एलीमेन्टरी फार्म्स ऑव रिलिजन (आँग्लानुवादः स्वेनकृतः, द्वितीयसंस्करणम्, (१९७६), पृ० ४१३ प्र०।

२. तु० दुर्कहाइम, पूर्व०, पृ० ४०९ प्र० एरोन, पूर्व० ख०२, पृ० ५० प्र०।

३. वाचां कर्मणां च वक्तुः कर्त्तुश्चाभिप्राये तात्पर्यम्, तदनवबुध्य कथं व्यवहारार्थोऽवगम्यः।

४. अतश्च वैबरेण फेरस्तान्ड (अन्तरवबोधः) इति वीक्षणात् पृथग् व्यापारः कल्पितः। द्र० ऐरोन, पूर्व० ख० २, १९१-९२।

५. नृतत्त्वविज्ञाने समाजविज्ञाने च जिज्ञासाप्रकारविषये तु० बौटोमोर, सोसियॉलजी (द्वि० सं०), पृ० ४८ प्र०।

अस्मादेव कारणात् वैब्रादिभिः सुविख्यातैर्विपश्चिद्भिः समाजविज्ञानमितिहासपुरस्सरतयावधारितम्। नानापुरुषार्थगवेषणासु धर्मेषणाऽप्यन्यतमा इतरसंश्लिष्टा च। आचारपरैर्विधिनिषेधैः संस्कारैरनुष्ठानैः संस्थाभिश्च धर्मकलेवरं मुख्यतया निष्पद्यते। इदमेव धर्मस्य व्यवहारात्मकं रूपम् ऐतिहासिकत्वाच्चास्य प्रतिसम्प्रदायं भेदानुगतं सामान्यं रूपमवधारणीयं तुलनार्थं रूपैः सम्प्रदायान्तरीयैः। विकल्पनेनावधारितं प्रातिमानिकं निदर्शनम् अनिवार्यतयापेक्ष्यते नानापरम्परागतानां संस्थानां तुलनार्थम्[1]। एतादृशो चावधारणात्मिका प्रणालो ऐतिहासिकीं तुलनात्मिकां चोभे पद्धती संजिगमयिषति। भिद्यते चेयमतो विशुद्धतुलनात्मिकायाः पद्धतेर्यथा फेनोमेनोलेजिकीयपद्धतेः, तथा च सामान्यतत्त्वम् ऐतिहासिकार्थेष्वस्वीकुर्वत्याः पद्धत्या ऐतिहासिक्याः[2]। प्रायेण तु कालक्रमेण विवर्तमानस्यार्थस्य मध्यमानमिव निदर्शनं विकल्प्यैव तुलना सम्भवति। तुलनायाः सर्वथाभावे तु कस्याचिदपि देशकालविशिष्टार्थस्य भिन्नदेशकालावस्थितेन एकवाक्यतया निरूपणीयत्वमेव न सम्भवति। अन्यथा श्रोत-स्मार्त-वैष्णवार्यसमाज-ब्रह्मसमाजादि-प्रभेदेषु कथं हिन्दूधर्म इति व्यपदेशः प्रयुज्येत, कथं वा क्रिस्तोपासकानां यह्वापासकानां वा नानानिकायविप्रकोर्णासु परम्परासु एकान्वयस्तुलना वा विधीयेत। तस्यामेव हि परम्परायां स एव शब्दोऽर्थान्तरं व्रजति, नानापरम्परासु नानापि शब्दाः सदृशार्थवाचका लक्ष्यन्ते। एवञ्च भेदपरम्परासु प्रयोजनापेक्षया भेदाग्रहपूर्वकं सामान्यकल्पनं विचारे अपरिहार्यमेव, यच्च विचारमात्रे अपरिहार्यं तत्सुतरां नानासमाजसंस्कृतिधर्मादीनां तुलनात्मके विचारे अपरिहार्यं स्यात्। तथापि नैतद् विस्मर्तव्यं यद् "आदर्शनिदर्शनानि" ( आइडियल टाइप्स ) भिन्नभिन्नाभ्योऽनुभूतिभूमिभ्यो विरूढानीति।

मैक्सवेबर-मतेन मानवप्रवृत्तिप्रकारेषु द्वौ मूर्धन्यभूतौ—परम्पराप्रयोजितः, तर्कसङ्गत-स्वहितेप्सा-प्रयोजितश्च। तयोरादिमो धर्मव्यवहारे प्रमुखतया लक्ष्यमाणः प्राचोनेषु समाजेषु प्राधान्यमभजत्, अपरस्तु अर्थव्यवहारे प्रमुखो नव्यसमाजेषु च। तथा चानयोः प्रवृत्त्योः सम्बन्धा धर्मेतिहासस्य मुख्यविषयतयालोच्याः। धर्मस्याध्यात्मिकः पक्षश्चेत् लाके समानचित्ततविशेषणत्वेनैव गृह्यते, न प्रत्यात्मवेद्यलोकोत्तरार्थत्वेन, तर्हि तस्य महत्त्वाकलनमर्थप्रधानलौकिकाभ्युदयप्रदानेनैव कर्तुं शक्यम्। तथा च संन्यास-तपः-सन्तोषादि-गुणानुपदिशन् धर्मो हिन्दूधर्मवन्नार्थचर्यां प्रोत्साहयति,

---

१. अयं वैबरीयः सिद्धान्तः आडियल टाइप् ( आदर्शप्रकारः ) इत्याशयः। द्र० एरोन, पूर्वं० ख० १, पृ० २०६ प्र०।

२. ऐतिहासिकपद्धतिविषये द्र० इलियाड ( सं० ) पूर्वं०।

काल्विनप्रवर्तितः सम्प्रदायस्तु संयमपूर्वकं कर्मयोगं शिक्षयन् धनसञ्चयमुद्योगवृद्धिं च प्रेरयति[1]।

हिन्दुधर्मं वर्णजातिव्यवस्थालक्षणं विमृशन् मैक्सवैबरपण्डितोऽवोचत्, नात्र नैतिकनियमानां सहजं निरपेक्षत्वं दृष्टम्, प्रत्युत तत्तत्सन्दर्भसापेक्षतैव तेषां व्यवस्थापिता, सार्वभौममानवीयाधिकारकर्तव्यानामुपेक्षापूर्वकं तत्र तत्तन्मर्यादासङ्कीर्णा एवाचारनियमाः प्रदिष्टाः। जात्यवच्छिन्नत्वं धर्मस्य प्रतिहन्ति तस्य विश्वजन्यत्वम्[2]।

अर्थचर्याया धर्मोदयव्ययहेतुत्वं भूयोऽपि प्रतिपादितं कार्लमार्क्साचार्यैः। दुर्कहाइम-वैबराचार्याभ्यां धर्मस्य कार्यकारणभावनियतसामाजिकतथ्यान्तर्भावोऽर्थचर्यामहत्त्वं च यत्प्रत्यपादि तन्मार्क्साचार्येण परां कोटिमनायि। हेगलीयविज्ञानवादं शीर्षासनं कारयित्वा मार्क्सेन नवीनो भौतिकवादः प्रतिष्ठापितः। स च वादस्तेन चिरन्तनाद् भौतिकवादाद् यान्त्रिक इति दत्ताख्याद् द्वन्द्वात्मक इति विशेषितः। भौतिकमेव मूलतत्त्वं स्वान्तःसङ्घर्षात् परिणमते, अपूर्वाणि च धत्ते रूपाणि। यथा विचारपद्धतौ तथैव मानवेतिवृत्तेऽपि स्वान्तर्विरोधवशात् समाजो विवर्ततेऽर्थतन्त्रप्रतिष्ठः। धर्मादयस्तु समाजसंस्थायाः परतन्त्रभागीयाः। अर्थव्यवस्थामनुसृत्य समाजरचना युगाद्युगं क्रान्तिं याति तथा च चिन्तनधारा धार्मिकी व्यवस्था च तत्समवेता पुष्यति प्रभुशक्तिविशिष्टं वर्गं मिथ्याचेतनां च। मानवः प्रविधेरुपयोगकौशलेन अर्थोत्पादकेन च श्रमेण जीवति, धर्मस्तस्य काल्पनिकमेव सुखमुपनामयन् पातयति तं भ्रमावर्ते[3]।

मार्क्सीयदर्शनं स्वात्मानं वैज्ञानिकं दर्शनं समाजविज्ञानमितिहासविज्ञानमित्याद्याभिराख्याभिराचष्टे। मूलतस्तु तदितिहासदर्शनमेव। भौतिकवादीनि चार्वाकादीनि दर्शनानि धार्मिकास्थाविषयान् बहुधा मृषा व्यवहारमात्रं च धर्मं प्रतिपद्यमानानि तत्र स्वार्थकुहकमेव पुरोधसां तदुपजीव्यानां च नरपतीनां सामन्तानां धनिकानां चापश्यन्[4]। न च तानि नियतेन क्रमेण विज्ञानप्रविधि-

---

१. तु० वैबर, ( आंग्लानुवादः ) द प्रोटेस्टेन्ट एथिक एन्ड द स्पिरिट ऑव कैपिटलिज्म ( न्यूयार्क १९५९ )।

२. तु० वैबर, द रिलिजन ऑव इण्डिया (१९५८ )।

३. तु० ऐरोन, पूर्व० ख० १, पृ० १११-८९, मार्क्स, क्रिटीक ऑव पुलीटिकल इकॉनमी ( अनु० १९०४ )।

४. तु० "संवरणमात्रं त्रयी लोकयात्राविदः" (अर्थशास्त्रम्)।

समाश्रितार्थतन्त्रपरतन्त्रेण वर्गसङ्घर्षक्रान्तिलक्षणेन समाजं विवर्तयन्तं न्यायं चावैषम्यलक्षणं स्वर्गमिव पृथिव्यामनागतेऽवतारयिष्यन्तमितिहासं कल्पयामासुर्यथा मार्क्सवादिनः। कथमचेतनभूतविवर्तो मानवं सृजति, कथं च परतन्त्रसमाजपरिवर्तनानि सुखोदर्काणि भावीनीति दुर्विज्ञेयम्। मानवस्य स्वातन्त्र्यं स्वपारतन्त्र्यपरिज्ञानादेव सम्भवतीति मार्क्सीयं मतम्। बुद्धिसहायश्च मानवः स्वभावचरितार्थतामन्विष्यन् विज्ञानपरिष्कृतया श्रमशक्त्या वर्गशक्त्या चाज्ञानेन अन्यायेन अभावैश्च युद्ध्यमानो राज्यशक्तिं भूयोभूयोऽन्यायकृद्भ्य आच्छिन्दन् इतिहासक्रमेण सिद्धिमाप्स्यतीति मार्क्सवादाभिप्रेतम्। नात्रेतिहासे काले वा काचिददृष्टशक्तिः कल्पिता।

इदमवधेयं यदस्मिन् मते नेतिवृत्तं धर्मतत्त्वस्यागन्तुकम्, येन तद् धर्मदर्शनेनोपेक्ष्यं स्यात्, प्रत्युतान्तरङ्गमेव तद्धर्मस्य। न धर्मः सनातनः कश्चित्पदार्थो नापीश्वरप्रकाशितो मानवबुद्धिप्रसूतत्वात्तस्य । ईश्वराद्यदृष्टार्थाभावाद् दृष्टार्थानां च विज्ञानविषयत्वाद् धर्मस्य वास्तविको विषयो मानव एव । मानवतत्त्वस्य सामाजिकसम्बन्धात्मकत्वं समाजस्य चेतिहासिकत्वं सम्यगजानन् धर्मशास्त्री तन्निरूपणे भ्राम्यति, मानवसम्बन्धानेव अयथार्थं साभिसन्धि च कल्पयित्वा तत्त्वाभासेष्ववतारयति। नात इतिहासस्य सम्यक् परिशीलनेन विना धर्मतत्त्वानामभिप्रायो बोध्यः। तथा च भारतीयधर्मो व्याख्यायते कैश्चिदधुना। स्मरणीयमत्र यद् हेगलो मानवं बुद्धिलक्षणं मन्यमानस्तद्विकासमात्मज्ञानविकासप्रयोजितं प्रत्यपादयत्, न भौतिकप्रविधिप्रयोजितम्। अन्ये पुनर्धर्मबुद्धिमेवेतिहासनियामिकां मन्यन्ते, ईश्वरेच्छां वा धर्मपक्षपातिनीम्। तथा चागस्तिन्-नीबूर-टोयनबी-आदयो भारतीयो वावतारवादः[1]। एतेषु मतेषु न धर्मस्येतिवृत्तेऽन्तर्भावः प्रत्युत इतिहास एव धर्मेऽन्तर्भवति। आस्तां तावद् धर्मदर्शनापेक्षा दर्शनापेक्षा वेतिहासव्याख्या, न हि सा विवादास्पदतां विहातुं समर्था। वस्तुत एतादृशे व्याख्याने इतिहासो विश्ववृत्तसङ्ग्रहनिरूपणात्मनाऽवधार्यते, न तु तदवधारणं युक्तिसङ्गतं भाति विश्ववृत्तसङ्ग्रहस्यासम्भवादेव, अथ कतिपयवृत्तसङ्ग्रहोऽभिप्रेत इति चेत् कथमुच्चेतव्यानि वृत्तानि विदितानामपि वैपुल्यादसङ्ग्राह्यत्वात्। क्षुद्राणि विहायेति चेत् क्षुद्रमहत्त्वविवेकः सुपरीक्षितनिरूपणानन्तरमेव सम्भवति न ततः प्राक् । पुनश्च घटिततथ्यनिरूपणं साक्ष्यापेक्षं भवति साक्ष्यं मूलतः साक्षिणोऽनुभव एव प्रमाणं न बाह्ये तद्विषये, वृत्तसाक्षिणो हि स्वस्वदृष्ट्या कञ्चिदंशं वृत्तस्य विज्ञाय बहुधा साभिनिवेशाः प्रयोजनविशेषापेक्षयैव

---

१. द्र० अगस्तिन्, दे सिविटाटिस देई ( आंग्लानुवादः ) नीबूर—एलियाड, पूर्व०, टॉयनबी, स्टडी ऑव हिस्टरी (नवीनमेकखण्डात्मकं संस्करणम्, १९७९)।

स्वोपलब्धिं लेखेन निबध्नन्ति। न तद्विवरणेभ्यः सम्पूर्णं निर्दोषं वा तथ्यमुपलब्धुं शक्यम् । नैकसाक्षिभिरवगतानां तथ्यानां तटस्थतथ्यत्वमात्रविश्रान्ते विवरणे विश्वासयोग्येऽपि यत्रापि तस्मिन् भावोद्बोधकत्वं श्रद्धाविषयत्वं वा वर्तते तत्र संशयोऽनिवार्यः । केनचिद् महात्मना सिद्धिः प्रदर्शिता न वेत्यत्र प्रत्यक्षीकरणवादेऽपि साक्षिणां संशयो नापैति तथा च बाह्यकृत्येषु प्रत्यक्षीकृतेष्वपि मनोऽभिप्राया हेतुफलसम्बन्धा वा दुर्लक्ष्या एव तिष्ठन्ति। तथा च प्राचीनलेखेषु विशदवाक्याक्षरेषु सत्स्वपि न तेषामर्था अभिप्राया वा सर्वदा समानरूपेणैव व्याख्याकृद्भिर्बोद्धुं शक्यन्ते ।

अतीताभिलेखानां प्रामाण्यपर्यालोचनया अर्थनिर्वचनाच्च तत्राभिव्यक्तचित्तस्याभिसम्बोध एव इतिहासस्य सम्यगर्थः, न चित्तबाह्यवृत्तान्तकथाख्यानम्, तादृशाख्यानानामसंख्यत्वाद् एकाख्यानस्य चासम्भवात् । एवमवधारिते इतिहासतत्त्वे धर्मदर्शनपरिशीलनस्य इतिहासपुरस्सरत्वमनिवार्यमेव । धर्मग्रन्थानां तत्तद्युगीनभाषाविद्धानां देशकाल-पात्रादि-विशेषितनानासन्दर्भाणां प्रामाण्यमर्थो वा न सूक्ष्मान्वेषणेन विना सम्यगुपलभ्यते । तद्यथा महायानसूत्राणां तथागतरचितत्वं सन्देहं याति ऐतिहासिकपरीक्षणेन वेदानामर्थनिर्णये भाषेतिहासविवेचनमेव दुर्निवारं भाति, प्रभोर्यीशोराख्याने सिद्धिचमत्कारप्राचुर्यं केषाञ्चिज्जनानां श्रद्धां जनयत्यन्येषां संशयम्[1] ।

ननु जीवनचरितादिविवेचने सम्प्रदायेतिवृत्तविवेचने ग्रन्थसम्पादने वा पूर्वापरविशेषस्यैतादृशी परीक्षापद्धतिरुपयुज्येत, न तत्त्वालोचने इति चेद् बाढम्, विशुद्धदार्शनिकतत्त्वविवेचने तत्कालप्रचलितावस्थानुरोधेन स्थिरीकृतमर्यादे शास्त्रार्थे तु काममितिहास उपेक्ष्यताम्, स्वकीयपरम्परानैरपेक्ष्येण समयमुक्ततया यत्र तत्त्वानि विमृश्यन्ते देशकालविप्रकृष्टानामाचार्याणां सम्प्रदायानां वा सिद्धान्ता आलोच्यन्ते, तत्र कथं तेषामितिहास उपेक्षाविषयः स्यात् । धर्मदर्शनविचारणे तु तत्तद्धर्मप्रवर्तकचरितानामैतिहासिकत्वमेव प्रथमं विचारमर्हति। किं यीशुः प्रभुर्मृत्योरनन्तरं पुनरुत्थितः, वासुदेवः कृष्णो वा ऐतिहासिकः पुरुष आसीद् इत्यादिप्रश्ना इतिहासपरीक्षामेवाक्षिपन्ति ।

परमार्थतश्चित्तस्य क्षणिकत्वाद् हेतुप्रत्ययनियतत्वात् सन्तानवर्तित्वात् स्वानुभववासनाविवर्तित्वाद् मौलिकमेव ऐतिहासिकत्वम्, चित्तातिरिक्तेषु विषयेषु तु ऐतिहासिकत्वमौपाधिकमेव[2] । ज्ञानकर्मादीनां चित्तव्यापारनिबन्धनत्वाद् अनु-

---

१. तथा चैतिहासिकैः संशयपुरस्सरं समीक्षिताः क्रिस्तीयधर्मागमाः —द्र० पेलिकन थियॉलजी, त्रयः खण्डाः ।

२. द्र० मम मीनिंग एन्ड प्रोसेस ऑव कल्चर ।

प्रविष्टं तत्र सूक्ष्ममैतिहासिकत्वम् । चित्तनिरपेक्षा अपि चेद् बाह्यार्था अभ्युपगम्यन्ते, न ते यथावत् साक्षाद् ज्ञायन्त इति तदा स्वीकर्तव्यमन्यथा भ्रान्तेरेवाभावात्, न हि तेषां ज्ञानमभ्रान्तमादर्शप्रतिबिम्बवद् अन्यथा भ्रान्तेरेव असम्भवात् । बाह्यार्था इन्द्रियविकारेण चित्तविकल्पनेन च गृहीता अनियतज्ञानविषया एव । तत्त्वानि नित्यानि स्वतन्त्राणि चेत् स्फुटमेव तेषां शब्दाभिधेयं ज्ञानं विकल्पात्मकत्वाद् न नित्यम् । अथवा तत्त्वानि विकल्पा एव स्युः । प्रातिभज्ञानविषयस्तु अभिलाप्यतामतिक्रामति । अदृष्टार्थप्रतिपादकशास्त्राणां प्रामाण्यं तत्प्रवर्तकपुरुषवैशिष्ट्यनिबन्धनमिति प्रवर्तकचरित्रेतिहासपरीक्षा तत्र प्रामाण्यपरीक्षाङ्गमनिवार्यतयैव । एवञ्च धर्मपरम्परासु ये सिद्धान्ताः परवर्तिनि काले उपलभ्यन्ते, तेषां प्रामाण्यं समूलं न वेत्यत्रापि इतिहासान्वेषणमेव निर्णयावहम् । तद्यथा क्रिस्तानुयायिषु त्रिमूर्तिसिद्धान्तो बौद्धेषु वा त्रिकायसिद्धान्तो वैदिकधर्मे संसारवादो वा । तेषां मूलमागमेषु विद्यते न वेति इतिहासपरीक्षयैव निश्चेतव्यम्[1] ।

इतिहासं सर्वथोपेक्ष्य नैके धर्ममीमांसाभेदा इदानीं प्रवृत्तास्तद्यथा बार्थाचार्यस्य भेदपरकशास्त्रम् 'डायलैक्टिकलथियोलजी', किर्केगार्ड--प्रभृतीनामस्तित्ववादस्तथा च भातिवादः ( फेनोमेनोलाजी । बार्थाचार्यमतेन धर्मो न संस्कृत्यङ्गभूतः प्रत्युत मानवेश्वरयोः स्वभावमात्रनिष्ठः सम्बन्धः । नास्य ज्ञानम् इतिहासेन ऐतिहासिकेन सम्प्रदायेन वा साध्यते । मानव ईश्वरान्नितान्तभिन्नः । ईश्वरोऽनन्तः । जीवः शून्यस्तुच्छः । स्वात्मनस्तुच्छत्वबोधेन मनुष्य ईश्वरं प्रपद्यते । ईश्वरशब्दश्चागमरूपस्तत्कृपाद्वारं येन मनुष्यस्तत्सान्निध्यमनुभवति । एवञ्च ईश्वरवचनमेव मनुष्यस्य स्वेश्वरयोर्भेदसागरं तरीतुं प्लवः[2] । संवेगश्रद्धातिरेकाभ्यां जायमानया प्रपत्त्या सर्वथातिक्राम्यपीश्वरः सन्निकृष्यत इवेत्यत्र तत्त्वम् । ईश्वरमानवयोरात्यन्तिके भेदे कथं तयोः सम्बन्धः सम्भवेदिति त्वनुयोज्यम् ।

अस्तित्ववादो मानवस्य प्राकृतविषयातिरिक्तत्वं मर्त्यत्वं स्वातन्त्र्यबोधं त्रातरीश्वरेऽहेतुकं विश्वासं प्रपत्तिं च पुरस्करोति । न हेतुभिस्तर्कबुद्धया वा ईश्वरास्तित्वे विश्वसितुं शक्यम् । तथापि ज्ञानाभावेऽपि स्वतन्त्रसङ्कल्पदार्ढ्येन ईश्वरो मनसा प्राप्यः । स्वास्तित्वबोधप्रयोजितो मनुष्यः स्वातन्त्र्यबलादेव ईश्वरं प्रपद्यते[3] ।

---

१. द्र० मम स्टडीज इन द ओरिजिन्स आॅफ बुद्धिज्म ।

२. द्र० एलियाड (सं०) पूर्व०; पेलिकन थियोलजी ।

३. सिक्स एग्जिस्टेन्शलिस्ट थिंकर्स ।

भासमानेषु धर्मेषु तात्त्विकम् आकारं प्रकारान् वा यथार्थं निरूपयितुं भातत्त्वविज्ञानवादिन उद्युञ्जते। इतिहासविदोऽन्ये च तुलनापूर्वकपरीक्षका नानादेशकालविशेषितधर्मप्रकारान् तुलायित्वाधीयते, भातिविज्ञानविदस्तु प्रत्यक्ष-ग्राह्यार्थाकारान् देशकालविशेषेभ्य व्यावृत्यो कोष्ठकीकृत्येति यावत् प्रतिभासप्रकारं तत्त्वमिव साक्षाद्भासमानं पर्यालोचयन्ति। तथा च धर्मतत्त्वमपि गृहीततथ्येभ्यो व्यावृत्य यथावद् निरूपयितुम् इच्छन्ति। चित्तमात्रमेते सविषयमवधारयन्ति विषयांश्च चित्तविभक्तान् तात्त्विकस्वरूपनियतान्। यथास्थिततत्त्वप्रतिवेधश्च बुद्धिप्रतिभानेन कार्यः। प्रत्यक्षानुमानाश्रितात् प्रकृतिविज्ञानात् मूलतो भिन्नमेव देशकालकारणाभिव्यक्तपदार्थानां भातिविज्ञानाविषयत्वात्[१]। प्रत्यक्षपदार्थानां हि नियामकत्वं तेषामाकारमात्रसारे बुद्धिगोचरे तत्त्वे निश्चिन्वन्ति गोलत्रिकोणा-दीनामिव लक्ष्याणां तत्तल्लक्षणेषु। तथा च मानवास्तित्वप्रयोजितानां भावानां स्वरूपाक्षिप्तविषयाकाराणां भावानां वा चैतन्याक्षिप्तानां तत्प्रतिसंविदितानां च बुद्धिप्रतिभया निरूपणमिच्छन्ति। स्वसत्ताबोधः स्वनिधनाशङ्का उपासनामात्रे उपास्यस्याद्भुतमहिमेत्यादीनां निरूपणेषु स्फुटीभवति प्रतिभाविज्ञानविदां प्रतिभा[२]।

ननु शास्त्रीयतत्त्वोपदेशास्तथा च आचार-व्यवहार-नियमाश्चेद् धर्मस्य बहिरङ्गतया उपेक्ष्यन्ते अन्तरतमश्च प्रत्यगनुभूतिपक्षस्तस्याभिषज्यते प्रधानपदे धर्ममीमांसा प्रत्यगनुभवमीमांसा सतो नातिरिच्येत मनोविज्ञानाद् इति शङ्कायां वक्तव्यम्—मनोविज्ञाननिरूपणानि धर्मतत्त्वमन्तर्भावयन्त्येव तदभिव्यक्त्युपादाने चित्ते यथा पङ्कजं कश्चित् पङ्कमयं ब्रूयात् प्रतिबिम्बं च काचमयम्। भ्रान्तिश्चैषा मनोविज्ञानविद्भिर्बहुशो निर्दशिता। तद्यथा फ्रायडाचार्यः प्रेटमहाशयश्च धर्ममूलमन्तर्निगूढप्रतिहतायां कामवासनायाम् एकाग्रभावनाभिभूतमतिव्यामोहे वा निरविन्दताम्। ननु "कामस्तदेकः समवर्तताग्रे मनसो रेतः प्रथमं यदासीदि"ति श्रुत्यापि किं न कामस्य मूलभूतत्वं प्रतिपाद्यत इति चेद् बाढम् अस्त्येव कामो मूलम्, तथापि द्वे दिशौ कामस्य लोके दृश्येते ऐन्द्रियसुखाभिमुखो, भूमाभिमुखी च। एकया कण्टकाकीर्ण इव मार्गे प्रचरन् क्लिश्यते, अन्यया विशुद्ध्यति स्वरूपानन्दं चोपैति। कामसुखमिति यन्निन्द्यते यच्च प्रशस्यते अकामहतं सात्त्विकं सुखमिति तयोर्भेदे स्फुटेऽपि गभीरः कश्चिदन्वयस्तयोर्निभालनीयः सूक्ष्मदृशा यथा जलप्रणा-लिकायामेकस्यां निरुद्धायामपरस्यां चेल्लक्ष्यते जलाभिवृद्धिरनुमीयते ततस्तयो-र्निगूढः सम्बन्धः। अतश्चोक्तम्—

---

१. द्र० निनियन् स्मार्ट, सायंस ऑव रिलिजन, मार्विन फर्बर, फैनमेनोलजी, तु० यशदेव शल्य, विषय और आत्म, एलियाड ( सं० ) पूर्व०। २. स्मार्ट, पूर्व०।

"विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते"॥

अत्र हि तेनैव रसेन सर्वोऽपि विषयभोग आसिक्तो दर्शितः। तथा च तैत्तिरीयश्रुतिः अस्यैवानन्दस्य मात्रामित्यादिः[1]। ब्रह्मवित्तमाश्च याज्ञवल्क्यमहर्षयः स्पष्टमेवावोचन् "आत्मनस्तु कामाय सर्वं प्रियं भवति"[2] इति। फ्रायडमहोदयस्तु कामं स्वच्छन्दं प्रज्ञाविरोधित्वाच्च मर्यादान्धं निरूपयन् कामविशोधनमशक्यममन्यत। तन्मतेन स्ववशे धावन् कामः सन्तृप्येत वा प्रतिहन्येत वा। प्रतिहतश्चासंविदिते चित्तगह्वरे निलीनः स नाना विकारान्, आधिव्याधींश्च जनयति। कदाचिच्च विषयविशेषानाकारितस्य तस्यार्जा सृज्यन्ते काव्यादीनि सङ्केतवर्तीनि। तथा स्वदमनोन्नयनाभ्यां कामो व्याप्नोति धर्मचर्यामिति[3]।

अत्र कामस्य अप्रतिबोधत्ववादः स्वरूपतो ज्ञानविरोधित्ववादो वा भ्रान्तिकारणम्। ननु कामस्य अज्ञानमूलत्वादज्ञानस्य च तमोरूपत्वात्कथमत्र शास्त्रसम्मत इव सिद्धान्ते भ्रान्तेरारोपः क्रियत इति चेत्, श्रूयताम्—फ्रायडीये मतेऽचेतनभूयिष्ठस्य चेतसः कामनिलयस्य प्रवृत्तिमतः कश्चिदुपरितनश्चेतनो भागः प्राणिनो बाह्यार्थैषणाप्रयुक्तस्य बाह्यार्थानुकूल्यं सम्पादयतः प्रवृत्तिसाफल्यनियमाशयो भवन् बुद्धिरित्याख्यायते सेव च धर्मवृत्तेरप्यधिष्ठानं चेतनस्याहमोऽन्तर्देशिकोऽपि। अनयोश्चाहमिदमोर्धर्मकामवृत्त्योः स्वर्वासिविवरवासिनोर्देवासुरयोरिव प्रवर्तते सततं सङ्घर्षः। नास्मिन्मते आत्मा वा विशुद्धं चैतन्यं वा स्वीक्रियते येन चित्तनिवृत्तौ कामनिवृत्तौ वा स्वरूपोपलब्धिः स्यात्। न वा बौद्धमतवदत्र चेतसः प्रकृतिप्रभास्वरत्वमागन्तुकमलत्वं वाभ्युपगम्यते येन कामविजये बोधिप्राप्तिः स्यात्। न वाऽशुद्धकामः शुद्धकामस्यैव मलिनप्रतिबिम्बतयाऽवधार्यते। ये मनोविश्लेषका युगानुयायिनोऽचेतनं चित्तं जातीयवासनाशयं मन्वते तेषां मतं पौराणिकाख्यानविशदीकरणार्थमुपयोग्यपि नात्माभावदूषणान्मुच्यते[4]।

---

१. द्र० तै०;     २. बृ०।

३. फ्रायड, दि फ्यूचर ऑव एन इल्यूजन ( अनु० १९२८ ), द ईगो एण्ड द इड ( १९२३ ), तु० रीफ, फ्रायड, द माइण्ड ऑव ए मौरलिस्ट ( १९६१ )।

४. फ्रीडाफोर्डहम, यंग्स साइकोलजी (पैलिकन)।

येन तु योगानुभूतिरात्मसम्मोहनत्वेन व्यामोहत्वेन वा व्याख्याता तेन योगार्थ एव नाववुद्धः[१]। न ह्येकाग्रतामात्रं योग उच्यते, एकाग्रभूमिकचेतसस्तु एकाग्रता योग इत्युच्यते[२]। पुनश्च न भावनामात्रं योगः, अपि तु विचारद्वारा सत्यत्व-निर्धारणपूर्वं भावना योगाङ्गमिति[३]। अपि चानुभूतेः प्रामाण्यं न्यासङ्गतेरन्याभिज्ञ-संवादात् प्रवृत्तिसाफल्यात् सदाचारपोषकत्वाच्च परीक्ष्यम्। तथा च विलियम-जेम्सा-चार्यैरुद्धृतम् — "स्वकर्मभिस्ते परीक्षिष्यन्ते"[४]।

धर्मस्वरूपचर्चया प्रक्रम्य इदानीं धर्मदर्शनस्वरूपालोचनेन समापनीयम्। दर्शनमिदं धर्मविज्ञानेतिहासौ कथं स्वकुक्षौ प्रवेशयतीवेति संशयो मा भूद् यतः "प्रदीपः सर्वविद्यानामिति" प्रसिद्धं दर्शनं तथैव विद्यान्तरमपेक्षते यथा प्रदीपः प्रकाश्य-पदार्थान् यदभावे अप्रतिफलिताः प्रकाशकिरणा नायान्ति दृष्टिपथम्, दर्शनमप्यन्वी-क्षात्मकमीक्षामुपादाय प्रवर्तते, सेक्षा पुनः प्रत्यक्षजन्या स्यात्तत्तदागमजन्या वेति प्रसिद्धमेव[५]। तत्र प्रत्यक्षज्ञानस्य न्यायेनालोचनमेवाधुना बहुभिर्विज्ञानमित्युच्यते[६]। यच्च नानागमाहृतं ज्ञानं तदन्वीक्षकेण दर्शनेन परामृश्यमानं तत्तज्ज्ञानेतिवृत्तान्नाति-रिच्यते सम्प्रदायमात्रस्य ह्यैतिहासिकत्वात्। स्वयं दर्शनमपि सम्प्रदायरूपेण वर्तमानं स्वेतिहासस्मृतिं विनावस्थातुं न शक्नोति। पूर्वाचार्याणामितरसम्प्रदायानां वा स्मृतिरितिहासरूपैवोपलभ्यते, न च तया विना कस्यचित्समुदायस्य प्रतिष्ठा वृद्धिर्वा।

ननु ईक्षापूर्वकत्वेऽप्यन्वीक्षायाः, नान्वीक्षा ईक्षैव, तथा च नानाशास्त्रपुरस्सर-त्वेऽपि दर्शनस्य तेभ्यो विविक्तमेव तत् (दर्शनम्), तदेव चात्र विवेचनीयमिति चेदुच्यते, यथा दृष्टान्तरहितं निर्विषयं वा ज्ञानं न विशेषेण प्रतिपादयितुं शक्यं तथैव ज्ञानेन विना ज्ञाननीतिन्र्यायात्मा निर्धार्या प्रतिपाद्या च न भवति। इदं च विषयभूतं

---

१. प्रैट, द रिलिजस कौन्शसनेस।
२. तु० योगभाष्यम्।
३. तु० ज्ञानश्रीमित्रस्य, निबन्धावली।
४. द्र० विलियम जोन्स, वैरायटीज ऑव रिलिजस एक्सपीरियन्स।
५. द्र० वात्स्यायनभाष्यम् — १.१।
६. तु० नागल, स्ट्रक्चर ऑव सायन्स।

ज्ञानं सामान्यानुभवात्मकं चेत्तत्प्रकाराविष्कारनीत्यात्मकं दर्शनं न्यायशास्त्रं तर्कशास्त्रात्मकं वेत्यभिधीयते। विद्याविशेषानुगृहीतं चेत्तज्ज्ञानं तदन्वीक्षा अध्यात्मदर्शनव्याकरणदर्शनादिव्यपदेशेऽव्यपदिश्यते। तथा च धर्मदर्शनमपि।

ननु एवमपि धर्मदर्शनं धर्मशास्त्रमेवापेक्षेत नेतिहासादिकमिति चेद् बाढम्, धर्मशास्त्रमेवापेक्षते साक्षात् किन्तु तुलनात्मकं धर्मशास्त्रं स्वान्वेष्यपदार्थान् देशकालमुक्तान् नावधारयति, अपि तु ऐतिहासिकानेव। पुनश्च ये तेषु पदार्थेषु न श्रद्दधते, ते तन्निरूपणं विज्ञानविशेषविषयतयाऽभ्युपगच्छन्ति। इत्थं नवीनं तुलनात्मक धर्मशास्त्रं विज्ञानेतिहासाभ्यां नापरिगृहीतम्, तद्दर्शनमपि द्वयं पुरस्कृत्य प्रवर्तते। तथा च हेगलीयं धर्मदर्शनं नीबूरीयं वा इतिहासदर्शनाभिन्नमेव। ये पुनः धर्मशास्त्रविशेषे ऐकान्तिकीं श्रद्धां दधते यथा स्कौलेस्टिकदार्शनिका मीमांसका वा, ते धर्मदर्शनम् इतिहासनिरपेक्षमवश्यं मन्येरन्। ये च सर्वेष्वपि धर्मशास्त्रेषु ऐकान्तिकीम् अश्रद्धामेव दधते तथा नवीनसमाजविज्ञानविदः प्रत्यक्षवादिनो वा दार्शनिकास्ते धर्मदर्शनं भ्रान्तिमात्रं विज्ञानसापेक्षं मन्यन्ते।

यावता धर्मदर्शनं तर्कशास्त्रमात्राद् विशिष्टं दर्शनं यावता चेदं ज्ञानक्षेत्रविशेषमवगाहते तावता धर्मसम्प्रदायानां तुलनात्मकेतिहासोपलब्धतत्त्वान्यनालोच्य न सम्यक् प्रवर्तितुं शक्नोति। नापि धर्ममात्रप्रतिक्षेपिविज्ञानोपारूढदर्शनमसमीक्ष्य स्वप्रतिपादने युक्तियुक्ततां समर्थयितुं शक्नोति। अतश्च पारम्परिकधर्मशास्त्रमात्रानिमग्नं तर्कशास्त्रमात्राच्च विशिष्टं धर्मदर्शनं न धर्मेतिहासं न वा धर्मविज्ञानमुपेक्षितुं शक्नोति।

ननु दर्शनं प्राक्सिद्धान् प्रत्ययानेवालोचयति नानुभवव्यवहारसिद्धांस्तथा चेतिहासविज्ञानयोः सर्वथानुभवपरतन्त्रत्वाद् न दर्शनस्य ताभ्यां किमपि साम्यम्, न च धर्मदर्शनमेवासङ्गतं स्यादिति वक्तव्यम्, धर्मस्यापि प्राक्सिद्धानादिवासनाजन्यप्रत्ययरूपत्वादिति चेत्, न, तादृशविशुद्धप्रत्ययानां सम्यग्बोधोऽपि नानुभवविवेचनाद् विना सम्भवति यथा सामान्यानां विशेषालोचनेन विना। अयं च निर्गलितार्थः, तुलनात्मकधर्मदर्शनं परम्परागतधर्मदर्शनाद्भिद्यमानं नवीनामेव धर्मतत्त्वमीमांसादिशमुद्योतयति। एवञ्च धर्मदर्शनं पारम्परिकं तुलनात्मकं वा आगमानुसारि, न्यायानुसारि वा, धर्मानुरोधि धर्मविरोधि वा। सर्वत्र च धर्मतत्त्वजिज्ञासा मूलभूता नवीनावतारं जिघृक्षति।

धर्मस्य त्रिभूमिकत्वाद् उपरिनिर्दिष्टात् तदीयदर्शनालोचनस्यापि त्रैविध्यम्। आगमार्थविवेचनेन, आगमार्थविवेचकशास्त्रालोचनेन, शास्त्रीयसिद्धान्तविवेचकदर्शनालोचनेन च त्रिधा विभज्यते धर्मदर्शनम्। आगमविवेचनस्योदाहरणं लक्ष्यते श्रीमदरविन्दस्य वेदानुव्याख्यानेषु, शास्त्रान्वीक्षायाः शङ्करभगवत्पादादिभाष्येषु, शास्त्रीयदर्शनालोचनं पुनर्भाष्यकाराणामन्योन्यसिद्धान्तविवेचनेषु। श्रीमदरविन्दो वेदवाक्यानि महर्षीणां साक्षात्कारव्यञ्जकानि मत्वा तत्र निगूढानर्थान् व्याचष्टे। आर्षानुभूतिरेवात्र विशदीक्रियते न पुनः शास्त्रार्थाः प्रतिपाद्यन्ते लक्षणैः प्रमाणैर्वा। जैमिनीय-बादरायणीयशास्त्रयोरालोचिताः सिद्धान्ता नानाभाष्यकारैः, प्रस्थानानि च रचितानि विभिन्नानि कुमारिलभट्ट-प्रभाकर-शङ्कर-रामानुजाद्यैः। एतेषां प्रस्थानानां मूलभूता अभ्युपगमाः प्रतिपत्तयश्च तैरेव परस्परं भृशमालोचिताः, यथा शङ्कराचार्येण साङ्ख्यानां रामानुजेन शाङ्करदर्शनस्य। उदयनाचार्यस्य आत्मतत्त्वविवेको बौद्धदर्शनमालोचयति, बौद्धानां तत्त्वसङ्ग्रहो बौद्धेतरदर्शनान्यालोचयति। एतादृशमालोचनं धर्मसम्प्रदायानुगतशास्त्रीयप्रस्थानानां पारस्परिकदार्शनिकमालोचनं निदर्शयति। प्रायेण आधुनिकानि दर्शनानि अस्मिन्नेव विभागे निवेश्यानि। ननु निरागमत्वादाधुनिकदर्शनानां स्वतन्त्रप्रज्ञामूलत्वाच्च कथं तानि प्राचीनैः शास्त्रीयदर्शनैस्तुलनीयानीति चेत्, तेषामपि साभ्युपगमत्वाद् अभ्युपगमानां च परम्परया शास्त्रमूलत्वात्तद्विरोधे वा कल्पितत्वात्। हेगलादयो बुद्धिवादिन ऋषिकल्पैर्यवनाचार्यैः क्रिस्तीयधर्मशास्त्रिभिश्च भावितानर्थानाश्रयन्ति स्वमूलप्रतिपत्तिषु बुद्धिमात्रसाक्षात्कार्यतत्त्वपरासु। प्रत्यक्षवादिनस्तु लोकायतिकोपमा अदृष्टप्रतिषेधका धर्मशास्त्रीयपदार्थान् व्यवहारमूलकयुक्तिभिः खण्डयन्ति विपरीतांश्चार्थांस्तत्र कल्पयन्ति। फलतः शास्त्रसमर्थकानि शास्त्रविरोधकानि वा सर्वाण्येतानि दर्शनानि नवानि प्राचीनानि वा दृष्टिभेदमेवैकान्तिकं मत्वा प्रवृत्तानि प्रस्थानभेदं निदर्शयन्त्यसमाधेयम्। ततश्च "श्रुतयो विभिन्नाः स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं न भिन्न"मिति विलोक्य संशय एव बहुलायते। आगमाः शास्त्रैर्दृढतरं पृथक्पृथक् प्रस्थानेषु निबध्यन्ते, शास्त्रीय-सिद्धान्ताश्च तार्किकैरसद्धेतुकाः सत्प्रतिपक्षिता वा साध्यन्ते। तथा च योशोरीशपुत्रत्वमीशस्य च त्रिमूर्तित्वं मुहम्मदीयसम्प्रदाये निषिध्यते। ससारवादो न स्वीक्रियते भारतीयेतरसम्प्रदायैः। न वा

वेदानां नित्यत्वमवैदिकैः। ईश्वरं न स्वीकुर्वते बौद्धा आर्हता वा। अद्वैतवादं प्रहरन्ति द्वैतिनस्तर्ककर्कशाः। कियद्वा निबध्यतां विस्तरो भेदानां नानाप्रस्थान-गतानाम्। तुलनात्मकपद्धतिमाश्रित्य प्रचलितानि च नवीनानि दर्शनानि समाजशास्त्राणि वा भेदानेतान् विकल्पमूलान् इतिहासनिबन्धनान् वा प्रतिपाद-यन्ति। शास्त्रीयसम्प्रदायाः स्वेतरसम्प्रदायसिद्धान्तान् मिथ्या घोषयन्ति।

विवादसङ्ग्रामेऽस्मिन् अनिश्चयान्धकारे च अदृष्टान्येव लक्ष्याणि गृहीत्वा विध्यन्ति तर्कायुधजीविनः संशप्तका इव जुह्वति स्वमतीः प्राणायमानाः। विषमेऽस्मिन् समुपस्थिते कथं युद्धविरामः सम्पाद्यः कथं विजयः सत्पक्षस्य सन्धिर्वा तात्कालिकः। कथं वा सत्पक्षो निर्णेतव्यः। समाधानमार्गमन्वेषमाणेन प्रथमतस्तु इदमालोच्यं यद् व्यवहारबुद्धिः प्रमाणैः प्रत्यक्षयोग्यानर्थान् अन्विष्यन्तो विज्ञानात्मिका विद्याः साधयति प्रामाण्यं च सहेतुकं तासु विचारयन्ती स्वपरामर्श-द्वारा तर्कशास्त्रं रचयति सर्वविद्याप्रदीपम्। यदा च व्यवहाराद् व्यावृत्ता मूलविकल्पान् परोक्षांश्चार्थाननुसन्धत्ते तदा नियामकाभावादन्तर्द्वन्द्वतां प्रतिपद्यते। सफलानुभवाकलनसम्भावनाजन्यपरिप्रेक्षणस्थाननियतदृष्टिनिविष्टमैकान्तिकत्वं प्रति-पन्नस्तर्कः स्वभावत एवाप्रतिष्ठः। तच्चाप्रतिष्ठितत्वमस्यालङ्कार एव नित्यनूतनोद्भावनाभिः सम्भाव्यार्थोपन्यासिकाभिर्युक्तिभिः परिष्कारपुरस्कारि-काभिः प्रवर्तमानस्य। नूतना दृष्टयो नवीना विकल्पा अपूर्वा युक्तयो दूषणानि च नूतनानि शतशः समाविष्क्रियन्ते तर्कप्रचारेण। तर्कयानारूढस्य युक्त्यायुधस्य नास्त्यन्ता दिग्विजययात्रायाः।

ननु अनेकान्तवादिनोऽपि सन्ति तार्किका ये नयसोपानपरम्परया आंशिक-सत्यालोचनेन परमार्थमारोहन्ति यथा हेगलीया आर्हता वा प्रकारान्तरेणेति चेत्, न, नयदूषणेनैव निर्दोषज्ञानानुपलब्धेः। दृष्टिसापेक्षो हि नयप्रमाणयोर्भेदः, प्रतिपत्ति-तारतम्यमपि दृष्टिनयापेक्षम्। परमार्थसद्वस्तु गुण एव क्षणिकः, द्रव्यं वानित्यम्, आत्मबोधो वा द्रव्यगुणादिपदार्थातीत इत्यादिषु विकल्पेषु न तर्कमात्रं विनिगमक-मुपन्यसितुं शक्नोति। क्षणिकत्ववादिनो द्रव्यमात्मानं च प्रतिषेधन्ति, द्रव्यवादिन आत्मानं द्रव्यं बुद्धिं च गुणमाचक्षते, आत्मवादिनो द्रव्यवादिन आत्मानं द्रव्यं बुद्धिं च गुणमाचक्षते, अद्वैतिन आत्मवादिनो द्रव्यगुणादीनां दृश्यत्वमेव तन्मिथ्यात्वे हेतुं प्रतिपादयन्ति। धर्मकीर्त्युदयनमधुसूदनसरस्वतीनां को वरिष्ठस्तार्किकः?

ननु सर्वा एव दार्शनिकप्रतिपत्तयस्तर्हि मिथ्यैवावगन्तव्या यथा प्रतिपादयन्ति माध्यमिका अद्वैतिनश्च श्रीहर्षादयस्तासां विचारविशरारूढत्वम् इति चेद् बाढम्। तार्किकाणि मतान्यैकान्तिकानि चेत् प्रतिपाद्यन्ते न तानि तथा विश्वासार्हाणि। द्वन्द्वबुद्धेः शून्यत्वमेव प्रज्ञयावगन्तव्यम्। जात्यन्धवत् तर्कस्तत्तदनुभवाकलनावष्टम्भः स्पृशन्निव सकलानुभवव्यापित्वेऽपि तदुत्तीर्णां तथतां वासनोपहितो विकल्पयन्नेव तां भ्रमति परमार्थात्। तथा च प्रयोजनीयसन्दर्भवशाद् दृष्टिं समालम्ब्य प्रत्यक्षागमोपलब्धिरन्वीक्षणीया बलाबलं च लक्षणादीनां विचारणीयं यावदस्ति नियामकं व्यावहारिकं नो चेत्प्रज्ञैव शस्या शून्यतावगमाद् विवृण्वती प्रतिभाद्वारम्।

अथ मन्यते व्यवहारेऽपि कौशलेन विवर्धनीयत्वात् प्रत्यक्षोपलब्धेः परस्परं विरुद्धत्वाच्चागमानां तादवस्थ्यमेवानवस्थाया इति, सत्यम्, न मानवबुद्धिविकल्पापेक्षप्रत्यक्षाश्रिता विकल्पनीयागमवचनापेक्षा वा निःशेषपरमार्थावगमे समर्था। स्वभावश्चायं न दोषाय व्यवहारोपपादकत्वात्, परमार्थस्तु न सविकल्पकबुद्धिगम्यस्तर्कातीतः, सर्वात्मना तु सोऽधिगम्यः। इयमेव सर्वात्मनाधिजिगमिषा धर्मसाधना यत्प्रयाणकानि लक्ष्यं च सोपायं वासनाधिकारभेदापेक्षमेव सामान्यतो निर्दिश्यन्ते आप्तैः। तद्वचनानि चागमरूपाणि न तार्किकाभिधानानि प्रतिपत्तव्यानि प्रत्युताध्यात्मिकानुभूतिप्रकाशकानि साङ्केतिकवाक्यान्येव नेयार्थानि। न चन्द्रं निर्दिशन्त्यङ्गुलिरेव चन्द्रत्वेन ग्राह्या नापि विषदिग्धबाणहतस्य चिकित्सकेन प्रहर्तुरेव जिज्ञासा कर्तव्या[1]। एवमागमाः साधनानि निर्दिशन्ति भावांश्चाध्यात्मिकान् व्यञ्जयन्ति, न ते तथ्यानि अभिदधते तत्त्वानि वा परिभाषन्ते, न तर्कसम्मितान् विकल्पसहान् सिद्धान्तान् प्रतिपादयन्ति। प्रायेणाख्यानस्तुत्यादिरूपेषु आगमेषु साधनोपदेशो भक्त्यङ्गतयोपलभ्यते, लोकोत्तराभिमुखभावसारत्वं च तेषां ततः प्रकाश्यते। भाषाऽप्यागमानां नानाविधवक्रतां बिभर्ति भाववृत्तविमर्शादिरूपा अप्यागमाः प्रत्यक्चैतन्योपसृष्टान् भावान् प्रकटयन्ति। एवमागमप्रकाश्यो धर्मस्तर्कव्यवस्थाप्याच्छास्त्रान्नितान्तभिन्न एव। श्रुतिस्मृत्यादिव्यक्तभेदान् विगाहिष्यमाणेन भाव एव निमज्ज्य हृदयगुहानिहितं धर्मस्य तत्त्वमधिगन्तव्यम्। आगमा अध्यात्मसाधनोपायावगमार्थमेव, सत्याधिगमस्तु प्रत्यात्मं स्वहृदयगोचर एव।

---

१. उपमे इमे प्रसिद्धे बौद्धागमेषु शब्दग्राहितां विकल्पप्रियतां च तिरस्कुरुतः।

ननु साक्षाच्चेदागमात् तत्त्वप्रतिपत्तिर्नेष्यते, अनावश्यकतैवागमस्यापद्येतेति चेत्, न, नागमः श्रुत एवानवबुद्धार्थमन्त्रवत् तत्त्वं बोधयति, श्रवणेऽप्यर्थबोधोऽपेक्ष्यते तदर्थं च श्रोतुः संस्कारवैशिष्टयं मनननिदिध्यासनादीनि च यथायोग्यम्। पुनश्च नास्त्येवेतिहासलब्धः कोऽप्यागमविशेषो वेद-बाइबिल-कुरानादिर्येन विना परमार्थाधिगमो न स्यात्। आप्तवचनमेवागमः, आप्ताश्च सर्वत्र सदा चोपलभ्यन्ते तीव्रसंवेगैः परमार्थानुसन्धित्सुभिः। बहून्यत्रोदाहरणानि, अर्जुनः संवेगं प्राप्तः स्वसहचरे सारथावेव नित्यगुरौ अविदितस्वभावे लेभे प्रत्यक्षमाप्तम्, तथासुरिः कपिलाल्लब्धवान् ज्ञानम्, विवेकानन्दा रामकृष्णपरमहंसाद् अन्ये चासङ्ख्याः साधका अन्तर्गुरोरेव लेभिरे लभन्ते चाध्यात्ममार्गप्रकाशम्। बाह्या आगमाः सम्प्रदाया गुरवश्च तावदेव यथार्थनामानो भवन्ति यावदन्तःप्रेरणया आगम्यन्ते ते। अन्यथा हेरोड-पाइलेट-कंस-दुर्योधन-देवदत्ताजातशत्रुप्रभृतयः प्रत्यक्षीभवन्तमपि किमिति नाभिजानन्ति स्म लोकोत्तरमनुष्यभावं क्रिस्तकृष्णबुद्धादीनाम्। ते च धर्मप्रवर्तकास्तीर्थङ्करा महापुरुषाः क्षीयमाणधर्माचारेषु युगेषु प्रादुर्बभूवुः प्रदर्शनाय सन्मार्गस्य। कालेन धर्मो बाह्याचाररूढिष्वेव पर्यवस्यतीव यथा यह्वधर्मः क्रिस्तकाले वैदिकधर्मो वा बुद्धकाले। तथा क्रिस्तेन नियमात्मकधर्मस्थाने प्रेमात्मकधर्मस्योपदेशः कृतः, बुद्धेनापि भगवता परोक्षपरककर्मकाण्डस्थाने शीलसमाधिप्रज्ञामार्ग उपदिष्टः। तत्तद्युगप्रवृत्तिभेदाद् उपदेश्यानां वासनाभेदाच्च महापुरुषदेशना अपि भेजिरे नानात्वम्। तथा क्रिस्तधर्मो यह्वोपासकेषु यवनदर्शनाभिज्ञेषु च प्रसारं लभमानस्ततस्तत्त्वानि गृह्णन् स्वीयाभिप्रायं प्रतिपादयामास। सौगतास्तु स्फुटमेव प्रतिपद्यन्ते 'विनेयभेदाद् देशनाभेदः' इति 'देशना लोकनाथानां सत्त्वाशयवशानुगा' इति च। अत एव च प्रतिधर्मसम्प्रदायं निकायभेदोऽपि विपुलो दृष्टिपथमायाति। विनेयभेदाद् भेदं भजत्यध्यात्मसाधनात्मके धर्मे, लोकसाधारण्येनैव प्रवर्तते शीलात्मको धर्मः। लोके मानवसङ्घानाम् ऐतिहासिकभेदात् साधारणोऽपि शीलात्मको धर्मो भजति वैविध्यं संस्कारोपरक्तः। मौलिकानि तत्त्वानि सर्वत्र तुल्यानि, विकल्पितानि रूढानि च भिन्नानि। अशोकेन धर्मराजेन सारं सर्वधर्माणां विज्ञापितं संयमो भावशुद्धिश्चेति। सर्वोऽपि सदाचारः संयममूलः शुद्धभावप्रयुक्तश्च। अहिंसादयाप्रेमादयः शुद्धा भावा इति सुविदितम्। अहङ्कारो विषयतृष्णा स्वार्थपरमा बुद्धिश्च मानवहृदि मलत्वेन स्थिता आच्छादयन्ति प्रज्ञां कलुषयन्ति कर्माणि। संयमेन कर्तव्यपालनेन परोपकारेण मौनेन ध्यानेन भक्त्या प्रपत्त्या चाध्यात्मसाधनं सदाचारश्च सर्वधर्मेषु प्रवर्तते।

ननु ईश्वराभावे श्रमणधर्मेषु नास्त्यवकाशो भक्तेः प्रपत्तेश्चेति चेत्, न, तेष्वपि बुद्धादेः शरण्यत्वेन भजनीयत्वेन च स्वीकृतत्वात्। यीशुरीशपुत्रो मुहम्मदोऽन्तिमो भाववादी वेदा वर्णानुपूर्वीरूपा अपि नित्या अपौरुषेयाश्चेत्यादीनि मतानि प्रशंसा-वाक्यान्येवावगन्तव्यानि । स्वस्वागमप्रामाण्यं प्रतिपादयितुकामैरेतादृशीषु युक्तिषु अन्योन्याश्रयदोष एवागत्यापाद्यते। तथा च ईश्वरविषये त्रिमूर्तिवादो जगत्कर्तृत्ववादो निराकारवाद एकत्ववादो वा परोक्षविकल्पनान्येव नयाश्रितानि। निर्विकल्पोऽपरि-च्छिन्नोऽनन्तश्च परमार्थ इति तु सर्वत्र सम्मतमेव। स च लोकोत्तरः परमार्थः समर्पिता-खिलाचारेण स्वात्मनैव मौनेन साक्षादधिगम्य इत्यपि सर्वत्र प्रतिपन्नं ज्ञानिभिः। सर्व-धर्मभेदं प्रतिपित्सुना तत्त्वविषयास्तार्किका विकल्पा आचारविधिसंस्कृताश्च लोकरूढयो गौणत्वेन द्रष्टव्याः, अनुभूतिमात्रे च परिस्फुरद्भूमाभासः परामर्शनीयो भावनीयश्च। स्वानुभूत्येकमानायेति यदुक्तं तदेव सर्वस्वं धर्मतत्त्वस्य। तदेव गुहानिहितं धर्मतत्त्व-मुद्दिश्योक्तमृषिणा—"एकं सद् विप्रा बहुधा वदन्तीति"। एकमित्यस्यार्थस्तु न सङ्ख्यायोग्यत्वे सति बहुत्वप्रतियोगित्वं स्वगतादिभेदत्रयरहितत्वं वा। सङ्ख्याभेदाश्च बुद्ध्यारोप्या धर्मा न तत्त्वगताः। एकमिति वचनस्याभिप्रायस्तु निःशेषत्वमनन्तत्वम-तुल्यत्वादिविकल्पैः प्रतिषेध एव लोकविदितवस्तुधर्माणाम्। सदिति प्रतिषेधत्यसदेव परिच्छिन्नमनित्यं विरुद्धं च। बहुधेति प्रकारबहुत्वं वाग्विकल्पनिबन्धनमेव।

ननु प्रतिषेधपरैरपि शब्दैः परिच्छिद्यत एव वस्तु निःसीमत्वं चास्य क्षीयत इति चेत्, न, प्रतिषिध्यमाना अपि प्रतीतिधर्मा वस्तुतः परिच्छेदात्मका एव। एवं चानन्तवस्तु यद् व्यवहारे विकल्पे चान्तवद्भाति तत्प्रतिषेधेन पुनरनन्तस्य सङ्केतो विधीयते। तद्यथा प्रत्यक्षानित्यविषयप्रतिषेधो जडत्वस्य वा प्रतिषेधः सच्चित्स्वरूपमात्मानं लक्षयति। सर्वथा च प्रतिषेधेऽभिमते शान्तत्वद्योतकं मौनमेवाश्रयणीयम्।

पुंसां सर्वात्मना परमश्रेयःपर्येषणैव धर्मः। सा च साध्य-साधन-साधक-वैशिष्ट्येन विशिष्यते। तत्र, साध्यं विवेकसम्मतं परमभीष्टम्, साधनं भक्तिरध्यात्म-योगः सदाचारश्चेति त्रितयमप्यविश्लिष्टम्, साधकश्च लक्ष्यैकप्रहितचेताः सर्वस्वार्पण-तत्परश्च। पर्येषणाधिगमाश्च परत्र सङ्क्राम्यमाणा रचयन्त्यागमसम्प्रदायम्। आगमशास्त्रदर्शनभेदेन सोऽपि त्रिपर्वा। शास्त्रमात्रानुसरणेन न स सम्यगवबुध्यते, शास्त्राणां दृष्टिसापेक्षत्वात्। विधिसंहिताऽपि शास्त्रीया धर्मसम्प्रदायाङ्गभूता न स्वतन्त्रा लोकरीतिभ्यो नापि आध्यात्मिकशोलावच्छेदेन तासु अन्तर्भाव्या। तत्त्व-लक्षणान्यपि शास्त्रीयाणि विशीर्यन्ते प्रज्ञया विचार्यमाणानि। एवं सम्यग्ज्ञानस्य मूलं निर्विकल्पे प्रातिभसाक्षात्कारे, सदाचारस्य प्रमाणं भावशुद्धौ निर्धारयितव्यम्। आप्तवचनान्येव साक्षात्कारसाधने भावसाधने च प्रमाणतुलेव उपस्थितानि।

यच्चाप्तवचनेषु अन्तर्विरोध उद्भाव्यते तुलनात्मकदर्शनेषु तदवलम्बेन च तेषां मिथ्यात्वमितिवृत्तान्तर्भावो वा साध्यते। तस्य प्रतिपक्षे स्मरणीया सनातनपरम्परा सार्वभौमधर्मदर्शनस्य । दीर्घतमो-बुद्ध-महावीर-पुष्पदन्त-अभिनवगुप्त-मधुसूदन-सरस्वत्यादयः प्राचीनाः, राममोहनराय-रामकृष्णपरमहंस-विवेकानन्दादयश्च नवीनाः सार्वभौममद्वयं सत्यं व्यजिज्ञपन्। अन्यत्रापि रूमी-गजाली-इब्नुरूश्द-आदयः प्राचीनाः, फ्रित्सश्वान-कुमारस्वामी-रनेग्वेनो-नस्रादयो नवीना इममेव सनातनं सम्प्रदायं व्याचख्युः[1] ।

---

१. बुद्धोदाहृता जात्यन्धोपमा उदाने प्रथमनानातीर्थिकसूत्रे लभ्यते। सुत्तनिपाते चूलव्यूहसुत्तं च द्रष्टव्यम् —

"एकं हि सच्चं न दुतियमत्थि यस्मि पजानो विवदे पजानं ।
नाना ते सच्चानि सयं थुनन्ति तस्मा न एकं समणा वदन्ति" ॥
कस्मानु सच्चानि वदन्ति नाना ।
उदाहु ते तक्कमनुस्सरन्ति ॥ ( चूलव्यूहसुत्ते )
सकञ्हि धम्मं परिपुण्णमाहु ।
अञ्ञस्य धम्मं पन हीनमाहु ॥ ( महा० )

अशोकराजस्य धर्मलिपिरित एव प्रभाविता। तथा चतुर्दशशिलालेखेषु सप्तमे—"सर्वे पाषण्डा वसेयुः । सर्वे हि ते संयमं भावशुद्धिं च इच्छन्ति" । तथा चैकादशे—"आत्मपाषण्डपूजा परपाषण्डगर्हा च न स्यात्" ।

अभिनवगुप्तपादानां तन्त्रालोके पञ्चत्रिंशमाह्निकं सर्वशास्त्रसम्मेलनमधिकृत्य प्रवर्तते। एक एवागमोऽधिकारिभेदाद्भिद्यत इति तत्र सारम् ।

जैनानामनेकान्तवादोऽप्यत्रालोच्यः। बौद्धानां प्रसिद्धमेव वचनं विनेयभेदाद्देशनाभेद इति। मुस्लिमदार्शनिकेष्वपि सूफीमतानुयायिषु सदृशं मतमवलोक्यते। तथा रूमी-कविनोक्तम्—

"अज नजरगाहे अस्त, ऐ मग्जेवजूद, इख्तिलाफ मोमिन गब्र यहूद"। दृष्टिभेदेनैव सम्प्रदाया भिन्ना इत्यर्थः ।

आधुनिकेषु द्रष्टव्याः —

मार्कोपैलिस, द वे एण्ड द माउण्टेन (लन्दन, १९९१)
फ्रित्स शुवाँन, इसोटेरिज्म एज प्रिन्सिपल एण्ड एज वे (१९९०)।
ट्रैन्सेण्डेन्ट यूनिटी ऑव रिलिजन्स
रने ग्वेनाँ, द फण्डामेन्टल सिम्बल्स ऑफ सेक्रेड सायन्स (१९९५)।

# निरुक्तप्रयोजनम्

डॉ० रामाशीषपाण्डेयः
आचार्योऽध्यक्षश्च, संस्कृतविभागस्य
मारवाड़ी-महाविद्यालये, राँची

❀ ❀ ❀

निर्+वच् परिभाषणे+क्त प्रत्यये कृते निरुक्तशब्दस्य सिद्धिर्जायते। अर्थावबोधे निरपेक्षतया पदजातं यत्रोक्तं तन्निरुक्तमिति[१]। निरुक्तशास्त्रस्य किं प्रयोजनमिति जिज्ञासायाम्—

विषयश्चाधिकारी च सम्बन्धश्च प्रयोजनमित्यनुबन्धचतुष्टयेषु प्रयोजनस्यान्यतमत्वादत्रापि विचारणीयमेव प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति प्रयोजनस्य पुरःस्थापनं सर्वत्र दरीदृश्यते। यथा वेदाङ्गेषु परिगणितानां व्याकरणादिशास्त्राणां प्रयोजनं विहितं तथैव तेषु वेदाङ्गेषु परिगणितस्य श्रोत्रभूतस्य निरुक्तशास्त्रस्यापि प्रयोजनं नितरां विचारणीयम्[२]।

यास्काचार्येण स्वकीयनिरुक्ते निरुक्तस्य कानिचित् प्रयोजनानि प्रकाशितानि। पुनश्च निरुक्ताध्ययनेनापि प्रयोजनस्य प्रतीतिर्जायते। प्रयोजनमत्र द्विप्रकारम्—प्रथमं निरुक्ते निगदितं प्रधानभूतमपरञ्च निरुक्ताध्ययनाद् व्यावहारिकमानुषङ्गिकं प्रयोजनम्। शिष्यते अनेनेति शास्त्रं सप्रयोजनमुपदिशति[३]। निरुक्तमप्येकं शास्त्रं शब्दानां निर्वचनमस्य प्रधानप्रयोजनम्। निरुक्तशास्त्रस्य प्रयोजनप्रसङ्गे यास्काचार्येण निरुक्ते प्रतिपादितम्—

अथापीदमन्तरेण मन्त्रेष्वर्थप्रत्ययो न विद्यते। अर्थमप्रतियतो नात्यन्तं स्वरसंस्कारोद्देशः। तदिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च[४]।

---

१. ऋ० भा० भू० ( सायणाचार्यः ) ४६ पृष्ठे।

२. छन्दः पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते॥ (पा० शि० ४१-४२)।

३. शास्+ष्ट्रन्—उणा० ४।१५९; ४. नि० १।६।

अत्रेदं विचार्यते—निरुक्तशास्त्रमन्तरेण मन्त्रेष्वर्थज्ञानं न भवति। पदार्थज्ञानं विना मन्त्रार्थावगतिः कुत्र सम्भाव्यते। अर्थज्ञस्य प्रशंसायामनर्थज्ञस्य निन्दायाञ्च निरुक्ते समुदाहृतम्—

> स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
> योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा[1]॥

यथा स्थाणुर्वृक्षः पत्रपुष्पफलानां धारणमात्रेणैव सम्बध्यते न गन्धरसरूपस्पर्शोपभोगसुखैः, एवं मनुष्योऽपि वेदमधीत्य योऽर्थं न विजानाति स वेदाध्ययनभारमात्रमेव बिभर्ति। तथा च योऽर्थज्ञो वेदार्थज्ञानसम्पन्नः, स एव सकलं भद्रमर्थपरिज्ञानफलमश्नुते। ज्ञानविधूतपाप्मा स्वर्गगमनप्रतिबन्धकास्ते पाप्मानस्तस्य ज्ञानेन विधूता भवन्ति। यतो हि न हि ज्ञानेन सदृशं पवित्रमिह विद्यते। अर्थज्ञोऽसौ चान्ते आध्यात्मिकाधिभौतिकाधिदैविकं सुखमाप्नोति नाकं च गच्छति। अर्थज्ञानं तु निरुक्तादेव जायते, अतो निरुक्तस्याध्ययनं कर्तव्यम्।

निरुक्त एव प्रकाशितं यदर्थतोऽविज्ञातः शब्दमात्रावगतोऽर्थतो न विचारयति, स वेदाध्ययनमात्रं करोति, न तदीयफलं लभते यतो हि शुष्ककाष्ठमनग्नौ देशे कदाचिदपि न ज्वलति[2] तस्मादर्थपरिज्ञानाय निरुक्तस्य प्रयोजनमिति।

निरुक्तमन्तरा मन्त्रार्थप्रत्ययो न जायते। पुनरर्थमप्रतियतोऽर्थमजानतोऽनर्थज्ञस्य नात्यन्तं स्वरसंस्कारोद्देशो भवति। स्वरावधारणं संस्कारावधारणमर्थद्वारैव सम्भवति। उदात्तादिस्वराणां प्रकृतिप्रत्ययादिसंस्काराणाञ्चावधारणमर्थद्वारैव दर्शनात्। वैयाकरणा अप्यर्थं विना शब्देषु स्वराणां संस्काराणाञ्चावगमे न क्षमाः। अर्थवशेन हि स्वरसंस्काराववतिष्ठेते, तस्मादध्येयं निरुक्तम्।

अर्थप्रत्यायकं निरुक्तशास्त्रमिदं विद्यास्थानं व्याकरणस्य कार्त्स्न्यं स्वार्थसाधकञ्च। संस्कृतसाहित्ये चतुर्दशविद्याः परिगणिताः, तेषु चत्वारो वेदा वेदाङ्गानि पुराणन्यायमीमांसाधर्मशास्त्रादयश्च विश्रुताः[3]। ऋग्यजुःसामाथर्वाश्चत्वारो वेदाः शिक्षा कल्पो व्याकरणं छन्दो निरुक्तं ज्योतिषश्चेति वेदाङ्गानि सन्ति। एतासु विद्यासु निरुक्तमपि वेदाङ्गत्वेन परिगणितम्। मुण्डकोपनिषदि द्वे विद्ये वर्णिते।

---

१. नि० १।६।

२. यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्॥ (नि० १।६)

३. पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ (याज्ञ० स्मृ० १।३)

तत्रापराविद्यासु—ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति[1]। परा विद्या सा भवति यया तदक्षरमधिगम्यते। अध्यात्म-विज्ञानात्मिका परा परमार्थतत्त्वावबोधिका विद्यते। उपनिषदि प्रतिपादितासु विद्यासु निरुक्तस्य परिगणनं दृश्यते। अर्थपरिज्ञानस्याधीनत्वादर्थवशगत्वाच्च निरुक्तं वस्तुतो विद्यास्थानं ज्ञानकेन्द्रमिति।

स्वरसंस्कारयोः प्रतिपादकं व्याकरणशास्त्रमर्थमविज्ञाय स्वरसंस्कारावधारणे नहि समर्थतरम्। परिणामतो व्याकरणस्य विद्यास्थानमपि निरुक्तमेव। व्याकरणस्य विद्यास्थानमित्यस्य तात्पर्यस्तस्य ज्ञानकेन्द्रं निरुक्तमेवार्थप्रदानात्[2]। व्याकरणे स्वर-संस्कारौ चिन्त्येते। तस्मादपरिसमाप्तमेव तावद्व्याकरणं यावन्निरुक्तं नाधिगतम्। नहि अनैरुक्तोऽर्थमवधारयितुमलम्। नानवधृतार्थः स्वरसंस्कारत्वं विजानीयात्।

निरुक्तं व्याकरणस्य पूरकं स्वार्थसाधकञ्च विद्यते। स्वार्थाजहद्वृत्त्या न जहाति स्वार्थं या सा अजहत्स्वार्था तया अजहत्स्वार्थावृत्त्या ह्येतदनुषङ्गतो व्याकरणस्य पूरकं विद्यते। स्वार्थसाधकं वेदार्थबोधकमिदं निरुक्तशास्त्रं स्वार्थं वेदार्थं तु साधयति अजहद्वृत्त्या व्याकरणानुग्रहमपि करोति। काकेभ्यो दधि रक्ष्यता-मित्यत्र काकेभ्यो दधिरक्षणं तु स्वार्थं भवति परमजहद्वृत्त्या दध्युपघातकेभ्यो विडालादिभ्योऽन्यपशुपक्षिभ्यश्च दधिरक्षणं तत्र युक्तमिति स्वार्थसाधने वेदार्थरक्षणे वेदार्थावगमे वा तत्परमिदं निरुक्तशास्त्रं व्याकरणस्योपकारकमपीति।

अथापीदमन्तरेण पदविभागो न विद्यते। निरुक्तं विना पदविभागस्य ज्ञानं नैव जायते। यतो हि अर्थवशेन पदान्यवतिष्ठन्ते। 'अवसाय पद्वते रुद्र मृड'[3] इत्यत्र अवसायपदे अवतेर्गत्यर्थस्यासो नामकरणः। तस्मान्नावगृह्णन्ति। 'अवसायाश्वान्' इति स्यतिरूपसृष्टो विमोचने तस्मादवगृह्णन्ति। अवसायपदे अव् गतौ धातोः अस् नामकरणप्रत्यये अवस इति पुनश्चतुर्थ्येकवचने अवसाय पद्वते शब्दस्य चतुर्थ्यन्तस्य विशेषणमिति। पुनः अव उपसर्गेण युक्तः स्यो विमोचने ल्यपि वावसायरूपमर्थं विना ज्ञातुं कथं शक्यते। अत एवार्थविद् पदपाठकारो ल्यपि अवसाय इति पदपाठं करोति। अतः पदविभागाय निरुक्तस्य प्रयोजनं सुविहितम्।

वेदरक्षणे विकृतिपाठस्य महत्त्वं केनापि नाविदितम्। अष्टौ विकृतयस्तत्र वर्णिताः—

---

१. मुण्डकोपनिषदि—१।१; २. नि०, दु० वृ० १।६।
३. नि० १।६।

जटा माला शिखा रेखा रथो दण्डो ध्वजो घनः ।
अष्टौ विकृतयः प्रोक्ताः स्वयमेव स्वयम्भुवा[1] ॥

विकृतिपाठे पदानि प्रक्रियन्ते । संहितापाठस्य पदपाठे पुनः पदपाठस्य क्रमपाठे समायोजनं विकृतौ परमावश्यकम् । क्रमपाठादेव जटामालाशिखारेखारथ-दण्डध्वजघनादिविकृतिपाठो जायते । विकृतिपाठाय पदानां विभागः क्रियते । पदविभागस्तु क्रमपाठादेव अर्थं परिज्ञाय सम्पन्नो भवति । अतः शब्दानां प्रकृति-विकृतिपरिज्ञानाय निरुक्तशास्त्रस्याध्ययनमावश्यकम् । पदस्य ज्ञाने 'परः सन्निकर्षः संहिता' तथा 'पदविकृतिः संहिता' इत्यवधेयम् । अत्र परः प्रकृष्टो यः सन्निकर्षः संश्लेषः परस्परेण स्वराणां स्वराधिरूढानाञ्च व्यञ्जनानां सा संहितेति । पुनः पदप्रकृतिः संहिता इत्यत्र पदानां या प्रकृतिः सा संहिता यतो हि संहितातः पदानि प्रक्रियन्ते, तस्मात् संहितेव प्रकृतिर्विकारस्तु पदानीति । तथा च पदानि प्रकृतिर्यस्याः सेयं पदप्रकृतिः संहिता । यतो हि पदान्येव संहत्यमानानि संहिता भवति, तस्मात् पदान्येव प्रकृतिः, विकारः संहितेति । संहितादिज्ञानाय प्रकृतिविकृतिपरिज्ञानाय च पदज्ञानमावश्यकं पदज्ञानं तु अर्थं विना कथमुपयुक्तम् । पदविभागविषयेऽपि निरुक्तस्य तादृशं महत्त्वमेव ।

अथापि याज्ञे दैवतेन बहवः प्रदेशा भवन्ति, तदेतेनोपेक्षितव्यम् । 'वेदा यज्ञार्थसम्भवा' इत्यनेन यज्ञस्य महत्त्वं वेदानां वेदमन्त्राणाञ्च महत्त्वमुपन्यस्तम् । विविधयज्ञे विविधमन्त्राः प्रयुक्ता भवन्ति । तेषु यज्ञेषु हविःप्रदानार्थं देवताया ज्ञानमावश्यकम् । एतादृशा मन्त्राः प्रभूताः सन्ति यत्रैकस्मिन् मन्त्रेऽनेके देवता वर्णिताः । कस्मिन् मन्त्रे कस्य देवस्य प्राधान्यं येन मन्त्रेण तस्मै हविःप्रदानं भवेदिति जिज्ञासायां निरुक्तमेवार्थप्रदाने देवतानिर्णये च विचारं प्रस्तौति । निरुक्ते दैवतकाण्डे विशेषेण देवा विवेचिता, निर्वचनेऽपि ते विश्लेषिताः । अनेन देवतापरिज्ञानेन निरुक्तमिदं कर्मकाण्डस्य पूर्वमीमांसायाश्च पूरकमपि विद्यते ।

व्याकरणमहाभाष्ये भाष्यकारपतञ्जलिना "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्"[2] इति वार्तिकमुपस्थापयता व्याकरणस्य वेदाङ्गत्वाद् यानि प्रयोजनानि विवेचि-तानि, तानि सर्वाणि वेदसम्बद्धानीति । निरुक्तं व्याकरणस्य कार्त्स्न्यमिति विचारपथे

---

१. विकृतिवल्ली–१।५;  २. महाभाष्ये–१।१ ।

तानि व्याकरणप्रयोजनानि निरुक्तस्यापि विद्यन्ते। व्याकरणप्रयोजनान्यपि कथं निरुक्तेन सम्बद्धानीति विचार्यंते —

रक्षार्थं वेदानामध्येयं निरुक्तम्। सतोऽर्थस्यापायपरिहारो रक्षा नाम। तत्रार्थस्यापायपरिहारे निरुक्तमेव प्राधान्येन व्यपदिष्टम्। अर्थावबोधे निरपेक्षतया निःशेषेनोक्तस्य पञ्चविधनिरुक्तस्य ज्ञाता एव सम्यक् वेदान् परिपालयिष्यति[1]। मन्त्राणामर्थवत्वमुपस्थापयता यास्काचार्येण पूर्वपक्षस्य सर्वे तर्का निरस्ताः। पुनः मन्त्राणामानर्थक्यपरिहाराय जर्भरो, तुर्फरी, पर्फरीप्रभृतिशब्देषु अर्थज्ञानाय च निरुक्तमेव प्रधानभूतं साधनमिति वेदरक्षार्थं निरुक्तमाश्रयणीयम्, वेदस्य ६०० मन्त्राणां व्याख्यामुपस्थाप्य सहस्राधिकानां शब्दानां निर्वचनञ्च कृत्वा निरुक्तकारो यास्कः प्रथमवेदभाष्यकाररूपेण दुर्गवृत्तौ विन्टर्नित्समते[2] च स्मृतः। वेदस्यान्ये भाष्यकारा अपि निरुक्तमनुसरन्तो वेदभाष्यं चक्रुः। अतो वेदार्थप्रकाशने नितरां महत्त्वपूर्णं वेदरक्षणाय चावश्यं निरुक्तमाश्रयणीयम्।

ऊहार्थञ्चाध्येयं निरुक्तमिति पक्षे वेदे तादृशा अनेके मन्त्राः सन्ति, येषां प्रयोगो यज्ञेषु जायते, तत्रैकस्मिन् मन्त्र एवानेके देवता वर्णिताः सन्ति। तेषु कस्य देवस्य प्राधान्यं तत्र वर्तते यस्य नाम्ना हविःप्रदानं स्यात्। तत्र देवतानिर्णये निरुक्तादेवोहो जायते। अतो यज्ञे यथायथं हविःप्रदानाय देवतानिर्णयेऽप्यूहः कर्त्तव्यः। पुनश्च स्वरसंस्कारायार्थस्यावश्यकता भवति। अर्थज्ञानं विना स्वर-संस्कारोद्देशो न जायते[3]। इन्द्रशत्रुर्वर्धस्वेति इन्द्रशत्रुःपदे अर्थं विना बहुव्रीहि-स्तत्पुरुषो वा भवेदिति कथं ज्ञायते। इन्द्रस्य शत्रुः इन्द्रशत्रुरित्यत्र यदाऽन्तोदात्त-स्तदाऽस्यार्थो भवति इन्द्रस्य शत्रुः। यदा तत्र बहुव्रीहिः स्यात्तदा आद्युदात्तो भविष्यति, तदाऽर्थो भविष्यति इन्द्र एव शातयितेति। अतः शब्दप्रयोगकाले स्वर-संस्कारोद्देशे ऊहार्थञ्चाध्येयं निरुक्तम्।

---

१. वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्॥ (नि०, दु० वृ० १।१)

२. Winternitz. Gesechichte der Indischen literature, vol. III, P. 379.

३. मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह।
स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्॥ (पा० शि०)

पारम्पर्येणावच्छिन्न उपदेश आगमः, श्रुतिलक्षणः स्मृतिलक्षणश्च । ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्च। कारणमनुद्दिश्य यथा नित्यानि कर्माणि कर्त्तव्यानीत्यकरणे तेषां प्रत्यवायः। यानि त्वनित्यानि कर्माणि तेषामकरणे नास्ति प्रत्यवायः। 'पुत्रकामो यजेत'[1] इत्यत्र काम्यकर्मण्यप्रवृत्तेऽपि न प्रत्यवायः। प्रत्यवायो मा भूदिति षडङ्गो वेदोऽध्येयः, पुनश्च नित्यकर्माध्ययनं निरुक्तस्यावश्यं कर्त्तव्यम् । लघ्वर्थञ्चाध्येयं निरुक्तमिति पक्षे वेदार्थविबोधे निर्वचने च लघुनोपायेन निरुक्ताद्यादृशी गतिर्भवति, नान्यस्मात् शास्त्रात्। शब्दस्य सम्यग्ज्ञानमर्थं विना नैव सम्भाव्यते । अर्थप्रकाशनं तु निरुक्तादेव जायते — "एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके च कामधुग्भवती"ति शब्दस्य सम्यग्ज्ञानाय सुष्ठु प्रयोगायार्थमपेक्षितमस्ति । अतो निरुक्तादृते शब्दस्यार्थसमन्वितं सम्यग्ज्ञानं तस्य प्रयोगादिकञ्च अन्यस्माच्छास्त्राद् नैव सम्भाव्यते। निरुक्तेन क्षिप्रमेवार्थबोधो जायते । निरुक्ते ये शब्दा विवेचितास्ते त्वर्थबोधका विद्यन्त एव तत्सादृशा अन्ये शब्दा अपि शीघ्रमेव स्मृतिपथमनुगच्छन्ति ।

असन्देहार्थञ्चाध्येयं निरुक्तमिति कथने मन्त्रार्थज्ञाने देवतानिर्णये यज्ञकाले वा सन्देहो मा भूदिति निरुक्तस्य प्रयोजनं विहितम् । मन्त्रार्थकाले शब्दार्थनिर्णये वा सन्देहो निरुक्तादेव नश्यति। मन्त्रे निहिताधिदैविकाधिभौतिकाध्यात्मिकार्था विशेषेण विश्लेषिताः सन्ति निरुक्ते। वेदभाष्यकारा वेदभाष्ये मन्त्रार्थनिर्णये निरुक्तादेव सन्देहमपहरन्तीति निरुक्तस्य प्रयोजनमसन्देहार्थम् ।

अर्थज्ञानस्य महत्त्वं निरुक्ताज्जायते। ज्ञानप्रशंसायां स्वयं निरुक्तकारेणोक्तम् । तत्रैवाज्ञाननिन्दाऽपि प्राप्यते[2] । अतोऽर्थज्ञानाय निरुक्तस्याध्ययनमावश्यकम् ।

भाषावैज्ञानिकं महत्त्वमपि निरुक्तस्य वर्त्तते। अर्थविज्ञानस्य व्युत्पत्तिविज्ञानस्य चोपरि निरुक्तमेवाद्यग्रन्थत्वेन प्राप्यते। डॉ० लक्ष्मणस्वरूपमहोदयोऽपि

---

१. मैत्रायणी-संहितायाम् ।

२ उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥
उत त्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु ।
अधेन्वा चरति माययैषा वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ (नि० १।६)

व्युत्पत्तिविज्ञानस्यार्थविज्ञानस्य च प्रथमं भारतीयपुस्तकं निरुक्तमेव स्वीकरोति[१]। व्युत्पत्तिविज्ञानस्य निरुक्तेन समं प्राचीनपुस्तकं कस्यामपि भाषायां नोपलभ्यते।

निष्कर्षतः कथनमिदं सङ्गतं भविष्यति यन्निरुक्तस्य प्रयोजनं वैदिकसाहित्यस्यार्थाभिव्यक्तये तु प्रभूतं वर्तते, लौकिकसाहित्येऽपि अर्थाभिव्यक्तये प्रयोजनं नानुपेक्षणीयम्। यतो हि तत्रापि प्रायेण त एव शब्दा प्रयुक्ताः सन्ति, येषां शब्दानां निर्वचनेन ऐतिहासिकं सांस्कृतिकं सामाजिकं तथ्यात्मकञ्च ज्ञानं भवति। निरुक्तस्य वेदाङ्गता विश्रुता वर्तते तथा संस्कृतसाहित्यस्याङ्गताऽपि तत्र सुरक्षिता वर्तते। किं पुनः निरुक्तं शब्दानामर्थप्रतिपादने भाषाविज्ञानक्षेत्रेऽपि नवीनां दृष्टिं प्रक्षिपति। प्रधानानि निरुक्तप्रयोजनानि विवेचितानि आनुषङ्गिकाणि प्रयोजनान्यपि सङ्केतितानि, किमधिकं सङ्क्षेपेण निरुक्तस्य प्रयोजनं मीमांसितमिति दिक्।

---

१. The Nighantu and the Nirukta, Subtitle—'The oldest Indian treatles on Elymology, Philology and Semantics.

# वर्णभक्षणम्

प्रो० लडुकेश्वरशतपथी

पुरी, उत्कलः

❀ ❀ ❀

वर्णोच्चारणं यथौचित्यं कर्त्तव्यम् । अधिकशक्त्युपयोगे आवश्यकतापेक्षया उच्चारणाधिक्यं स्यात्, अशक्त्युपयोगेऽपि उच्चारणस्योनता स्यात् । तेन ग्रस्त-निरस्त-द्रुतैणीकृतादिदोषाः सम्भवन्तीति तद्विदः । यथा व्याघ्रीतुण्डेन शिशुं धारयन्ती धारणशैथिल्ये शिशोः स्खलनम्, धारणदार्ढ्ये च शिशुशरीरे दंष्ट्राभेदजनितपीडाप्रसङ्ग इत्युभयतो भीता सावधानं शिशुं धारयति, तथा अतिशक्तिप्रयोगमतिशैथिल्यं च विहाय वर्णानुच्चारयेदिति शिक्षाकाराणामुपदेशः । तथा च पाणिनीयशिक्षा—

व्याघ्री यथा हरेत् पुत्रान् दंष्ट्राभ्यां न च पीडयेत् ।
भीता पतनभेदाभ्यां तद्वद् वर्णान् प्रयोजयेत् ।। ( श्लोकः-२५ ) इति ।

किन्तु भाषास्वाभाव्येन इदं सतर्कीकरणमुल्लङ्घ्य उच्चारणदोषाः क्रमशः सकलमपि मानवसमाजं व्याप्नुवन्ति, येन ते दोषरूपेण अविविच्यमानास्तद्भवभाषाणां सृष्टौ निमित्ततामुपयान्ति ।

तत्र केचिद् वर्णा वर्णान्तरसंसर्गरहिताः केवलाः स्वप्रकृतिवशाद् यथायथं नैवोच्चारयितुं शक्यन्ते, केचिच्च साहचर्यवशात् । वर्णानां स्वभावोऽयमादर्शोच्चारण-मसम्भावयंस्तत्तदुपदेशान् मोघीकरोति । यथा महान्तं प्रयत्नं कुर्वन्नपि कोऽपि संयोगेऽवसाने च व्यञ्जनानां सम्यगुच्चारणं विधातुं नैव प्रभवति, येन क्वचिद् वर्ण-लोपापरपर्यायं वर्णभक्षणमपि सम्पाद्यते—इति विषयस्य सोदाहरणं प्रतिपादनं लक्ष्यी-कृत्य प्रबन्धोऽयं प्रवृत्तः ।

तत्रोच्चारणवैषम्यं प्रदर्शयितुं प्रथमतो वर्णसंयोगोऽवतार्यते । द्वयोर्वर्णयोर्युगप-दुच्चारणं न सम्भवति, किन्तु पूर्व-परभावेनैव । यत्र अव्यवधानेन अर्थाद् नान्तरीयक-नगण्यकालव्यवधानेन व्यञ्जनद्वयमवतिष्ठते, तत्र वर्णसंयोग इत्याभाष्यते । तत्प्रति-पादकं पाणिनिसूत्रं तावत् "हलोऽनन्तराः संयोगः" ( १।१।७ । ) इति । यथा—क्क-

वव-वयादयः। इअ, अउइ इत्यादावव्यवधानेन एकाधिकवर्णस्थितावपि न संयुक्त-वर्णता, अत्रत्यवर्णानां व्यञ्जनत्वाभावात्। क-प-च इत्यादिष्वपि न संयोगः। एकस्य व्यञ्जनत्वेऽपि संयोगार्थमपेक्ष्यमाणस्य व्यञ्जनद्वयस्याभावात्। 'पत्रमपतत्, कृष्णो लिखति' इति वाक्यद्वये प्रथमवाक्यान्तस्थ-तकारस्य द्वितीयवाक्यादिस्थ-ककारस्य चोच्चारणे मध्येऽधिकविरामात् तादृशसमयव्यवधानं संयोगसंज्ञाया अप्रयोजकम्।

संयुक्तवर्णयोर्मध्ये य उच्चारणकालविरामस्तिष्ठति, स कुत्रचिदनुभूयते, कुत्र-चिच्च न। द्विविधा हि संयुक्तवर्णाः — केचित् संयोगपिण्डरूपाः, केचिच्च स्फोटन-रूपाः। यत्र संयुक्तव्यञ्जनद्वयमध्येऽवकाश आस्तां न वा, किन्तु सन्नपि शतपत्रपत्र-शतभेदनकाल इव सौक्ष्म्यान्न संलक्ष्यते, स संयोगपिण्डः। लौहखण्डानि सम्मेल्य पिण्डीभावे कृते यथा नीरन्ध्रता जायते, तथा ईदृशे संयोगे संयुक्तवर्णयोः पिण्डितैक-रूपधारणाद् इयमाख्या कृता शुक्लयजुःप्रातिशाख्ये (४।१।६३)। व्याख्यातं चोव्वटेन—'यथाऽयस्पिण्डादीनामाश्लेषस्तथैषां व्यञ्जनानामिति श्लोकार्थः' इति। उदाहरणम्—दिल्ली, कुक्कुटः, सत्ता, सज्जन इत्यादयः — यत्र कस्यचिद् वर्णस्य आवृत्तिर्भवति, आवर्त्तेश्च प्रथमव्यञ्जनस्य उच्चारणश्रवणे न स्तः। अयं च केवलं स्पर्शवर्णावृत्तिविषय इति वर्णरत्नप्रदीपिकाशिक्षा। यथा—

स्ववर्गीयैस्तु संयोगः स्पर्शानां सम्भवेद् यदि।
तत्पूर्वस्य श्रुतिर्नास्ति विरामव्यञ्जनस्य च॥ (श्लो० १२) इति।

स्फोटनाख्या च शुक्लयजुःप्रातिशाख्ये तादृशव्यञ्जनस्य विहिता, यत्र संयुक्त-वर्णयोः प्रथमस्य स्फोटनशब्दसमकालमुच्चारणसमाप्तौ द्वितीयव्यञ्जनस्य चोच्चा-रणात् पूर्वं कश्चित् सूक्ष्मोऽवकाश उपलभ्यते, यत्र अनिच्छत्यपि उच्चारयितरि स्वरो-चितात् पूर्णमात्राकालान्न्यूनः स्वरभक्तिनामा कश्चित् स्वरस्य भग्नांशः प्रवेशं लभते। उत्कलाः, वर्षम्, अप्सराः, रक्तम्, षट्कम्, अच्छम्, स्पर्श इत्यादीन्यस्यो-दाहरणानि।

प्रथमवर्णस्य स्फोटनानन्तरं स्वरभक्तिरायातीति तस्या अपि अथर्वप्रातिशाख्य-कृता स्फोटनाख्या उपचारनिबन्धनेति मन्यामहे। 'वर्गविपर्यये स्फोटनः पूर्वेण चेद् विरामः' (२।३८) इति ब्रुवदथर्वप्रातिशाख्यं 'कस्यचिद्वर्गस्य व्यञ्जनात्परं तत्पूर्व-वर्त्तिवर्गस्य व्यञ्जने विद्यमाने स्फोटनाख्या स्वरभक्तिः प्रविशती'त्याशेते। उत् / अ / कलाः, त्रिष्टुब् / अ / जगत्यौ इत्यादीन्यस्या उदाहरणानि। वर्गविपर्ययाभावेऽपि

उक् / अ / त इत्यादि-शब्देषु स्फोटने स्थितेऽपि, अन्यैश्च स्वीकृतेऽपि वर्गविपर्यये तस्य स्पष्टतरत्वात्तेष्वेवात्र स्फोटनत्वमभिप्रेतम् ।

जेनेराल् फोनेटिक्स् ग्रन्थे कर्ल्ड इत्यस्य Kkard इति साङ्केतिकध्वनिरूपं निर्दिशन् आर० एस० हेप्नर्महोदयोऽपि संयुक्तव्यञ्जनमध्ये स्वरभक्तिप्रवेशमुदाहरत् ।

स्पर् / ऋ / श, वर् / ऋ / ष इत्यादौ रेफोष्मसंयोगे मध्ये आपतन्ती स्वरभक्तिरर्धमात्राकाला दीर्घा च भवति, कर् / ऋ / तन इत्यादौ रेफस्य ऊष्मेतरवर्णस्य च संयोगे पादमात्राकाला ह्रस्वा च भवतीति ऋक्प्रातिशाख्यस्य दर्शनम् । यथा—

"द्राघीयसी तूष्मपरेतरा क्रमे" ( ६।१३ ),

"द्राघीयसी सार्धमात्रा" ( ६।१७ ) इति च ।

"संयोगपिण्डे ह्रस्वदीर्घस्वरभक्तिविशिष्टे स्फोटने च संयुक्तवर्णयोर्मध्ये अर्धमात्राधिकस्वरांशाभावाद् अन्यूनैकमात्राविशिष्टेन स्वरेणाव्यवधानात् पाणिन्यादिमते संयोगसंज्ञा भवत्येव । तेन सुंजूर् / ऋ / णिगरित्यादौ ह्रस्वस्वरभक्तिव्यवधानेऽपि द्वित्वं भवत्येव, पूर्णस्वरव्यवधानाभावेन संयोगाविघातात् । तथा च ऋक्प्रातिशाख्यम्—"न संयोगं स्वरभक्तिर्विहन्ति" ( ६।१० ) इति । इत्थं ह्रस्वस्वरभक्तिकृतसंयोगाविघाते सर्वसम्मतेऽपि वर् / ऋ / ष इत्यादिदीर्घस्वरभक्तिस्थलेषु मतद्वैधमुच्चारयितृगोष्ठीद्वयस्य द्विप्रकारमनुभवमाख्याति । तेन "पूर्वस्वरं संयोगाविघातश्च" ( १।१०४ ) इत्यथर्वप्रातिशाख्यसूत्रेण संयोगाविघाताद् वर् / ऋ / ष्वप्रभृतिदीर्घस्वरभक्तिस्थलेष्वपि द्वित्वे सिद्धेऽपि—

"ऊष्मणां स्वरभक्तिस्तु द्विर्भावं बाधते यथा ।
वर्षो वर्षीयसि ह्वार्षीच्छतबलशोऽपि सिद्ध्यति" ॥

इति प्रातिशाख्यप्रदीपोद्धृता आमरीशिक्षा ( शिक्षासङ्ग्रहः, पृ० २६५ ) द्वित्वाभावफलकं संयोगविघातं मन्यते ।

अस्मिन् स्फोटनाख्यसंयोगे व्यञ्जनयोः सम्पर्को जिह्वाशैथिल्यं विधाय भूयस्त्वेन पूर्ववर्णं क्वचित् परवर्णं च दुर्बलयन्नसम्पूर्णोच्चारणं प्रयोजयति । उच्चारयिताऽत्र जिह्वां संधारयति, येन श्रोतुः श्रुतिसंवरणं भवति । एतदेव अभिनिधानाख्यां वहति ऋक्प्रातिशाख्ये, यथा—

"अभिनिधानं कृतसंहितानां स्पर्शान्तस्थानामपवाद्य रेफम् ।
संधारणं संवरणं श्रुतेश्च स्पर्शोदयानामपि चावसाने" ॥ (६५) इति ।

स्पर्शवर्णा य-व-लाश्च यदा स्पर्शवर्णेन सहोच्चार्यन्ते, पदान्तेऽवतिष्ठन्ते वा, तदेषामभिनिधानं भवतीति श्लोकार्थः। पदान्तस्थव्यञ्जनस्याभिनिधानप्रसङ्ग एतद्विवेचनीयम्—

स्वरपरकं व्यञ्जनं पूर्णयाऽर्धमात्रयोच्चार्यते, व्यञ्जनपरकं तु स्फोटो अपूर्णमुच्चार्यते, संयोगपिण्डे तु नोच्चार्यते। "नाचं विना व्यञ्जनस्योच्चारणमपि भवति" इति महाभाष्यस्य दर्शनम्। शिक्षासङ्ग्रहोद्धृता सर्वसम्मतशिक्षा स्वररहित-व्यञ्जनम् अणु / पाद / मात्राकं शंसति। यथा—"अस्वरं व्यञ्जनं नित्यमणुमात्रं प्रकीर्त्तितम्" (१।१५) इति।

इत्थं केवलव्यञ्जनानामनुच्चारणमीषदुच्चारणं वा प्रदर्शितम्। तेषु पदान्तर्गतानि कानिचिद्व्यञ्जनानि भूम्नाऽनुच्चारितानि भवन्तीति ऋक्प्रातिशाख्यस्य तात्पर्यम्। अवसानस्थानि सर्वाण्यपि व्यञ्जनानि, स्ववर्ग्यस्पर्शसंयुक्तानि स्पर्शवर्णानि च नैव श्रुतिं लभन्त इति वर्णरत्नप्रदीपिकाशिक्षा (पूर्वोद्धृता) कञ्चिद्भेदं प्रकाशयति। "स्पर्शान्तस्य स्थानकरणविमोक्षः / शैथिल्यं / कर्त्तव्यः (१।६०) इत्यभिदधत् शुक्लयजुःप्रातिशाख्यं संयुक्तवर्णविषये मौनमालम्बमानमपि अवसाने स्पर्शस्याभिनिधानं द्योतयति।

व्यञ्जनस्य यथायथमुच्चारणाभावेऽभिनिधानं भवतीत्युक्त्वा अथर्वप्रातिशाख्ये अभिनिधानेन वर्णः पीडितो भवति, क्रमदौर्बल्यं भजते, तस्य घोषाघोषत्वह्रासो भवतीति प्रकाशितमनेन सूत्रेण—"व्यञ्जनविधारणमभिनिधानः पीडितः सन्नतरो हीनश्वासनादः" (१।४।४३)। तत्र च "स्पर्शस्य स्पर्शेऽभिनिधानः", "पदान्तावग्रहयोश्च", "लकारस्योष्मसु", "ङणनानां हकारे" (१।४४-४७) इति अभिनिधानस्थलान्युपवर्ण्य, "अतोऽन्यत् संयुक्तम्" (१।४९) इति सूत्रेण स्फोटनेतरः संयोगपिण्डः सङ्केतितः।

अभिनिधानास्पदस्य वर्णस्योच्चारणदौर्बल्यं बहुभिः प्रकाशितम्। नैवोच्चारणदौर्बल्यम्, अपि तु लोप एवेति व्याडिः। एतत् प्रदर्शितम् ऋक्प्रातिशाख्ये। यथा—"व्यालेः सर्वत्राभिनिधानलोपः" (६।१२) इति। उच्चारणापूर्णता मात्राधिक्ये लोपसीमां स्पृशतीत्यनयोर्द्वयोरपि सजातीयत्वम्, "उपरि लोपः–क–ग–ड–तदपषसाम्", "अधोमनयाम्", "सर्वत्र लवराम्", "अन्त्यस्य हलः" (४।१, ३-६) इति प्राकृतप्रकाशोक्तः संयुक्तावयवकतिपयवर्णानामन्त्यव्यञ्जनस्य च लोपस्तेषामभिनिधानजन्यतां द्योतयति।

इदमभिनिधानं तज्जन्यलोपं वा वर्णभक्षणनाम्ना चारायणीयशिक्षायां व्यपदिश्य यो लुप्यते, स भक्ष्यः, यस्य सन्निधिवशात् लुप्यते, स भक्षक इति गृहीतम्। इयं तत्र भक्ष्याभक्ष्यवर्णसूची प्रदत्ता—

वर्गाणां प्रथमा भुक्ता भुक्ताश्चैव तु पञ्चमाः।
अन्तस्थानां लवौ भुक्तौ शेषाश्चान्ये बुभुक्षवः॥
वर्गे वर्गे द्विकं चाद्यं दशकं वर्णसञ्चयम्।
परेषां सहयोगेन भक्ष्यवृत्तिः प्रशस्यते॥
स्पर्शौ परस्परं भुक्तौ वर्जयित्वा तु पञ्चमम्।
ङवर्णं पञ्चमैर्यत्र भोक्तव्यं तत्प्रयत्नतः॥
यकारादिहकारान्तमष्टकं च परस्परम्।
चतुरश्चतुरो वाऽपि त्वभक्ष्यं षोडशाक्षरम्॥
स्पर्शा अन्तस्थसंयुक्ता गदिरेव द्विजातिभुक्॥ इति। (४२-४३ पृष्ठे

**Critical Studies in the phonetic observation of the Indian Grammarians** ग्रन्थस्य)।

मन्यामहे, वर्णभक्षणाद् भीताः केचिदधिकप्रयत्नेनोच्चारयन्तो द्वित्वं कुर्वन्ति। यथा—वाक्क्, वाग्ग्। अन्ये तु वाक्, वाग् इति वदन्ति। गोष्ठीद्वयस्य द्विविधमेतदुच्चारणं क्रोडीकृतं पाणिनिना "अनचि च" (अष्टा० ८।४।४७) इति द्वित्वं विकल्पेन विदधता। गौर्य्यौ – गौर्यौ, वर्त्तते – वर्तते इत्यादावपि "अचोरहाभ्यां द्वे" ( अष्टा० ८।४।४६ ) इति पाणिनिसूत्रेण सैव पक्षद्वयवार्त्ता समर्थ्यते।

अल्पप्राणस्य महाप्राणीकरणमपि वर्णभक्षणभीतिसम्भूतम्। तथा हि "चयो द्वितीयाः शरि पौष्करसादेरिति वाच्यम्" इति पाणिनिसूत्रस्थ- ( ८।३।२८ ) वार्त्तिकेन संस्कृते 'प्राङ्ख् षष्ठः, सुगण्ठ् षष्ठः' इत्यादौ क-ट-स्थाने वैकल्पिकः ख-ठाऽऽदेशोऽपि भक्षणाद् वर्णस्य रक्षणमरक्षणं वेति द्विविधां दिशमवलम्ब्य प्रवृत्तः। इयमत्र महाप्राणता पुष्करतीर्थसन्निहिते प्रदेशे उदचार्यतेति कल्पयितुं शक्यम्, पुष्करे सीदतः पुष्करसदोऽपत्येन पौष्करसादिना ईप्सितत्वात्।

वैदिकभाषायामपि यत्र सामवेदीया नारदीयशिक्षा—

"प्रथमानूष्मसंयुक्तान् द्वितीयानिव दर्शयेत्।
न त्वेतान् प्रतिजानीयाद् यथा मत्स्यः क्षुरोऽप्सराः॥ ( २।५।११ )।

इति वदन्ती मत्स्य-क्षुराप्सरःशब्दानां मथस्य-ख्षुरा-प्सर इत्युच्चारणमेव शंसति, न तु थ्-ख्-फ् इति तत्र महाप्राणत्वेन विकृतिम्, तदा कृष्णयजुर्वेदीयं तैत्तिरीयप्रातिशाख्यं "प्रथम ऊष्मपरो द्वितीयम्" ( १४।२ ) इति सूत्रेण महाप्राणी-भावमनुशास्ति । शाखान्तरेषु तु महाप्राणीभावाभावः स्थित एव, यत्र वर्णानामभि-निधानं दुर्वारम् । क्वचिद् वर्णभक्षणस्य क्षतिपूरणार्थं भक्षकवर्णो द्वित्वमापद्य स्फोटनं संयोगपिण्डरूपेण परिणमयति । तेन सप्त-क्षुब्ध-भद्रादिपदानि प्राकृते सत्त-छुद्ध-भद्दादि-रूपं धारयन्ति ।

इत्थं क्वचिद् वक्तुरनवधानता क्वचिच्च व्यञ्जनस्य संसर्गेण दुर्वलता, क्वचिद्वा स्थानविशेषावस्थितिरुच्चारणवैकल्यं सम्पाद्य वर्णभक्षणदिशमनुधावन्तीति सतर्कमाकलयाम इति ।



# वेदाङ्गज्योतिषं युगवर्षायनर्तुमासाधिमासादिगणना च

श्रीशिवराज आचार्यः कौण्डिन्न्यायनः

च० २/४१९, स्वाध्यायशाला, सरस्वतीमार्गः,

लाजिम्पाट्, काष्ठमण्डपनगरम्

नेपालदेशः

❀❀❀

भारतवर्षीयस्य चातुर्वर्ण्यस्य धर्ममोक्षविषयकज्ञानस्य मुख्यं स्रोतो वेद-मन्त्र-संहिता-ब्राह्मण-वेदाङ्गशिक्षा-श्रौतसूत्र-गृह्यसूत्र-धर्मसूत्ररूप-कल्प-व्याकरण-निरुक्त-च्छन्दो-ज्योतिषरूपं शास्त्रम्, तदुपोद्बलकानि अन्यानि परिशिष्टानुस्मृति-पुराणोप-पुराणादीनि चेति विदो विदन्त्येव ।

तत्रानादेरपौरुषेयस्य वेदस्य गुरुशिष्यपरम्परयाऽविच्छेदेन धारणेन वेदादि-शास्त्रयथार्थस्वरूपरक्षायै तदर्थाधिगमेन धर्ममोक्षसाधनाय चैव द्विजातीनामुपनयनं क्रियते । अत एवोपनयनपूर्वकमुपाकर्मपूर्वकञ्च विधिनाऽधीतानां हि शास्त्राणां धर्मे मोक्षे च मुख्यं प्रामाण्यम् । अन्येषां तु तथाधीतशास्त्रविहितोक्तसूचितानुवादेन तदाकाङ्क्षितपूरणेन तदनुकूलार्थसमर्पणेन तदविरोध्यर्थप्रतिपादनेन चैव वेदादीना-मुपबृंहणेनैव प्रामाण्यं धर्ममीमांसाशास्त्रेण शिष्टैश्च स्वीक्रियमाणमवगम्यते । एष एव हि वैदिकानां मुख्यः शास्त्रप्रामाण्यसिद्धान्तः ।

तथापि अनादेरतिदीर्घकालेन चानुवृत्तस्य वैदिकसनातनवर्णाश्रमधर्मस्यानु-सरणे नानाविधाभिर्बाधाभिरुपहता जना वेदादिशास्त्राणां सम्यगध्ययनेऽशक्त-त्वादन्यैः प्राज्ञम्मन्यैर्जनधनबलेन लौकिकतर्कबलेन च नानाविधानां विमतीनां प्रदर्शनेन मुख्यस्य वैदिकमार्गस्याऽऽच्छादितत्वाच्च सन्देहमापन्ना अपथं प्रतिपन्ना वाऽप्यनुभूयन्ते ।

वेदाङ्गज्योतिषस्य विषये खल्वेतादृश्येव स्थितिः प्राचीने काल एवोप-स्थिताऽनुमीयते । तेनेदानीन्तनाः केचन वेदवेदाङ्गशास्त्रश्रद्धाविधुरा वा वैदिक-

शास्त्ररक्षाव्यवस्थामाहात्म्यप्रतिपत्तिवन्ध्या वा लब्धशासकीयज्योतिषाचार्यपदवीका अपि जनाः "पञ्चसंवत्सरमयम्" इत्यादेर्लगधप्रोक्तवेदाङ्गज्योतिषग्रन्थस्य प्रामाण्य एव संशेरते ।

तत्र केचन वेदाङ्गज्योतिषग्रन्थस्य पाठे क्वचित् किञ्चिद् विगानं दृष्ट्वा तमाक्षिपन्ति । तदेतदकिञ्चित्करम् । भवन्ति हि शाखाभेदाऽध्येतृवैगुण्यादिमूलाः स्थूलसूक्ष्माः पाठभेदाः ।

केचन सूर्यचन्द्रग्रहणानयन-मङ्गलादिग्रहचारानयनादिविषयाभावेनाऽपूर्णत्वाद् वेदाङ्गज्योतिषस्यानादरणीयतां प्रतिजानते । तदेतदपि तेषामविवेकमूलमेव । को हि नाम वेद-वेदाङ्गशास्त्रस्वरूपप्रयोजनाभिज्ञः श्रौतसूत्रे जातकर्मादिविषयाभावं दृष्ट्वा तस्य हेयतां प्रतिजानीत । वेदाङ्गज्योतिषं हि वैदिकयज्ञार्थमत्यन्तमेवापेक्षितस्य वेदोक्तस्य युगवर्षायनर्तुमासाधिमासतिथिनक्षत्रपर्वरूपस्य कालस्यैव निरूपणे प्रवृत्तमिति जानन् वैदिको जनोऽलं तेषां वेदाङ्गज्योतिषमवज्ञाय वर्तमानानां ज्यौतिषिकाणामुपेक्षणाय ।

केचन पुनर्भास्करप्रभृतिभिर्महद्भिर्ज्यौतिषिकैः स्वग्रन्थेन वेदाङ्गज्योतिषशास्त्रं प्रतिपाद्यमानं प्रतिजानानैरपि "पञ्चसंवत्सरमयम्" इत्यादेर्वेदाङ्गज्योतिषग्रन्थस्याऽनुल्लिखितत्वात् तस्य ग्रन्थस्यावेदाङ्गत्वं मन्वते । तदेतदपि वैदिकानां कृते सर्वथाऽग्राह्यम् । कतमो ग्रन्थो वेदाङ्गग्रन्थत्वेन गुरुपरम्पराप्राप्तरूपेण स्वीक्रियत इत्युपाकर्मोत्सर्जनादिविधिपालनपरा वैधस्वाध्यायाध्ययननिरता वैदिका द्विजवरा एव जानन्ति, न तु केवलं भौतिकं ज्योतिषं संसम्मृशन्तो ज्यौतिषिकाः । यदि "पञ्चसंवत्सरमयम्" इत्यादिकं ग्रन्थं वैदिका वेदाङ्गज्योतिषत्वेन स्वाध्यायाध्ययनावसरेऽधीयते, तर्हि तत्तेषां कृते वेदाङ्गज्योतिषग्रन्थत्वेन परमं प्रमाणम्, ततोऽन्ये ज्योतिषग्रन्थास्तद्विहितोक्तसूचितानुवादकास्तदाकाङ्क्षितपूरणेन तदनुकूलार्थसमर्पणेन तदविरोध्यर्थप्रतिपादनेन चैव तदुपबृंहका वाऽपि सन्त एव वैदिकधर्मे प्रमाणम्, अन्यथा त्वप्रमाणमेवेति हि वैदिकानां पन्थाः । एवञ्च सति यदि आर्यभट–वराहमिहिर–ब्रह्मगुप्त–सूर्यसिद्धान्तकार–मुञ्जाल–श्रीपतिभास्करादिप्रणीता ग्रन्थाः "पञ्चसंवत्सरमयम्" इत्यादेर्वेदाङ्गज्यौतिषग्रन्थस्य वस्तुतो विरोधिनः प्रतिकूला वा सन्ति, तर्हि ते सर्व एव वैदिकधर्मे प्रमाणत्वेन स्वीकर्तुमशक्या एव । अत्र च भारद्वाजवचनत्वेन जगन्मोहने उल्लिखितौ श्लोकौ च मननीयौ—

"मूलागमेषु सत्स्वेव कृत्रिमं यः प्रकाशयेत् ।
प्रजाक्षयो भवेत् तस्य श्रोतुश्चापि न संशयः ॥
न मूलाऽऽगमवाक्यानि तदर्थो वा न विद्यते ।
यत्राऽऽयुषः क्षयाद्धेतोस्तं ग्रन्थं नाऽवलोकयेत्"[1] ॥ इति ।

एवमेवाधुना ब्रह्म-वसिष्ठाङ्गिरोऽत्रि-कश्यप-मरीचि-पुलस्त्य-भृगु-च्यवन-यवन-गर्ग-पराशर-व्यास-शौनक-शुक-मनु-रोमशादिवचनत्वेन पुराणोपपुराणादिषु ज्योतिषग्रन्थविशेष-तद्व्याख्यानादिषु चोपलभ्यमानानि वचनानि च मूलागमरूपोक्त-वेदाङ्गज्योतिषग्रन्थविरोधित्वे स्वाध्यायाध्ययने "पञ्चसंवत्सरमयम्" इत्यादिकं मूलागमरूपं वेदाङ्गज्योतिषमधीयानानां वैदिकानां द्विजानां कृते ह्यप्रमाणान्येव ।

केचन पुनः —

"चक्षुः शास्त्रं जलं लेख्यं गणितं बुद्धिवित्तमाः ।
पञ्चैते हेतवो विप्रा ज्योतिर्गणविवेचने" ॥

इत्यादेर्ब्रह्माण्डपुराणादिवचनस्य[2] दर्शनात्, "पञ्चसंवत्सरमयम्" इत्यादेर्वेदाङ्गज्योतिषग्रन्थस्य प्रत्यक्षविरुद्धत्वाद् गणितविरुद्धत्वाच्चाऽप्रामाण्यमिति वदन्ति । एवं हि आत्मानं श्रेष्ठं ज्यौतिषिकं मन्वानो ब्रह्मगुप्त आह स्म—

"युगमाहुः पञ्चाब्दं रविशशिनोः संहिताङ्गकारा यत् ।
अधिमासावमरात्रस्फुटतिथ्यज्ञानतस्तदसत्"[3] ॥ इति ।

तदेतदपि वेदाङ्गज्योतिषहृदयविदामश्रद्धेयमेव । को ह्यबालिश उपाय-मुपदिश्यमानमुपेयं मन्येत, को वाऽमूढधीः 'काकवद् देवदत्तगृहम्' इत्याप्तोपदेशेन देवदत्तगृहं परिचीय क्षणान्तरे काकेषूड्डीय गतेषु परिचितमपि देवदत्तगृहं देवदत्त-गृहत्वेन न स्वीकुर्वीत । वदति हि वेदाङ्गज्योतिषकार आचार्यो लगधः —

"इत्युपायसमुद्देशो भूयोऽप्येवं प्रकल्पयेत् ।
ज्ञेयराशिं गताऽभ्यस्तं विभजेद् ज्ञानराशिना"[4] ॥ इति ।

---

१. जगन्मोहनम्, भट्टश्रीलक्ष्मणाचार्यविरचितम्, नेपालराष्ट्रियपुस्तकालयः, २०२०; शास्त्रावताराध्याये, पृ० ४ ।

२. ब्रह्माण्डपुराणम्, कृष्णदास अकादमी, वाराणसी, १९८३; १।२४।१५२; पृ० ५६ ।

३. भारतीय ज्योतिष, अनु० श्रीशिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५; पृ० १३२ ।

४. वेदाङ्गज्योतिषम्, सोमाकरसुधाकरभाष्यसहितम्, वाराणसी, संवत् १९६४; याजुष-ज्योतिषम्, श्लो० ४२ ।

पञ्चसंवत्सरकस्य युगस्य यज्ञविशेषरूपत्वं च —

"पञ्चसंवत्सरमयं जगदेतच्चराचरम् ।
ते पञ्च वत्सराश्चापि त इमे सम्प्रकीर्तिताः" ॥

इत्यादिना लौगाक्षिस्मृतावपि[1] प्रतिपादितं जानन् को हि वैदिक आस्तिको जनो वेदाङ्गज्योतिषहृदयानभिज्ञब्रह्मगुप्तादिवराकोक्तिमाद्रियेत।

एवञ्च वैदिकानां द्विजानां कृते स्वाध्यायाध्ययने आत्मनाऽधीयमानं "पञ्चसंवत्सरमयम्" इत्यादिकं वेदाङ्गज्योतिषं स्वश्रौतसूत्रोक्तयज्ञ-स्वगृह्यसूत्रोक्त-विवाहादिसंस्कारयज्ञादिकृत्यार्थमपेक्षितस्य कालस्य ज्ञाने परमं प्रमाणमिति मन्तव्यमेवाऽवसीयते।

स्वाध्यायाध्ययने वेदाङ्गज्योतिषस्याध्ययनं परम्परयाऽऽगतम्। तच्च शङ्करबालकृष्णदीक्षितेन "भारतस्य सर्वेषु प्रान्तेषु ब्राह्मणानां ( वेदाङ्गज्योतिषस्य ) पाठः समानोऽस्ति। वैदिका एतं ग्रन्थं साक्षाद् वेदान् न्यूनं न मन्यन्ते। तान् प्रति यदि '( भवद्भिः पठ्यमाने वेदाङ्गज्योतिषे ) अयं पाठोऽशुद्धोऽस्ति, तत्स्थाने एतं शुद्धं पाठं कुर्वन्तु भवन्तः' इत्युच्येत, तदा ते एतं प्रस्तावं स्वीकर्तुं कदापि तत्परा न भविष्यन्ति" इत्युल्लिखितम्[2]। तथैव धूलिपालकुलजेन अर्कसोमयाजिना आन्ध्र-देशजेन वैदिकेन ज्यौतिषिकेण च "वेदाङ्गज्योतिषमिति कश्चिद् ग्रन्थो वर्तते महात्मना लगधेन प्रवर्तित इति प्रतिपादितः।.....यथा वेदस्तथैवेदमद्यापि कण्ठे वर्तते बहूनां वेदपण्डितानाम्" इति प्रतिपादितम्[3]। आह्निककृत्यसङ्ग्रहेषु च स्वाध्यायाध्ययन( ब्रह्मयज्ञ )प्रकरणे "पञ्चसंवत्सरमयम्" इति वेदाङ्गज्योतिष-प्रतीकं सङ्गृहीतं दृश्यत एव[4]। वेदाङ्गज्योतिषग्रन्थस्य "पञ्चसंवत्सरमयम्" इत्यादिकस्य स्वाध्यायप्रवचने प्रवचनीयत्वं स्वाध्यायाध्ययनेऽध्येतव्यत्वमलङ्घ-नीयत्वं च लौगाक्षिस्मृतावुक्तम्। तथा हि —

---

१. स्मृतिसन्दर्भः, मनसुखराय मोर, ५, क्लाइव रो, कलकत्ता–१, २०१३; षष्ठो भागः, पृ० ३७७।
२. भारतीय ज्योतिष, अनु० श्रीशिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५, पृ० ९३।
३. ज्योतिर्विज्ञानम्, अर्कसोमयाजिना श्रीधूलिपालेन विरचितम्, वाराणसेय-संस्कृत-विश्व-विद्यालयः, १९९४; पृं० ५।
४. आह्निकसूत्रावलिः, वैद्यनारायणशर्मणा सङ्गृहीता, निर्णयसागरयन्त्रालयः, सन् १९२३; पृ० १७७।

"तस्मिन् वेदोपदेशोऽपि तेष्यां श्रावणकर्मणि ।
प्रधानहोमात् परतः श्रुतीनामुपदेशतः ॥
परं कल्पोपदेशोऽपि क्रियते शास्त्रवाक्यतः ।
तत्समत्वेन च तथा पाणिनीयस्य तत्परम् ॥
गौर्ग्मेत्यादिसमाम्नायादिकबोधकताकृतः ।
शास्त्रस्य तत्परं भूयः पञ्चादिग्रन्थकस्य च ॥
भयादिसूत्रकस्याऽपि मीमांसायुग्मकस्य च ।
अथात इति तत्सूत्रद्वयस्यापि क्रमेण वै ॥
तत्समत्वेन विहितोपदेशो वेदकर्मणि ।
तस्मादेतानि सर्वाणि ह्यलङ्घ्यान्येव सर्वदा ॥
पुराणधर्मशास्त्रादिशास्त्राणि निखिलान्यपि ।
न तैस्समानीति बुधाः प्रवदन्ति यतस्तु हि ॥
नोपदिष्टानि तानि स्युः प्रतिसंवत्सरं परम् ।
उपदिष्टानि तु पुनः यानि कर्मणि तादृशे ॥
स्युरेवाऽलङ्घनीयानि गुरूणि प्रतिवत्सरम् ।
द्विवारं बहुधाऽऽवृत्त्या यावज्जीवं विशेषतः"[१] ॥ इति ।

शिवपुराणे च "पञ्चसंवत्सरमयम्" इत्यादिकस्य ग्रन्थस्य नित्यस्वाध्यायाध्ययनेऽध्येतव्यत्वं प्रतिपादितम् । तथा हि —

"ब्राह्ममोङ्कारसहितं नमो ब्रह्मण इत्यपि ।
जपित्वा त्रिस्ततो ब्रूयादग्निमीडे पुरोहितम् ॥
अथ महाव्रतमिति अग्निर्वै देवानामतः ।
तथैतस्य समाम्नायमिषे त्वोर्ज्जे त्वा वेति तत् ॥
अग्न आयाहि वीतये शन्नो देवीरभीष्टये ।
पश्चात् प्रोच्य मयरसतजभनलगैः सह ॥
सम्मितञ्च ततः पञ्चसंवत्सरमयं ततः ।
समाम्नायः समाम्नातः अथ शिक्षां वदेत् पुनः ॥
प्रवक्ष्यामीत्युदीर्याऽथ वृद्धिरादैच्च संवदेत् ।
अथातो धर्मजिज्ञासेत्युच्चार्य पुनरञ्जसा ॥

---

१. स्मृतिसन्दर्भः, मनसुखराय मोर, ५, क्लाइव रो, कलकत्ता–१, २०१३, षष्ठो भागः, पृ० २७५-२७६ ।

अथातो ब्रह्मजिज्ञासा वेदादीनपि सञ्जपेत्"[१] ॥ इति।

अन्येष्वपि पुराणेषु आधुनिकैरालोचकैरपि प्राचीनतमत्वेन स्वीकृतेषु ब्रह्माण्ड[२]-वायु[३]-विष्णु[४]-पुराणप्रभृतिषु, भागवते[५], लिङ्गपुराणे[६], स्कन्दपुराणे माहेश्वरखण्डे[७], देवीभागवते[८], विष्णुधर्मोत्तरपुराणे[९] च वेदाङ्गज्योतिषोक्ताः संवत्सरपरिवत्सरप्रभृति-पञ्चसंवत्सरकयुग-धनिष्ठास्थसूर्योदगयनादिका विषया उल्लिखिता दृश्यन्त इति "पञ्चसंवत्सरमयम्" इत्यादिको वेदाङ्गज्योतिषग्रन्थः प्राचीनत्वेन वैदिकधर्मे प्रमाणत्वेन च स्वीकर्तव्य इति सिद्धान्त उपोद्बलितो भवति।

सोमाकरकृते वेदाङ्गज्योतिषभाष्ये वेदाङ्गज्योतिषसिद्धान्तस्पष्टीकरणाय बहूनां गर्गवचनानामुद्धृतत्वात्, भट्टोत्पलोद्धृतपराशरवचने वेदाङ्गज्योतिषोक्तायन-प्रवृत्तेर्वर्णनस्य दर्शनाच्च ज्यौतिषिकाद् गर्गात् पराशराच्च "पञ्चसंवत्सरमयम्" इत्यादिकं वेदाङ्गज्योतिषं प्राचीनमिति शङ्करबालकृष्णदीक्षितेन प्रतिपादितमपि[१०] एतस्मिन्नवसरे न विस्मर्तव्यम्।

अथात्र आचार्यलगधप्रोक्तवेदाङ्गज्योतिषस्य कालव्यवस्थाया अन्येष्वपि प्राचीनेषु ग्रन्थेषूल्लेखं प्रदर्श्य तस्य ग्रन्थस्य वेदाङ्गज्योतिषत्वं प्राचीने वैदिकानां व्यवहारे समादृतत्वं च स्फुटीकृत्य तस्येदानीमपि वैदिकैर्द्विजोत्तमैर्वैदिकधर्मकर्मणि सर्वथानुसरणीयत्वं स्फुटतरं क्रियते।

---

१. शिवमहापुराणम्, नाग पब्लिशर्स, जवाहरनगर, दिल्ली–७, द्वितीय भाग, कैलास-संहिता १२।८८-९२।

२. ब्रह्माण्डपुराणम्, कृष्णदास अकादमी, वाराणसी, १९८३; १।२४।१४०।

३. वायुपुराणम्, खेमराज श्रीकृष्णदास, मुंबई, संवत् १९५२; १।५०।१८२-१८३।

४. विष्णुपुराणम्, श्रीसत्यधर्मप्रचारसङ्घः, १८९, वि, टि रोड, अशोकगड़, कलिकाता-३५, वङ्गाब्दाः १३७३; २।८।६६।

५. श्रीमद्भागवतपुराणम्, मोतीलाल बनारसीदास, वाराणसी, १९८३; ३।११।१४-१५, ५।२२।७।

६. लिङ्गपुराणम्, मोतीलाल बनारसीदास, वाराणसी, सन् १९८०; १।६१।५२-५६।

७. स्कन्दपुराणम्, नाग पब्लिशर्स, जवाहरनगर, दिल्ली–७, प्रथमखण्डम्, १९८६; १।२।३९।५१-५२।

८. देवीभागवतम्, ठाकुरप्रसाद एण्ड सन्स बुकसेलर, वाराणसी, ८।१६।१५-१६।

९. विष्णुधर्मोत्तरपुराणम्, नाग पब्लिशर्स, जवाहरनगर, दिल्ली–७, १९८५; ३।९६।११-१२।

१०. भारतीय ज्योतिष, अनु० शिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५; पृ० १२४।

तत्र महाभारते विराट्पर्वणि—

"कलाः काष्ठाश्च युज्यन्ते मुहूर्त्ताश्च दिनानि च।
अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा॥

ऋतवश्चापि युज्यन्ते तथा संवत्सरा अपि।
एवं कालविभागेन कालचक्रं प्रवर्तते॥

तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात्।
पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः"[1] ॥

इति वेदाङ्गज्योतिषोक्ता कालगणनाव्यवस्थाऽधिमासव्यवस्था च विशेषेणोल्लिखितेति विज्ञायते। एतस्मिन् विषये शङ्करबालकृष्णदीक्षितमहाशयेनापि विचारितमेव।

पञ्चवर्षात्मकस्य युगस्योल्लेखोऽपि तत्रैवाऽऽदिपर्वणि दृश्यत इति च दीक्षितमहाशयेनोक्तमस्ति। तथा हि—

"अनुसंवत्सरं जाता अपि ते कुरुसत्तमाः।
पाण्डुपुत्रा व्यराजन्त पञ्चसंवत्सरा इव[2]" ॥ इति।

सभापर्वणि च पञ्चवर्षात्मकयुगस्योल्लेखोऽस्माभिर्दृष्टः। तथा हि—

"संवत्सराः पञ्च युगमहोरात्रश्चतुर्विधः।
कालचक्रं च तद् दिव्यं नित्यमक्षयमव्ययम्"[3] ॥ इति।

शान्तिपर्वणि मुहूर्तपरिभाषायां चास्माभिर्वेदाङ्गज्योतिषोक्तिसंवादो दृष्टः। तथा हि —

"विंशत्कलश्चापि भवेन् मुहूर्तो भागः कलाया दशमश्च यः स्यात्।
त्रिंशन्मुहूर्तश्च भवेदहश्च रात्रिश्च संख्या मुनिभिः प्रणीता"[4] ॥ इति।

यद्यपि तत्र त्रिंशत्कल इति मुद्रितपाठस्तथापि स केनचन पण्डितम्मन्येनाऽबुद्ध्वा संशोध्य पठितो भ्रष्ट एव प्रतीयते।

आश्वमेधिके पर्वणि—

"अहः पूर्वं ततो रात्रिर्मासाः शुक्लादयः स्मृताः।
श्रवणादीनि ऋक्षाणि ऋतवः शिशिरादयः"[5] ॥

इत्युल्लेखोऽपि भूम्ना वेदाङ्गज्योतिषसिद्धान्तानुकूल एव दृश्यते।

---

१. श्रीमन्महाभारतम्, चित्रशालामुद्रणालयः, पुण्यपत्तनम्, ख्रिस्ताब्दाः १९३१; ४।५२।१-३।
२. तत्रैव—१।१२४।२२; ३. तत्रैव—२।११।३८।
४. तत्रैव—१२।२३१।१३; ५. तत्रैव—१४।४४।२।

कौटलीयेऽर्थशास्त्रे च—"कालमानमत ऊर्ध्वम्। त्रुटो लवो निमेषः काष्ठा कला नाडिका मुहूर्तः पूर्वापरभागौ दिवसो रात्रिः पक्षो मास ऋतुरयनं संवत्सरो युगमिति कालाः।

शिशिराद्युत्तरायणम्। वर्षादिदक्षिणायनम्। द्व्ययनः संवत्सरः। पञ्च-संवत्सरो युगमिति।

दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः।
करोत्येकमहश्छेदं तथैवेकं च चन्द्रमाः॥
एवमर्धतृतीयानामब्दानामधिमासकम्।
ग्रीष्मे जनयतः पूर्वं पञ्चाब्दान्ते च पश्चिमम्"[1]॥

इत्युक्तं दृश्यते। एतच्च भूम्ना वेदाङ्गज्योतिषसिद्धान्तेन संवदति।

पाणिनीयव्याकरणभाष्ये—"षण् मुहूर्ताश्चराचराः। ते कदाचिदहर्गच्छन्ति कदाचिद् रात्रिम्"[2] इत्युक्तिः, "शिशिरवसन्तावुदगयनस्थौ"[3] इत्युक्तिश्च वेदाङ्ग-ज्योतिषानुकूले एव दृश्येते।

चरकसंहितायां च—"इह खलु संवत्सरं षडङ्गमृतुविभागेन विद्यात्। तत्राऽऽ-दित्यस्योदगयनमादानं च त्रीनृतूञ्छिशिरादीन् ग्रीष्मान्तान् व्यवस्येत्, वर्षादीन् पुनर्हेमन्तान्तान् दक्षिणायनं विसर्गं च"[4] इत्युक्त्वा शिशिरादय ऋतवः शिशिरादिकः संवत्सरश्च वेदाङ्गज्योतिषानुसारी वर्णितो दृश्यते।

सुश्रुतसंहितायां च—"विंशतिकलो मुहूर्तः कलादशभागश्च", "तत्र माघा-दयो द्वादशमासाः संवत्सरः। द्विमासिकमृतुं कृत्वा षडृतवो भवन्ति। ते शिशिर-वसन्तग्रीष्मवर्षाशरद्धेमन्ताः", "त एते शीतोष्णवर्षलक्षणाश्चन्द्रादित्ययोः काल-विभागकरत्वादयने द्वे भवतो दक्षिणमुत्तरं च। तयोर्दक्षिणं वर्षाशरद्धेमन्ताः, उत्तरञ्च शिशिरवसन्तग्रीष्माः", "अथ खल्वयने द्वे युगपत् संवत्सरो भवति, ते तु पञ्च युगमिति संज्ञां लभन्ते" इति प्रोच्य स्वशास्त्रापेक्षितऋतुव्यवस्थाया अन्यादृशत्वेन

---

१. कौटलीयमर्थशास्त्रम्, मैसुरुविश्वविद्यालयः, मैसुरु, १९६०; २।२०, पृ० ११५-११७।

२. व्याकरणमहाभाष्यम्, कील्होर्न-संशोधितम्, भाण्डारकरप्राच्यविद्यासंशोधनमन्दिरम्, पूना, १९६२; २।१।२९, वा० २।

३. तत्रैव—२।२।३४, वा० ३।

४. चरकसंहिता, चौखम्भा संस्कृत संस्थान, वाराणसी, निर्णयसागरयन्त्रालयप्रकाशनम्, १९४१, पुनर्मुद्रणम् १९८४, १।६।४।

"इह तु वर्षाशरद्धेमन्तवसन्तग्रीष्मप्रावृषः षड्तवो भवन्ति" इति पृथक् प्रतिपादनीयत्वेऽपि वैदिकी वेदाङ्गज्योतिषानुसारिणी कालव्यवस्था प्रतिपादिता दृश्यते[1] ।

अष्टाङ्गहृदयेऽपि—

"मासैर्द्विसङ्ख्यैर्माघाद्यैः क्रमात् षड्तवः स्मृताः ।
शिशिरोऽथ वसन्तश्च ग्रीष्मो वर्षा-शरद्-धिमाः ॥
शिशिराद्यैस्त्रिभिस्तैस्तु विद्यादयनमुत्तरम् ।
आदानं च तदाऽऽदत्ते नृणां प्रतिदिनं बलम्"[2] ॥

इति माघादयो मासा वेदाङ्गज्योतिषगणनानुकूलतयोल्लिखिता दृश्यन्ते ।

नेपालदेशे लिच्छविसम्प्रशासनकाले ( ५२१-८८३ वैक्रमाब्देषु ) अभिलिखितेषु शिलालेखेषु आषाढे पौषमासे चैव दृश्यमाना अधिमासाश्च[3] आचार्यलगधप्रोक्तवेदाङ्गज्योतिषस्य तदा व्यवहारे प्रचलितत्वमवगमयन्ति ।

बृहत्संहितायां ५६२ तमे वैक्रमेऽब्दे पञ्चसिद्धान्तिकां रचितवता वराहमिहिरेण —

"आश्लेषार्धाद् दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम् ।
नूनं कदाचिदासीद् येनोक्तं पूर्वशास्त्रेषु"[4] ॥

इत्युक्त्वा वेदाङ्गज्योतिषोक्तधनिष्ठाद्ययनप्रवृत्तिमुल्लिख्य वेदाङ्गज्योतिषस्य प्राचीनशास्त्रता प्रतिपादिताऽवगम्यते ।

बृहत्संहिताटीकायां १०२३ तमे वैक्रमेऽब्दे कृतायां भट्टोत्पलेनापि बृहस्पतिचाराध्याये—

"माघशुक्लप्रवृत्तस्य पौषकृष्णसमापिनः ।
युगस्य पञ्चकस्येह कालज्ञानं निबोध्यते"[5] ॥

इत्येतादृशो भूम्नोपलभ्यमानवेदाङ्गज्योतिषपाठसंवादी श्लोक उद्धृतो दृश्यते ।

---

१. सुश्रुतसंहिता, निर्णयसागरयन्त्रालयः, मुम्बई, सन् १९३१, १।६।५,६,७,९ ।
२. अष्टाङ्गहृदयम्, टीकाद्वयविभूषितम्, निर्णयसागरसंस्करणस्य पुनर्मुद्रणम्, चौखम्बा संस्कृत-सीरीज आफिस, वाराणसी, १९८२, १।२।१-२ ।
३. नेपालकी प्राचीन अभिलेख, सम्पादक-हरिराम जोशी, नेपाल-राजकीय-प्रज्ञा-प्रतिष्ठान, काठमाण्डू २०३० ।
४. बृहत्संहिता, वाराणसेय-संस्कृत-विश्वविद्यालयः, वाराणसी, सन् १९६८; आदित्य-चाराध्याये (३), पद्यम् १ ।
५. तत्रैव, बृहस्पतिचाराध्याये (८), पद्य ५२; पृ० १९४ ।

आर्यभटीयटीकायां भटप्रकाशिकायां लगडाचार्यस्य तदीययोर्द्वयोः श्लोकयोश्चोल्लेखो डॉ० केर्नसम्पादिते मुद्रिते आर्यभटीये प्रस्तावनायां प्रदर्शितोऽस्तीति शङ्करबालकृष्णदीक्षितेनोक्तमस्ति[1]।

माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदमन्त्रार्षसंहिताव्याख्याकारेण आचार्येणोव्वटेन "पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिमिति यदुक्तं ज्योतिःशास्त्रे, तदिहोच्यते" इत्युक्त्वा "पञ्चसंवत्सरमयम्" इत्यादेर्ज्योतिषग्रन्थस्य वेदाङ्गज्योतिषतया प्रसिद्धिरनुगम्यमानता च बोधितैव स्वव्याख्यायाम्[2]। महीधरेणापि तदेवाऽनुसृतम्।

माधवाचार्येणापि वैक्रमाब्दानां पञ्चदशस्य शतकस्य प्रारम्भे रचिते कालमाधवग्रन्थे—

"तथा च वेदाङ्गे ज्योतिषग्रन्थे पठ्यते—

पञ्चसंवत्सरमयं युगाध्यक्षं प्रजापतिम्।
दिनर्त्वयनमासाङ्गं प्रणम्य शिरसा शुचिः[3]॥ इति"।

इत्युक्त्वा लगधप्रोक्तस्य ग्रन्थस्य वेदाङ्गज्योतिषत्वं तत्काले प्रसिद्धमिति प्रदर्शितमेव।

सायणेन च ऋग्वेदभाष्यभूमिकायां षण्णां वेदाङ्गानां प्रयोजनानां प्रदर्शने "ज्योतिषस्य प्रयोजनं तस्मिन्नेव ग्रन्थेऽभिहितं यज्ञकालार्थसिद्धये"[4] इत्युक्त्वा लगधप्रोक्तस्य वेदाङ्गज्योतिषग्रन्थस्योल्लेखः कृतोऽस्ति।

कलेः ४४०० तमे वर्षे गते विष्णुचित्तेन कृतायां विष्णुपुराणव्याख्यायां च—लगडाचार्यश्च—

माघशुक्लप्रवृत्तस्य तैषकृष्णसमापिनः।
युगस्य पञ्चवर्षस्य कालज्ञानं प्रचक्षते"[5]॥

इत्याचार्यलगधस्य तत्प्रोक्तग्रन्थस्य चोल्लेखः प्रमाणतया कृतो दृश्यते।

---

१. भारतीय ज्योतिष, अनु० श्रीशिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५; पृ० ९४।
२. शुक्लयजुर्वेदसंहिता, मोतीलाल बनारसीदास, ९९७१; २७।४५, पृ० ४९१।
३. कालमाधवः, चौखम्भा संस्कृत संस्थान, वि० सं० २०४१; प्रथमप्रकरणे, पृ० २४।
४. ऋग्वेदसंहिता, श्रीमत्सायणाचार्यविरचितभाष्यसमेता, वैदिकसंशोधनमण्डल, पूना, १९७५; प्रथमो भागः, पृ० २९।
५. श्रीविष्णुपुराणम्, नाग पब्लिशर्स, जवाहरनगर, दिल्ली-७, १९८५; २।८।७१-७२, पृ० १०१-१०२।

इदानीमप्रचलिताद् गर्गग्रन्थाद् बहूनि वचनानि उद्धरन्, मन्वादिस्मृतिपरिशिष्टकृत्-विष्णु-लौगाक्षि-कृष्णात्रेय-नारद - भागुरि - क्रोष्टुकि-शुनक-मन्त्रवर्ण-मनु-सूत्रकार-श्रुति-कात्यायनाद्युल्लेखं कुर्वन् लाटदेवाऽऽर्यभट्ट-वराहमिहिर-ब्रह्मगुप्त-लल्ल-मुञ्जाल-श्रीपति-भास्करादिग्रन्थानस्पृशन् सोमाकरः श्रौती प्रव्रजिष्यन् निर्मत्सराणां श्रौतकर्मप्रवृत्तानां कृते देशकालविपर्ययादुत्सन्नतामिव प्राप्तस्याऽऽकुलस्याऽऽद्यस्य प्रधानस्य ज्योतिष-शास्त्रस्य अनुपलभ्यमानपूज्यमानव्याख्यान्तरस्य वेदाङ्गज्योतिषस्य भाष्यं कुर्वन् प्राचीन एव प्रतीयते। तस्य व्याख्यानं च प्राचीन-गर्ग-वचनानुसारित्वात् प्रायेण समीचीनमेव, न तु शङ्करबालकृष्णदीक्षितोक्तप्रकारकं नाममात्रकम्[1]। अत एव सोमाकरव्याख्यातं याजुषवेदाङ्गज्योतिषमपि वैदिकपरम्पराप्राप्तं श्रौतिनिकायपूजितं चावगम्यते । सोमाकरभाष्यस्योल्लेखो ग्रन्थान्तरे शङ्करबालकृष्णदीक्षितेन न दृष्टः[2] । तथापि तस्योल्लेखोऽस्माभिर्विष्णुभट्टचिरचिते पुरुषार्थचिन्तामणौ कालखण्डे—

"अन्यथा—

दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ।
विप्राणां कर्मदोषैस्तैः प्रजानां जायते भयम् ॥

इति स्मृत्युक्तो दोष इति ज्योतिषभाष्यं सङ्गच्छते"[3] इत्येवंरूपेण कृतो दृष्टोऽस्ति ।

कातीयेषु वेदाङ्गज्योतिषानुसारि-नक्षत्रनामकरणपरम्परा वर्तमाना संस्कार-भास्करादप्यवगम्यते[4] ।

मुहूर्तचिन्तामणिव्याख्यायां १६६० तमे वैक्रमेऽब्दे कृतायां पीयूषधारायां च—

"उक्तं च वेदाङ्गज्यौतिषे—

वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वा विहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्" ॥

इति वेदाङ्गज्योतिषवचनं प्रमाणतयोल्लिखितम्[5] । तत्रैव—

"यथा शिखा मयूराणां नागानां मणयो यथा।
तद्वद् वेदाङ्गशास्त्राणां ज्योतिषं मूर्धनि स्थितम्" ॥

इति वचनं चोल्लिखितं दृश्यते। तथा सङ्क्रान्तिप्रकरणेऽपि, "वेदाङ्ग-ज्योतिषेऽपि —

---

१. भारतीय-ज्योतिष. अनु० शिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५; पृ० ९३ ।
२. तत्रैव, पृ० ९२ ।
३. पुरुषार्थचिन्तामणिः, आनन्दाश्रममुद्रणालयः पूना, खिस्ताब्दाः, १९०७; पृ० ४०९ ( द्र० सोमाकरभाष्यम्, श्लो० ४३, पृ० ५८ ) ।
४. संस्कारभास्करः, क्षेमराज-श्रीकृष्णदासः, मुम्बयी, संवत् १९६९; नामकरणसंस्कार-निर्णये, पृ० १२३-१२४ ।
५. मुहूर्तचिन्तामणिः, हरिकृष्णदास गुप्त बुकडिपो, कचौरीगली, बनारस सिटी, पृ० १० ।

प्रपद्येते श्रविष्ठादौ सूर्याचन्द्रमसावुदक्।
सार्पार्धे दक्षिणार्कस्तु माघश्रावणयोः सदा[1] ॥ इति" ।

इत्येवमुल्लेखो दृश्यते।

मित्रमिश्रेण च वैक्रमाब्दानां सप्तदशस्य शतकस्योत्तरार्धे रचिते वीरमित्रोदये परिभाषाप्रकाशे "ज्योतिषमादित्यगर्गादिप्रोक्तं पञ्चसंवत्सरमयमित्यादि"[2] इति वेदाङ्गज्योतिषस्योल्लेखः कृतोऽस्ति ।

ब्रह्मगुप्तेन ६८५ तमे वैक्रमेऽब्दे संहिताङ्गकारप्रोक्त-वेदाङ्गज्योतिषोक्तस्य पञ्चाब्दस्य युगस्य खण्डनाय प्रयासः कृत इति तत्कालेऽपि वेदाङ्गज्योतिषस्य ज्यौतिर्षिकनिकाये प्रसिद्धिरासीदित्यवगम्यत इति तु प्रागेव सूचितम् ।

अर्वाचीना विचारका अपि "पञ्चसंवत्सरमयम्" इत्यादेर्वेदाङ्गज्योतिषग्रन्थस्याऽतीव प्राचीनत्वं स्वीकुर्वत एव । तथा हि—

"षडङ्गपाठः पुण्यपुञ्जोत्पादक इति समवगम्याऽधीयते लोका इदं वेदचक्षरूपं याजुषमार्चं च ज्यौतिषमपि। अस्य रचना च भारतात् पूर्वं मन्मते"[3] इति सुधाकरो द्विवेदी आह स्म ।

"ईशवीयवर्षप्रारम्भात् पूर्वं १४१० तमे वर्षे धनिष्ठाया भोगः ९राशय इति (गणिताद्) आगच्छति। अतः सिद्धं यत् तस्मिन् वर्षे धनिष्ठाया आरम्भे उत्तरायणारम्भोऽभूदिति । एवञ्च वेदाङ्गज्योतिषस्याऽयमेव समयो निश्चितो भवति"[4] इति शङ्करबालकृष्णदीक्षितो ब्रवीति स्म ।

"वेदाङ्गज्योतिषं लोके यज्ञकालार्थसिद्धये ।
प्रणीतं शककालात्प्राग् वत्सराणां सहस्रके"[5] ॥

इति शामशास्त्री ब्रूते स्म ।

आलोचकैः पाश्चात्त्यैः कोलब्रूक-बेण्टलि-प्राट-म्याक्समूलर-याकोवि-प्रभृतिभिरपि वेदाङ्गज्योतिषस्य समयः प्रायेण शङ्करबालकृष्णदीक्षितोक्तसमयेन तुल्य एव स्वीकृत इति तत्कृतिविदो वदन्ति[6] ।

---

१. मुहूर्तचिन्तामणिः, हरिकृष्णदासः गुप्त बुकडिपो, कचौरीगली, बनारस सिटी पृ० २०७ ।

२. वीरमित्रोदयः, चौखम्बा-सस्कृत-बुकडिपो, बनारस, क्यासिक्युलस १; पृ० २० ।

३. याजुषज्योतिषम् आर्चज्योतिषं च, मेडिकल्हाल्मुद्रायन्त्रालयः, वाराणसी, १९६४ संवत्, ज्योतिषभूमिका, पृ० १ ।

४. भारतीय ज्योतिष, अनु० शिवनाथ झारखण्डी, हिन्दी समिति, लखनऊ, १९७५, पृ० १२२ ।

५. वेदाङ्गज्योतिषम्, शामशास्त्री, मैसुरुः, १९३६ सन्; दीपिकारम्भे श्लो० २ ।

६. वैदिक वाङ्मय का बृहद् इतिहास, कुन्दनलाल शर्मा, होश्यारपुर, १९८३, षष्ठ खण्ड (वेदाङ्ग), पृ० १४२ ।

एवञ्च "पञ्चसंवत्सरमयम्" इत्यादिकं मौलिकं प्राचीनतमं प्रमाणभूतं च वेदाङ्गज्योतिषशास्त्रं वैदिकैः सर्वथा माननीयं सर्वतोभावेन परिशीलनीयञ्चेत्यवसीयते।

तत्राऽस्माभिर्हिमवत्खण्डान्तर्गत-नेपालदेशस्थ-काष्ठमण्डपनगरोदरवर्तिन्यां स्वाध्यायशालायाम् आचार्ययास्कप्रदर्शितमार्गेण कुमारिलभट्टभावं चानुहरद्भिः —

"षडङ्गशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते ।
वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते" ॥

इति भावं हृदि निधाय षडङ्गशास्त्रतेजोभिरुज्ज्वलीकृतं वेदार्थं बोद्धुं प्रयतमानैः शिक्षां कल्पं व्याकरणं निरुक्तं छन्दश्चाधीयानैः खलु वेदेषु वेदाङ्गेषु च परया भक्त्याऽऽप्लावितैः कृतेनाऽऽचार्यलगधप्रोक्तवेदाङ्गज्योतिषपरिचिन्तनेन प्राप्तं वेदाङ्गज्योतिषसिद्धान्तनिष्कर्षरूपमेकं स्थूलं फलमधः प्रस्तूयते वैदिकधर्मप्रेमिणां विचारणायाः प्रवृत्तये—

युगमार्षं हि पञ्चाब्दं ब्रह्मगुप्तादिजल्पितैः ।
नाऽनार्षैर्बाध्यते धर्मे परं मानमृषिर्यतः ॥

वैदिकानां तु वर्षादि सौरचान्द्रं प्रकीर्तितम् ।
अयनं विषुवं सूर्यात् मासं चन्द्राच्च लक्षयेत्[1] ॥

आर्यावर्ते तु मध्याह्नेऽह्नस्सु दीर्घतमा यदा ।
शङ्कोश्छाया ततः सूर्यः प्राप्नुयादुत्तरायणम् ॥

आर्यावर्ते हि मध्याह्नेऽह्नस्सु ह्रस्वतमा यदा ।
शङ्कोश्छाया ततः सूर्यः प्राप्नुयाद् दक्षिणायनम् ॥

सूर्यस्योदङ्मुखीभावात् स्फुटं याऽमावसी परा ।
तस्यां तु पूर्णे मासे हि प्रवृत्तं वर्षमिष्यते ॥

तस्य मासस्य या शुक्लप्रतिपत् तत एव च ।
इज्यार्थं वर्षमयनमृतुर्मासश्च गण्यते ॥

तत्रायनं चोत्तरं स्यादृतुश्च शिशिरो भवेत् ।
तपाः सौरे नाम्नि मासा माघश्चान्द्रे प्रकीर्तितः ॥

शिशिरश्च वसन्तश्च ग्रीष्मो वर्षास्तथा शरत् ।
हेमन्तश्चेति ऋतवः क्रमात् मासद्वयात्मकाः ॥

---

१. द्र० ब्रह्माण्डपुराणम्–१।२१।१४५, वायुपुराणम्–१।५०।१९८।

तपस्तपस्यौ च मधु-माधवौ शुक्रः शुचिः।
नभो-नभस्यौ चेषोर्जौ सहाश्चैव सहस्यकः॥
सौरनाम्ना त्विमे मासा वेदमन्त्रेषु कीर्तिताः।
चान्द्रनाम्ना च माघाद्या ब्राह्मणादिषु च श्रुताः॥
एकस्मिन्नयने सप्त दर्शा वर्षे त्रयोदश।
यदा दर्शे सप्तमे तु पूर्णो मासस्तदाऽधिकः॥
चन्द्रस्याऽदर्शनाच्चैव यावदन्यददर्शनम्।
मासश्चन्द्रमितस्तस्य शुक्लकृष्णौ तु पक्षकौ॥
चन्द्रस्यादर्शनाद् यानि यावदन्यददर्शनम्।
दिनानि प्रथमाद्यानि तिथयस्ताः प्रकीर्तिताः[1]॥
वर्षाणामपि पञ्चानामाद्यः संवत्सरः श्रुतः।
उत्तरं चाऽप्ययनयोः ऋतूनां शिशिरस्तथा॥
मासानां च तपा एव पक्षयोः शुक्ल एव च।
तिथीनां प्रतिपच्चाऽह्नो रात्रेश्चाऽप्यहरेव च[2]॥ इति।

एवं निष्कर्षे समागते वैदिकानां नवस्य वर्षस्यारम्भस्तपश्शुक्लप्रतिपदि (माघशुक्लप्रतिपदि) भवतीति ज्ञायत इति अधुना प्रचलितेषु पञ्चाङ्गकेषु यच्चैत्र-शुक्लप्रतिपदि वर्षारम्भः स्वीक्रियते, स वैदिकधर्मे त्वग्राह्य एवेति ज्ञायते। तत्रापि चैत्रस्य कृष्णे पक्षे व्यतीते मासस्यार्धे वर्षारम्भ इति श्रीकाशीविश्वनाथपञ्चाङ्गके श्रीमहावीरपञ्चाङ्गके वापूदेवशास्त्रिप्रवर्तितदृक्सिद्धपञ्चाङ्गके च यदुक्तं तच्चिन्त्यतरम्। नेपालमण्डलमध्यकाष्ठमण्डपनगरस्थनेवारसमुदाये प्रचलिते पञ्चाङ्गके तु चैत्रादिमासारम्भोऽपि शुक्लप्रतिपदायामेव स्वीक्रियत इति त्वन्यत्। भारतीय-राष्ट्रियपञ्चाङ्गकेऽपि यद् वसन्ततोंर्द्वितीये मासे विषुवद्दिनाद् द्वितीये दिने प्रवृत्ते चैत्रे नववर्षारम्भदिनं स्वीक्रियते, तदपि वेदाङ्गज्योतिषसिद्धान्तस्याऽतीव प्रतिकूलत्वाद् वैदिकधर्मे तु सर्वथाऽग्राह्यमेव। लौकिकवर्षत्वेन तथा कल्पनं न धार्मिकवर्षत्वेनेति चेत्, तदापि तत्र वैदिकमाधवमासत्वाद्यारोपणमनुचितम्। तत्र वासन्तविषुवद्दिनाद् द्वितीये दिने प्रवृत्तस्य मासस्य वैदिकमाधवमासत्वं यदुक्तं तत् सर्वथा भ्रमात्मकमेव

१. वैदिकमन्त्रसङ्ग्रहः, स्वाध्यायशाला, काष्ठमण्डपनगरम्, २०५२; परिशिष्टभागे, पृ० ११७-११८।

२. द्र० ब्रह्माण्डपुराणम्–२।२४।४०; वायुपुराणम्–१।१५४।११३-११४; लिङ्गपुराणम्–१।६१।५२-५४।

वैदिकानां तपस्तपस्यादीनां मासानां सौरायनसापेक्षचान्द्रमासत्वेन शुक्लप्रतिपदि एव तेषां प्रवृत्तेः, वैदिकयज्ञादिषु चान्द्रमासनिरपेक्षसौरमासस्य कुत्रापि उपयोगस्याऽदर्शनाच्च । उक्तेषु सर्वेषु पक्षेषु सायनायां निरयणायां वा मकरसङ्क्रान्तौ उत्तरायणारम्भस्य स्वीकृतत्वाद् वर्षारम्भस्य च चैत्रे प्रोक्तत्वात् तस्या व्यवस्थायाश्च "द्वे अयने वर्षम्" इति स्मृति-पुराण-महाभारतामरकोषादिषु प्रोक्ताया वर्षपरिभाषाया अननुकूलत्वाद् दिव्याहोरात्रमासवर्षगणनामूलकयुगमहायुगमन्वन्तरादिगणनाप्रतिकूलत्वाच्च धर्मे सर्वथा हेयता प्रतीयते । पूर्णिमान्तमासव्यवस्थायां प्रदर्श्यमानोऽधिमासः "षष्टया तु दिवसैर्मासः कथितो बादरायणैः । पूर्वार्धं तु परित्यज्य कर्तव्या चोत्तरे क्रिया" । इत्युक्तेरप्यननुकूल एव दृश्यते । सङ्कल्पे प्रभवादिसंवत्सरनामग्रहणे गणितागतारम्भसमाप्तिव्यवस्थाया अनाद्रियमाणत्वात्, तिथिनामग्रहणेऽपि गणितविशेषस्य प्रायेणाऽनाद्रियमाणत्वाद् औदयिक्यास्तिथेरेवोल्लिख्यमानत्वात्, ज्यौतिष-धर्मशास्त्रविसंवादे धर्मशास्त्रस्यैव बलीयस्त्वस्य स्वीक्रियमाणत्वाच्च ब्रह्मगुप्तादिप्रचारितस्य अधिमासावमरात्रस्फुटतिथ्यादिपक्षस्य मूलवैदिकधर्म-बाह्यत्वं विज्ञायते ।

तदत्र वेदाङ्गज्योतिषसिद्धान्तानुसारं यदा सूर्य उत्तरायणं प्रारभते ( अथवा सायनः सूर्यो मकरं गच्छति ) तदा ततः पूर्वं वा या शुक्लपक्षस्य प्रतिपत्, सैव तपश्शुक्लप्रतिपद् (माघशुक्लप्रतिपद् वा) तदैव इज्यार्थं संवत्सर-परिवत्सरादि-नववत्सरारम्भः, उत्तरायणारम्भः, शिशिरर्त्वारम्भः, तपोमासारम्भश्च वैदिकैः स्वीक्रियते । एवञ्च २०५२तमस्य वैक्रमाब्दस्य काशीविश्वनाथपञ्चाङ्गके २९ तमे पृष्ठे उट्टङ्किता मार्गशीर्षशुक्लप्रतिपदेव वेदाङ्गज्योतिषसिद्धान्तानुसारं तपश्शुक्लप्रतिपद् माघशुक्लप्रतिपद् वाऽस्तीति स्पष्टतयाऽवगन्तव्यम् । स्वाध्यायाध्ययने वेदाङ्गज्योतिषमधीयानैर्द्विजैर्धर्मकर्मसङ्कल्पादिषु तदनुसारमेव युगवर्षायनर्तुमासपक्षतिथ्युल्लेखः कार्यो न त्वन्यथा कर्तव्यः ।

तिथिश्च वेदाङ्गज्योतिषसिद्धान्तानुसारं सावनदिनात्मिकैव । चन्द्रकलादर्शनविशेषवशाद् गणितविशेषाच्च कदाचिच्चतुर्दश्याः क्षयो भवति, ततश्च प्रतिपदश्चतुर्दशे दिवसे कदाचित् पौर्णमासो वाऽमावास्या वा भवति, अन्यासां तिथीनां क्षयो नैव भवतीति च दर्शपूर्णमासयाजिनां वैदिकानां द्विजोत्तमानां पन्थाः ।

यद्यपि लघुस्मृतिपुराणादिस्थतयाऽर्वाचीनेषु धर्मशास्त्रनिबन्धग्रन्थेषूद्धृता वर्तमानपुराणविशेषपाठस्था वाऽपि तिथिक्षयवृद्ध्यादिविषयकाः श्लोका अर्वाचीनज्योतिषग्रन्थानुकूला अनेके दृश्यन्ते, तथापि तेऽनार्षा भवन्ति, वेदाङ्गज्योतिषप्रतिकूलत्वे तेषामननुसरणीयत्वरूपमप्रामाण्यं वैदिकानां कृते ज्ञेयम् । वदति हि

भट्टश्रीलक्ष्मणाचार्योऽपि जगन्मोहने तिथिफलाध्याये सप्तविंशे "पुराणवचनेषु पद्म-पुराणादिकतिपयपुराणेषु कृत्रिमवचनानि बहूनि दृश्यन्ते" इति ।

एवं च सति वेदानां वेदाङ्गानां च प्रामाण्यं रक्षितुकामैः शिष्टैर्द्विजोत्तमै-रेतस्मिन् विषये सम्यग् विचारः कर्तव्यः । वेदाङ्गानां प्रामाण्यस्य रक्षणं विना वेदानां प्रामाण्यस्य रक्षणं दुश्शकमिति वैदिकशिरोमणिभूत आचार्यः कुमारिलभट्ट आह स्म । तथा हि —

"परत्राविनयं कुर्वन् पितृभ्यां वार्यते सुतः ।
तयोरेवाविनीतस्य को भवेद् विनिवारकः ॥

तथा बहिरसम्बद्धं वदन् वेदेन वार्यते ।
साङ्गेन तं पुनर्निघ्नन् केनाऽन्येन निवार्यते ॥

क्रुद्धो यो नाम यं हन्ति स तस्याऽङ्गानि कृन्तति ।
कृत्ताङ्गस्य ततस्तस्य विनाशः कियता भवेत् ॥

तेन त्रयीं द्विषन् पूर्वं वेदाङ्गान्येव लुम्पति ।
ततस्तेनैव मार्गेण मूलान्यन्यस्य कृन्तति"[१] ॥ इति ।

वेदाङ्गज्योतिषप्रामाण्यदृढीकरणाय च ज्योतिषाध्ययनाध्यापनप्रक्रियायां "पञ्चसंवत्सरमयम्" इत्यादिकस्य वेदाङ्गज्योतिषस्याध्ययनमध्यापनं च प्रचारणीयम् । सम्पूर्णानन्दसंस्कृतविश्वविद्यालयादि-संस्कृतविश्वविद्यालयानां सिद्धान्त-ज्योतिषपाठ्यक्रमे सर्वानन्दकरणान्तर्गता वेदाङ्गमञ्जर्येव न, सोमाकरभाष्य-ज्येष्ठस्थर्पातलालाछोटेलालबार्हस्पत्यव्याख्या-सुधाकरटीका-बालगङ्गाधरटिप्पणीशङ्कर-बालकृष्णदीक्षितानुवाद-शामशास्त्रिव्याख्यादिसहितं मूलम् आचार्यलगधप्रोक्तं वेदाङ्गज्योतिषमपि निर्धारणीयम् । पञ्चाङ्गकारैरपि वैदिकसंवत्सराद्या-रम्भदिनम्, वैदिकोत्तरायण-दक्षिणायनारम्भदिने, वैदिकशिशिरत्वादिकत्वारम्भ-दिनानि, वैदिकतपस्तपस्यादिमासारम्भदिनानि, वैदिकपूर्णमासेष्टिदर्शेष्टिदिनानि, वैदिकाधिमासप्रारम्भदिनं च स्वस्वपञ्चाङ्गेषु वेदाङ्गज्योतिषानुसारं समावेशनीयानि ।

एतस्य निबन्धस्य च निर्मत्सरैः सद्भिर्वेदवेदाङ्गोपाङ्गकुशलैः शास्त्र-रसिकैर्वैदिकसनातनवर्णाश्रमधर्मानुयायिभिर्विद्वद्भिः सम्यक् परीक्ष्याऽऽकलनं कार्यम्, अत्राऽस्माकं विवेचने काऽपि त्रुटिर्दृश्यते तर्हि परया कृपयाऽस्मदीया मतिः शास्त्र-युक्तिप्रदर्शनेन परिशोधनीया चेति शम् ।

●

---

१. श्रीमज्जैमिनिप्रणीतं मीमांसादर्शनम्, आनन्दाश्रममुद्रणालयः, पुण्यपत्तनम्, १९७०; द्वितीयभागः, पृ० २२४ ।

# अविद्या

डॉ० आदित्यनाथभट्टाचार्यः
उपाचार्यः, संस्कृतविभागस्य
वर्धमानविश्वविद्यालये
पश्चिमवङ्गः

❀ ❀ ❀

दृश्यते मायाऽविद्ययोः स्वरूपे अद्वैतिनां मध्ये मिथो मतभेदः। आचार्य-सुरेश्वरमते उभावेतौ भिन्नौ। शुद्धसत्त्वप्रधाना माया, मलिनसत्त्वप्रधाना तु अविद्या। तदुक्तम्—

'सत्त्वशुद्ध्यविशुद्धिभ्यां मायाऽविद्ये च ते मते'। (पञ्चदशी)

विक्षेपशक्तिप्रधाना माया, आवरणशक्तिप्रधाना त्वविद्या। उक्तञ्च—

'माया विक्षिपदज्ञानमीशेच्छावशवर्त्ति वा।
अविद्याच्छादयत्तत्त्वं स्वातन्त्र्यानुविधायि वा'॥

विवरणाचार्यमते तु मायाविद्याशब्दौ समार्थकौ। अनयोरेवं भेदाभेदौ आभास-प्रतिबिम्बवादयोः प्रयोजकौ। प्रतिबिम्बवादे मायाऽविद्ययोः एकत्वस्वीकाराद् एक एव हिरण्यगर्भो जीवः स्वीकृतः, तेन 'एकजीववाद' एव सुस्थितः। आभासवादे तु जीवभेदेनैव अविद्याया भेदाङ्गीकारादनेकजीववाद उपपादितो भवतीति विशेषः।

तत्त्वतोऽविद्या एका अनादिभूता 'मूलाविद्या'-नाम्ना प्रख्याता। अस्या एकत्वेऽपि, जीवानां परस्परभेदस्य व्यावहारिकसत्यत्वादनन्तजीवभेदेन तस्या आनन्त्यमङ्गीकरणीयम्। यदिदं 'तूलाविद्या'-नाम्ना अविद्याया अवान्तरभेदकथनं तज्जीवनिष्ठाविद्यायाः शुक्तिघटाद्यवच्छेदभेदेन भेदव्यपदेशमात्रम्। न तु वस्तुतोऽविद्याया भेदः। यथा व्यष्ट्यभिप्रायेण बहूनां वृक्षाणां सत्यपि 'वृक्षा' इत्यनेकत्व-व्यवहारे समष्टिविवक्षया 'वनमि'त्येकत्वव्यवहारः, तथा बह्वन्तःकरणोपाधिभेदेना-नेकजीवनिष्ठाज्ञानानामनेकत्वेऽपि समुदायविवक्षयाऽज्ञानमित्येकत्वव्यपदेशः।

प्रायः सर्वेषां दार्शनिकानां मते मिथ्याज्ञानमेव सर्वानर्थमूलम्। तथा हि, जीवानां समस्तदुःखमूलीभूतकारणं जन्म। जन्मनश्च कारणं धर्माधर्मौ। धर्माधर्मयोः कारणं रागद्वेषादिदोषाः। अस्य रागादिदोषस्य कारणं मिथ्याज्ञानम्। अयञ्च सिद्धान्तो मीमांसकभिन्नानामन्येषां दार्शनिकानां वेदितव्यः। तत्र पुनः अद्वैत-

वेदान्तिनोऽस्य मिथ्याज्ञानस्यापि मूलीभूतां सर्वव्यापिब्रह्मणोऽपि आवरणरूपामघटन-घटनापटीयसीमविद्यामुररीकुर्वन्ति। आचार्यशङ्करभगवत्पादभिन्ना अन्ये आस्तिक-दार्शनिका अविद्यामेतां नाङ्गीकुर्वन्ति। केवलं बौद्धा एव संवृतिं मायामविद्यां वा समातिष्ठन्ते।

अत्रेदं समीक्षणीयम्, अनादिकालादारभ्य अनित्यमपि जगत् सर्वैर्यन्नित्यमिति मन्यते, दुःखमयविश्वं यत् सुखात्मकमिति ज्ञायते, जडशरीरादिकञ्च यच्चेतन-स्वरूपमिति प्रतीयते, एवं मन्यमानैश्च व्यवहारविधौ यदनर्थसार्था आसाद्यन्ते, तन्नैव केनापि दार्शनिकेन शक्यमपलपितुम्। एवं सति तत्कारणदिदर्शयिषया सर्वैरेव दार्शनिकैरकामैरपि नूनमुन्नेयं यत्, यथास्थितवस्तुतत्त्वं स्वरूपतोऽविजानतामेव एवं-भूतानि मिथ्याज्ञानानि समुदितानि स्युः। तथा हि, व्यवहारकाले रज्ज्वादौ सर्पादीनां या बुद्धिर्भवति, तत्र रज्ज्वाद्यधिष्ठानस्याज्ञानमेव कारणमिति को नामापलपेत्? तादृशाज्ञानादेव च भ्रमविषयाणां सर्पादीनां सत्यत्वबुद्धिं को नु न स्वीकुर्यात्? अनया रीत्या सर्वाधारब्रह्मणोऽज्ञानादेव ब्रह्मणि जगद्भ्रमो भवति, मिथ्याभूतस्य च जगतः सत्यताबुद्धिर्भवतीति ब्रह्मविषयकमज्ञानं सृष्टिबन्धनदुःखमूलं कथं नालमङ्गीकर्त्तुम्? न्यायवैशेषिकसांख्ययोगवेदान्ताचार्यैः 'तत्त्वज्ञानान्निःश्रेयसम्' इत्यभ्युपगमाद् एवं संसूच्यते, यावन्न निःश्रेयसाधिगमः, तावत् सर्वेषां संसारिणां तत्त्वविषयकमज्ञानम् अस्त्येवेति। तादृशमज्ञानं कथं न मान्यते शङ्करव्यतिरिक्तैर्दार्शनिकैरिति चिन्त-नीयम्। अ ज्ञानस्वीकारे त्वज्ञानवशादेव द्वैतत्वबुद्धिः, तत्त्वज्ञानेन चाज्ञाने प्रणष्टे अज्ञानप्रयुक्तद्वैतत्वबुद्धेरपि प्रणाशादद्वैतत्वमेवावतिष्ठते, द्वैतवादस्तु दत्तजलाञ्जलिः स्यादित्येतदर्थमेव किमेतैर्न्यायवैशेषिकादिभिरज्ञानं नाङ्गीकृतम्? किन्तु अनादिकालत एवास्माकं देहादौ या आत्मत्वबुद्धिर्भवति, न सा समीचीना। सा तु आत्मनो यथार्थ-स्वरूपाज्ञानवशादेव स्यादिति सर्वैः स्वीकर्त्तव्यम्। किञ्च प्रमाणप्रमेयव्यवहारोऽपि अविद्यामूलक एवेति सर्वैरवगन्तव्यम्। यतो हि प्रमातारं विना प्रमाणप्रवृत्तिर्न घटते, प्रमाणप्रवृत्तिमन्तरेण च प्रमेयप्रमितिर्नोदेति। प्रमाता च देहाध्यस्तचैतन्यमेव। तत्र देहादौ आत्माध्यासहेतुः अविद्या। अतः सा कथं नाङ्गीकार्या सर्वैः? तस्मात् साक्षान्मिथ्याज्ञानकारणं प्रमाणप्रमेयादिनैसर्गिकव्यवहारनिदानञ्च अज्ञानं सर्वैर-कामैरपि समास्थेयमिति सिद्ध्यति।

अपि च "अनादिभावरूपत्वे सति ज्ञाननिवर्त्त्यत्वमि"ति अविद्यालक्षणं सिद्ध्यति। अत्र 'ज्ञाननिवर्त्त्यत्व'पदानुपादाने अनादिभावरूपत्वाद् ब्रह्मणि लक्षणम् अतिव्याप्तं स्यात्, तन्मा भूदिति लक्षणे विशेष्यदलमुपात्तम्। उत्तरज्ञाननिवर्त्त्ये पूर्वज्ञाने भावरूपत्वस्य ज्ञाननिवर्त्त्यत्वस्य च सत्त्वाद् यथा अतिव्याप्तिर्न स्यात्, तदर्थं विशेषणकोटौ 'अनादित्व'पदं गृहीतम्। उत्तरज्ञाननिवर्त्त्यपूर्वज्ञानस्य भावरूपत्वेऽपि

अनादित्वाभावान्नातिव्याप्तिः। एवं 'भावरूप'पदानुपादाने ज्ञानप्रागभावस्य अनादित्वाद् ज्ञाननिवर्त्यत्वाच्चातिव्याप्तिः स्यात्। 'भावरूप'पदोपादानात्तु ज्ञानप्रागभावस्य भावरूपत्वाभावान्नातिव्याप्तिः। किञ्च 'ज्ञान'पदमत्र अपरोक्षज्ञानपरं बोध्यम्, अन्यथा अविद्यायाः परोक्षज्ञाननिवर्त्यत्वाभावादव्याप्तिः स्यात्। अत्र भावरूपपदसन्निवेशाद् अभावविलक्षणमनिर्वचनीयं वाऽज्ञानं स्यादित्यर्थः पर्यवस्यति। अयमभिसन्धिः, अज्ञानं न ज्ञानाभावः, प्रमाणाभावात्, परन्तु ज्ञाननिवर्त्यं भावरूपं वा किञ्चिदनुभूयते। तथा हि अभावज्ञानं प्रति प्रतियोगिज्ञानस्य धर्मिज्ञानस्य च कारणत्वाद् ज्ञानाभावज्ञानार्थं प्रतियोगिनो ज्ञानस्य धर्मिण आत्मनश्च ज्ञानम् आवश्यकम्। एवं प्रतियोगित्वेन ज्ञानस्य सत्त्वे अज्ञानस्य नैव ज्ञानाभावत्वं सिद्ध्यति। किञ्च अज्ञानस्य अभावत्वाभ्युपगमे सुषुप्तेरुत्थितस्य 'न किञ्चिदवेदिषम्' 'सुखमहमस्वाप्सम्' इत्येवं स्मरणानुपपत्तेः। सुषुप्तेरुत्थितस्य पुंसः 'सुखम् अहम् अस्वाप्सम्' इत्यादिपरामर्शदर्शनात् सुषुप्तिकाले ज्ञानस्य सत्त्वमुपपद्यते। यदि तावत् सुषुप्तौ अनुभवो न स्यात्, तर्हि स्मरणमपि न स्यात्, अनुभवं विना स्मरणासम्भवात्। न च सुषुप्तेरुत्थितस्य 'न किञ्चिदवेदिषम्' इत्यादिज्ञानाभावस्मरणेन सुषुप्तिकाले ज्ञानाभावोऽनुमीयत इति वाच्यम्, ज्ञानाभावस्मरणेन ज्ञानाभावोऽनुमीयेत चेत्, तर्हि ज्ञानाभावस्मरणेन ज्ञानाभावस्य अनुभवः, ज्ञानाभावस्य अनुभवेन ज्ञानाभावस्य स्मरणमिति अन्योन्याश्रयदोषः प्रसज्येत। अतोऽज्ञानं न ज्ञानाभावरूपम्। न च पुनरज्ञानं भावभूतं सत्स्वरूपं स्यात्, त्रिकालाबाधितस्यैव सत्त्वात्, अज्ञानस्य तूत्तरकालोत्पन्नयथार्थज्ञाननाश्यतया सल्लक्षणायोगात्। नापि अज्ञानमसत्, यन्नैव प्रतीयमानं तस्यैवासत्त्वात्, अज्ञानस्य तु अपरोक्षतया प्रतीतेः असत्त्वासम्भवात्। नापि च तत् सदसत्, सदसत्त्वस्य परस्परविरुद्धतया कुत्रापि स्थातुमशक्यत्वात्। अतोऽज्ञानं सदसद्विलक्षणमनिर्वचनीयम्, त्रिगुणात्मकं यथार्थज्ञाननाश्यमनादिकालत एवास्तीति लक्षणसिद्धमज्ञानं को नामापलपेत्? अज्ञानं प्रमाणसिद्धमपि भवति। 'अजामेकां लोहितशुक्लकृष्णाम्' इत्यादिश्रुतिः, 'तरत्यविद्यां विततां हृदि यस्मिन् निवेशिते' इत्यादिस्मृतिश्च अविद्यायां प्रमाणम्। अस्याः सद्भावे 'नाहं तत्त्वं जानामि' इत्येवं प्रत्यक्षानुभवोऽपि प्रमाणम्। कार्यस्य कारणधर्मसालक्षण्यनियमात् त्रिगुणान्वितस्य जगतः कारणं त्रिगुणात्मकमज्ञानमेव भवेदिति अज्ञानमनुमानसिद्धं भवति। मिथ्याभूतस्य जगतः सत्यताबुद्धिः अज्ञानोपादानकत्वं विना नोपपद्यत इत्यर्थापत्त्याऽपि अज्ञानस्य सद्भावः प्रसिद्ध्यति। एवम्भूतं लक्षणप्रमाणसिद्धमज्ञानं नास्तीति कथनं दुःसाहसिकमेव।

इदमावेदनं तत्त्वविदाम्, अज्ञानसत्त्व एवाध्याससत्ता, अज्ञानासत्त्वे तु अध्यासस्य असत्तेति अन्वयव्यतिरेकाभ्यामज्ञानस्य अध्यासोपादानत्वं सिद्ध्यति।

दृश्यते च रज्जुसर्पादिभ्रमस्थले यावद् रज्ज्वादिविषयकमज्ञानं वर्त्तते, तावदेव तत्र सर्पाद्यध्यासः। निवृत्ते चाज्ञाने रज्जुज्ञानोत्पत्तौ सुतरां सर्पाध्यासोऽपि निवर्त्तेत। प्रपञ्चस्य चाधिष्ठानं ब्रह्मेति ब्रह्मस्वरूपावरकमज्ञानं यावद्वर्त्तते, तावदेव ब्रह्मणि प्रपञ्चाध्यासः सम्भवेत्। अतो यत्र यत्रैवाध्यासो वर्त्तते तत्र तत्रैवाधिष्ठानस्वरूपविषयकमज्ञानं विद्यत इत्यज्ञानस्य अध्यासोपादानत्वं सिद्धम्।

ननु 'अज्ञानमि'ति यदुच्यते तत्तु ज्ञानाभावमात्रम्। तथा हि रज्जुविषयकज्ञानाभावः यावद्वर्त्तते तावदेव सर्पबुद्धिः प्रसरति। रज्जुज्ञाने जाते सुतरां तत्र सर्पबुद्धिर्नावतरेत्। तथाहि रज्ज्वाम् 'अयं सर्प' इति ज्ञानं प्रति 'रज्जुरिय'मिति ज्ञानं प्रतिबन्धकम्। प्रतिबन्धकाभावश्च सर्वत्र कार्योत्पत्तौ कारणसामग्र्यन्तर्गतः। अतः प्रतिबन्धकाभावविषयत्वेनैव रज्ज्वज्ञानस्य सर्पाध्यासकारणत्वम्, न त्वज्ञानत्वेन केनचिदभावविलक्षणेन कारणत्वं कल्प्यम्। तस्मादज्ञानमध्यासोपादानमिति न सिद्धयति।

तत्रेदमुच्यते—भवेदेतदेवम्, यदि तत्त्वज्ञानम् अध्यासस्य प्रतिबन्धकं स्यात्, तत्तु न, तथा हि, समग्रकारणसत्त्वेऽपि यदुपस्थितौ कार्योत्पत्तिर्व्याहन्यते, तदेव प्रतिबन्धकम्। यथा दाहकारणसत्त्वेऽपि चन्द्रकान्तमणिसद्भावे न दाहोत्पत्तिरिति चन्द्रकान्तमणिर्दाहं प्रति प्रतिबन्धकः। तदुक्तं विवरणे—

'पुष्कलकारणे हि सति कार्योत्पादविरोधि प्रतिबन्धकम्' (पृ० ६५) अध्यासस्थले तु तत्त्वज्ञानं नैव प्रतिबन्धकलक्षणान्वितं भवति। तथा च शुक्तिरजतादिस्थले काचकामलादिदोषाणां कारणत्वमिष्टम्; किन्तु यावदेषां दोषाणामवस्थानम्, तावन्नोदेति 'नेदं रजतमि'ति तत्त्वज्ञानम्, दोषापगम एव तत्त्वज्ञानसम्भवात्। एवं जगद्ब्रह्माध्यासस्थलेऽपि बोध्यम्। अतस्तत्त्वज्ञानं नैव अध्यासप्रतिबन्धकम्। तस्मात् प्रतिबन्धकाभावविधया नैव अज्ञानस्याध्यासकारणता; किन्तु अज्ञानत्वेनैवास्य अध्यासोपादानता इति न किमप्यसमञ्जसम्।

यद्यपि चैतन्यनिष्ठमज्ञानम् एकमेव, तथापि प्रमातृगतमज्ञानम्, प्रमेयगतमज्ञानञ्चेति अवच्छेदकभेदेनाज्ञानस्य द्वैविध्यमङ्गीक्रियते। तत्र अन्तःकरणावच्छिन्नचैतन्यनिष्ठमज्ञानं प्रमातृगतम्, विषयावच्छिन्नचैतन्यनिष्ठमज्ञानं प्रमेयगतमिति बोध्यम्। अवच्छेदकभेदेन भिन्नयोरज्ञानयोः शक्तिद्वयमपि कल्प्यते। तत्र प्रमातृगताज्ञाने असत्त्वापादिका शक्तिरस्ति, प्रमेयगताज्ञाने तु अभानापादिका शक्तिरिति। परोक्षज्ञानेन प्रमातृगताज्ञानस्य असत्त्वापादिका शक्तिरेव नश्यति, तेन वस्तु न असत्, किन्तु सदेवेति प्रतीयते। किन्तु तदानीं विषयगताज्ञाने अभानानुकूलशक्तेर्विद्यमानत्वाद् विषयः प्रकाशत इति वक्तुं न शक्यते। यथा पर्वते धूमं

पश्यता यदि वह्निर्न ज्ञायते, तदा तत्र वह्निविषये असत्त्वापादकम् अभानापादकञ्चेति द्विविधमज्ञानं विद्यते । यत्र तु धूमं दृष्ट्वा वह्निरनुमीयते तदा वह्नौ असत्त्वापादकशक्तिनाशेऽपि अभानापादकशक्तेरनाशाद् वह्नेरस्तितामात्रं जानतोऽपि वह्नेर्धर्मवर्णाकृत्यादिषु अज्ञानमविकलं तिष्ठति । प्रत्यक्षज्ञानेन तु अज्ञान-स्योभयशक्तेर्नाशाद् वस्तु यथा अस्तीति ज्ञायते, तथा भातीत्यप्युच्यते । वस्तुन आकृतिवर्णजात्यादेर्बोधो जायते । अतो मननसहकृतश्रवणेन ब्रह्मपरोक्ष-ज्ञाने जाते प्रमातृगताज्ञानशक्तेरेव नाशाद् ब्रह्मणोऽस्तित्वे संशयाभावेऽपि तस्य स्वरूपज्ञानं न भवति । किन्तु सम्यङ्मनननिदिध्यासनसहकृतश्रवणेन ब्रह्मापरोक्ष-निश्चये जाते अज्ञानस्योभयशक्तेः प्रणाशाद् न केवलं ब्रह्मणोऽस्तित्वमवधार्यते, अपि तु शुद्धान्तःकरणवृत्तौ प्रतिबिम्बितत्वाद् ब्रह्मणः स्वरूपावगतिर्भवति ।

अथ शङ्क्येत, ब्रह्मापरोक्षनिश्चयस्यापि कथमज्ञाननाशकता ? जीवन्मुक्ति-दशायां ब्रह्मसाक्षात्कारादनन्तरमपि अज्ञानस्यानुवृत्तेः । ततो ज्ञानेनाज्ञानस्य सहा-वस्थिततया सहानवस्थानलक्षणविरोधाभावात् ब्रह्मज्ञानेन नैवाज्ञाननिवृत्तिः स्यात्, अतोऽद्वैतिनां मतं नोपपन्नमिति दर्शयन्ति न्यायामृतकाराः । तत्रेदं समाधीयते, जीवन्मुक्तस्य तत्त्वज्ञानसत्त्वेऽपि, प्रारब्धकर्माख्यप्रतिबन्धकसन्निधेः अज्ञाननिवृत्ति-रूपं कार्यं नोत्पद्यते । यतः प्रतिबन्धकसत्त्वे विद्यमानेऽपि कारणे कार्योत्पत्तिर्न भवति । प्रतिबन्धकानामभाव एव कारणं कार्यं जनयेत् । भोगेनैव प्रारब्धकर्मणां नाशे सति प्रतिबन्धकस्य अभावविलम्बाद् जीवन्मुक्तस्य भूतपूर्वतत्त्वज्ञानादेव अज्ञानस्य विलम्बेन नाशः स्यात् ।

अत्रापि पुनराशङ्कन्ते न्यायामृतकाराः, सत्यपि तत्त्वज्ञाने जीवन्मुक्तस्य अज्ञानसत्त्वे ज्ञातवस्तुनि अज्ञातत्वव्यवहारापत्तिः स्यात् । अतः समुत्पन्नेऽपि ज्ञाने अज्ञाननिवृत्तिर्न स्यादिति नालमास्थातुम् । अन्यथा अनुभवविरोधः स्यात् । तदुक्तं न्यायामृते—

'न हि ज्ञाते क्वचिदपि न जानामीति धीरस्ति' । ( पृ० ३०९ )

समाधानकल्पे अद्वैतसिद्धिकारा एवमभिप्रयन्ति, अत्र ज्ञातवस्तुनि अज्ञातत्व-व्यवहारो नैवापद्यते । यतो हि अज्ञानस्य शक्तिद्वयमस्ति, आवरणशक्तिर्विक्षेप-शक्तिश्च । तत्र आवरणशक्तिविशिष्टमज्ञानमेव ज्ञानविरुद्धं भवति । यत ईदृश-मेवाज्ञानं विषयमावृणोति, ज्ञानन्तु प्रकाशते विषयम् । तदेवमत्र मिथो विरोधाद् उभयोर्बाध्यबाधकता युज्यते । विक्षेपशक्त्या तु ज्ञानस्य नास्ति कोऽपि विरोधः । यथा रज्जौ सर्पभ्रमात् परं भ्रान्तजनस्य शरीरे सर्पभीतिप्रयुक्तं कम्पनपलायना-दिकमुत्पद्यते, रज्ज्वोः अपरोक्षज्ञानाद् अनन्तरमपि तत् कम्पनादिकं कियत् कालं

तिष्ठति । तस्मादधिष्ठानापरोक्षज्ञानेन विक्षेपशक्तेरविरोधाद् विक्षेपशक्तिमदज्ञानं नोच्छिद्यते । अतो ज्ञानं खलु साक्षादज्ञानगतावरणशक्तेरेव निवर्त्तकम् इत्यङ्गीकुर्वन्ति अद्वैतिनः । एवमज्ञातत्वव्यवहारं प्रति आवरणशक्तिमतो ज्ञानस्यैव हेतुत्वाज्जीवन्मुक्तस्य तत्त्वज्ञानेन तदावरणशक्तेर्विनाशाद् ज्ञातवस्तुनि अज्ञातत्वव्यवहारोऽपि नापद्यते । तदुक्तमद्वैतसिद्धौ—

'तादृग्व्यवहारे आवरणशक्तिमदज्ञानस्य कारणत्वेन तदावरणशक्त्यभावादेव ईदृग्व्यवहारानापत्तेः' ।

अविद्या ब्रह्मविषयिणी भवति । अन्यविषयकत्वे 'तत्र को मोहः कः शोक एकत्वमनुपश्यतः,' 'ज्ञात्वा देवं मुच्यते सर्वपापैः' इत्यादिश्रुतिप्रतिपाद्या ब्रह्मविषयकज्ञानेन तस्या निवृत्तिर्न स्यात् समानविषयकज्ञानाज्ञानयोर्निवर्त्यनिवर्त्तकत्वभावाद् इति सर्ववादिसिद्धसिद्धान्तः ।

अविद्या ब्रह्मविषयिण्यपि जीवाश्रिता भवति । 'अहमज्ञः' 'ब्रह्म न जानामि' इत्यनुभवे अहमिति शब्दवाच्यो जीवः 'अज्ञ' इति अज्ञानाश्रयत्वेन प्रतीतेरिति वाचस्पतिमिश्रमतम् ।

किन्तु विवरणकृतां संक्षेपशारीरककृताञ्च मते, अविद्या ब्रह्माश्रिता एव । जीवभावश्च अज्ञानकार्यः, तर्हि कथं जीवोऽज्ञानाश्रयः । एवमीश्वरभावोऽपि अज्ञानकार्यं एव । तस्मादज्ञानं नेश्वराश्रितमपि । न सा पुनः स्वतन्त्रा निराश्रया वा तिष्ठति । तस्मात् पारिशेष्याद् अनाद्यज्ञानं शुद्धब्रह्माश्रितं भवति ।

इदन्त्ववधेयम्, ब्रह्मणोऽविद्याश्रयत्वाभ्युपगमे अविद्याया आवरकस्वभावतया ब्रह्मापि आवृतं भवति, ब्रह्मण आवृतत्वे तु प्रकाशानुपपत्त्या जगदान्ध्यप्रसङ्गः । किञ्च ब्रह्मणः अविद्याश्रयत्वे सर्वमुक्तेः प्राग् एकैकस्य जीवस्य शुद्धब्रह्मप्राप्तिसम्भावनैव अपलप्येत, तदानीमपि ब्रह्मणो जीवान्तरगताविद्याया आश्रयत्वादिति मुक्तेरनुपपत्तिप्रसङ्गः । अपि च ब्रह्मणो नित्यबुद्धशुद्धमुक्ततया तत्र अविद्या न स्थातुमर्हति, अविद्याया बन्धस्वरूपत्वादिति न सा ब्रह्माश्रिता, किन्तु जीवाश्रितैव । न चास्मिन् मते जीवभावस्याज्ञाननिबन्धनत्वात्, अज्ञानस्य च जीवाश्रितत्वाद् अन्योन्याश्रयप्रसङ्गः स्यादिति वाच्यम्, अज्ञानस्यानादित्वाभ्युपगमात्, तत्र च अनादिवस्तुनि तादृशदोषस्यामूलकत्वादिति विभावनीयमिति ।



# श्रीमद्भागवते श्रीमद्भगवद्गीतायाः पदपदार्थसमन्वितिः

डॉ० विन्ध्येश्वरीप्रसादमिश्रः 'विनयः'

वरिष्ठप्राध्यापकः,

उज्जयिनीस्थ-विक्रमविश्वविद्यालयस्य स्नातकोत्तर-

संस्कृताध्ययनशालायाम्

❀❀❀

सकलोपनिषत्सारां भगवद्गीतां प्रतीतिविज्ञानाम् ।
विज्ञानां रससिन्धुं सत्प्रीतिघनं भागवतञ्च नुमः ॥

निगमकल्पतरुनिर्गलितरसस्वरूपं श्रीमद्भागवतं निखिलोपनिषद्राद्धान्त-संस्फीतां श्रीमद्भगवद्गीतां विविधेषु प्रसङ्गेषु समन्वेति, तत्तत्स्थलेषु तज्ज्ञान-स्वरूपमाविष्करोति किञ्च नैकेषु सन्दर्भेषु तत्रत्यपदसङ्घटनामपि साक्षादवतारयतीति प्रायो न तिरोहितं ग्रन्थद्वयानुशीलनजुषां विदुषाम् ।

श्रीमद्भागवतस्येमे भगवद्गीतासन्दर्भास्तात्त्विकदृशा किंस्वरूपाः, किम्प्रकार-काश्चेतीदंप्रथमतया तत्तत्स्थलविशेषदिग्दर्शनपुरस्सरमत्र विव्रियते सुमनसां मनो-मोदाय, यथा—

**क. श्रीमद्भागवते गीतोपदेशाभिव्यञ्जकसन्दर्भाः**—महर्षिः कृष्णद्वैपायनो महापुराणेऽस्मिन् "श्रीमद्भगवता समरमूर्धन्यार्ताय पार्थाय तत्त्वोपदेशं कृतमिति वारत्रयं सुस्पष्टमुदीरयामास । प्रथमं प्रथमस्कन्ध एव भीष्मस्तुतौ—

"व्यवहितपृतनामुखं निरीक्ष्य
स्वजनवधाद्विमुखस्य दोषबुद्ध्या ।
कुमतिमहरदात्मविद्यया य-
श्चरणरतिः परमस्य तस्य मेऽस्तु"[1] ॥

---

१. श्रीमद्भागवते–१।९।३६ ।

द्वितीयमस्मिन्नेव पञ्चदशेऽध्याये—

"गीतं भगवता ज्ञानं यत् तत् सङ्ग्राममूर्धनि।
कालकर्मतमोरुद्धं पुनरध्यगमद्विभुः"[1] ॥
विशोको ब्रह्मसम्पत्त्या सञ्छिन्नद्वैतसंशयः।
लीनप्रकृतिनैर्गुण्यादलिङ्गत्वादसम्भवः[2] ॥

अथान्यत्र, एकादशस्कन्धे षोडशेऽध्याये—

"श्रीभगवानुवाच—

"एवमेतदहं पृष्टः प्रश्नं प्रश्नविदां वर।
युयुत्सुना विनशने सपत्नैरर्जुनेन वै ॥
ज्ञात्वा ज्ञातिवधं गर्ह्यमधर्मं राज्यहेतुकम्।
ततो निवृत्तो हन्ताऽहं हतोऽयमिति लौकिकः ॥
स तदा पुरुषव्याघ्रो युक्त्या मे प्रतिबोधितः[3]" ॥

एषु श्रीमद्भगवद्गीतोपदेशविषयकेन वृत्तान्तेनैव साधं गोतास्वरूपविषयिणी श्रीमद्भागवतस्य व्याख्येयं निर्गलति समासेन, यथा—

१. श्रीमद्भगवद्गीताऽस्ति साक्षादात्मविद्या।

२. अर्जुनस्य व्यामोहः, कुमतिः, बुद्धेर्विपर्ययः स्वरूपविस्मृतिर्वाऽऽसीत्, गीतया च तन्निरसनं जातम्।

३. श्रीकृष्ण एव परमशरण्यः परमेश्वरस्तत्र रतेराविष्करणमेव गीतार्थसारम्। इति प्रथमस्थलनिःस्यन्दः। द्वितीयेन तृतीयेन च,

१. गीताज्ञानेनार्जुनः पुनरपि शोकवर्जितो ब्रह्मसम्पत्प्राप्त्या च सम्यक्तया द्वैतप्रपञ्चरहितोऽभवदिति श्रीमद्भगवद्गीता यद्येकदा सम्यक् श्रुता स्यात्, तर्हि वस्तुशक्त्या पुनरपि प्रत्यक्षीकर्तुं शक्या दिव्यत्वादिति एतस्या अमोघप्रभावोऽभिव्यज्यते।

२. भगवद्गीताऽद्वैतात्मिका ब्रह्मसम्पत्। इयं भगवत्प्रोक्ता काचनापूर्वा युक्तिः। अनेन श्रीमद्भागवतं, गीताशास्त्रस्याद्वैतपरत्वमेव निर्धारयतीति फलितार्थः, अत एव द्वैतमूलककर्मयोगादिपरतां गीताया मन्वानाः परास्ताः।

---

१. विभुः — अर्जुनः ; २. श्रीमद्भागवते-१।१५।३१ ; ३. तत्रैव-११।१६।६-९।

**ख. श्रीमद्भागवते विविधेषु प्रसङ्गेषु श्रीमद्भगवद्गीतार्थसादृश्यम्**—यद्यपि सर्वत्रापि श्रीमद्भागवतस्य ज्ञानात्मकसंवादेषु स्तुतिकदम्बेषु च यथाऽवसरं गीतार्थ-करम्बितत्वमुपलभ्यत एव, तथापि तृतीयस्कन्धस्य कापिलेयोपाख्याने एकादश-स्कन्धस्थे च भगवदुद्धवसंवादे तत्प्राचुर्यं विस्पष्टं शक्यतेऽधिगन्तुम् ।

कपिलदेवहूतिसंवादात्मके प्रथमे, कानिचनोदाहरणानि । यथा – मातरं प्रति भगवदुक्तिः—

"योग आध्यात्मिकः पुंसां मतो निःश्रेयसाय मे ।
अत्यन्तोपरतिर्यत्र दुःखस्य च सुखस्य च"[1] ॥

इति श्रीमद्भगवद्गीताया योगलक्षणात्मिकामिमां वाचोयुक्ति संवदति । यथा— "तं विद्याद् दुःखसंयोगवियोगं योगसञ्ज्ञितम्"[2] इति ।

एवमत्रैव, '······प्रवक्ष्यामि········योगं सर्वाङ्गनैपुण'मित्युक्तिः[3] गीताशास्त्रस्य 'योगः कर्मसु कौशलम्' इति[4] प्रथितं वाक्यं स्मारयति ।

अत्रैव गीतोक्तपदसङ्घटनाऽपि सादृश्यमाबिभर्ति सहैवार्थविच्छित्त्या, तद्यथा भगवद्गीतासु—

कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ।
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते[5] ॥

एवमेव श्रीमद्भागवते—

कार्यकारणकर्तृत्वे कारणं प्रकृतिं विदुः ।
भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम् ॥ ( ३।२६।८ )

गीतासु—

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते ॥ ( ३।२७ )

किञ्चिदन्तरितपदव्यवस्थया तथैव भागवते—

अहङ्क्रियाविमूढात्मा कर्तास्मीत्यभिमन्यते । ( ३।२७।२ )

एवं सामरस्यं भजमाना एते प्रसङ्गाः—

"यं प्राप्य न निवर्तन्ते तद्धाम परमं मम" ॥ ( ८।२१ इति )

---

१. श्रीमद्भागवते — ३।२५।१३ ; २. श्रीमद्भगवद्गीता — ६।२३ ।
३. श्रीमद्भागवते — ३।२५।१४ ; ४. श्रीमद्भगवद्गीता — २।५० ; ५. तत्रैव — १३।२० ।

"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम"।
इति च गीतोक्तिः ( १५।६ ) ।

"यद्गत्वा न निवर्तेत" इत्यनेन किञ्चित्परिवर्तनेन सार्धं श्रीमद्भागवतेऽपि ( ३।२७।२९ ) समुपलभ्यते । अपि च, यथा गीताशास्त्रे—

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ ( १८।६६ )

तथैव श्रीमद्भागवतेऽपि—

मामेकमेव शरणमात्मानं सर्वदेहिनाम् ।
याहि सर्वात्मभावेन मया स्या ह्यकुतोभयः ॥ ( ११।१२।१५ )

शुचौ देशे प्रतिष्ठाप्य स्थिरमानसमात्मनः ।
नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥

इत्यारभ्य 'दिशश्चाऽनवलोकयन्'[१] इत्यन्तं श्रीमद्भगवद्गीताया योगचर्यानुशासनं, श्रीमद्भागवतेऽप्युपलभ्यत [२]एवमतिवैशद्येन—

शुचौ देशे प्रतिष्ठाप्य विजितासन आसनम् ।
तस्मिन् स्वस्ति समासीन ऋजुकायः समभ्यसेत् ॥
प्राणस्य शोधयेन्मार्गं पूरकुम्भकरेचकैः ।
प्रतिकूलेन वा चित्तं यथा स्थिरमचञ्चलम् ॥
मनोऽचिरात्स्याद्विरजं जितश्वासस्य योगिनः ।
वाय्वग्निभ्यां यथा लोहं ध्मातं त्यजति वै मलम् ॥
प्राणायामैर्दहेद्दोषान्धारणाभिश्च किल्विषान् ।
प्रत्याहारेण संसर्गान्ध्यानेनानीश्वरान्गुणान् ॥
यदा मनः स्वं विरजं योगेन सुसमाहितम् ।
काष्ठां भगवतो ध्यायेत्स्वनासाग्रावलोकनः" ॥

अतः परमत्र "प्रसन्नवदनाम्भोजम्" इत्यारभ्य 'भृत्यानुग्रहकातरमित्यन्तं सगुणस्य भगवतो विष्णोर्ध्येयस्वरूपं तदनु, "सञ्चिन्तयेदित्युपक्रम्य" "न पृथग्दिदृक्षेदिति" पर्यन्तञ्च तस्य सौन्दर्यसाराणां तत्तदङ्गानां ध्यानायनत्वेन वर्णनं श्रीमद्भागवतस्य स्वीयं वैशिष्ट्यम्[३] ।

---

१. श्रीमद्भगवद्गीता—६।११-१३; २. श्रीमद्भागवते—३।२८।८ ।
३. तत्रैव—३।२८।१३-१८, पूर्वञ्चास्मिन्नेवाध्याये २१-३३ तमं पद्यम् ।

यथा श्रीमद्भगवद्गीताशास्त्रे कर्त्तुः सात्त्विकराजसतामसाख्या भेदा व्यावर्णितास्तथैवात्रापि, यथा—

"मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः।
सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते ॥

रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः।
हर्षशोकान्वितः कर्त्ता राजसः परिकीर्तितः ॥

अयुक्तः प्राकृतः स्तब्धः शठो नैकृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते"[1] ॥

इति गीतोक्तसन्दर्भमनुहरन्नेवाह क्रमविपर्ययेण श्रीमद्भागवतकारः —

"अभिसन्धाय यो हिंसां दम्भं मात्सर्यमेव वा।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥

विषयानभिसन्धाय यश ऐश्वर्यमेव वा।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥

कर्मनिर्हारमुद्दिश्य परस्मिन् वा तदर्पणम्।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः" ॥ ( ३।२९।८-१० )

अथ द्वितीये एकादशस्कन्धस्थे श्रीकृष्णोद्धवसंवादे नैकेषां गीतार्थव्रातानां पदानाञ्चोपस्थितिरुन्नेतुं शक्या, यथा—मनसो वशीकरणयुक्तिर्यथा गीताशास्त्रे—

"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते"।

तथैव श्रीमद्भागवते—

"वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः" ॥ ( ११।९।११ )

अपि च,

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यञ्च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ ( ४।१७ ) इति।

कर्माकर्मविकर्मसञ्ज्ञकानां कर्मभेदानां चर्चा यथा गीतायां तथैव श्रीमद्भागवतेऽपि—

कर्माकर्मविकर्मेति वेदवादो न लौकिकः। ( ११।३।४३ )
कर्माकर्मविकर्मेति गुणदोषधियो भिदा। ( ११।७।८ )

---

१. श्रीमद्भगवद्गीता–१८।२६-२८।

एवमेव,

"आत्मैव ह्यात्मनो बन्धुः" इति गीतोक्तिः[१], "आत्मैव ह्यात्मनो गोप्ता"[२] इति रूपेण श्रीमद्भागवत उपलभ्यते। "मयि सर्वमिदं प्रोतम्" इति यथा भगवद्गीतायां[३] तथैव "यस्मिन्निदं प्रोतमशेषमोतम्" इति श्रीमद्भागवतेऽपि[४]।

"विषया विनिवर्तन्ते निराहारस्य देहिनः।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते"[५]॥

इति गीतोक्तसन्दर्भमेवेत्थमनुहरति श्रीमद्भागवतकृन्महर्षिः व्यासः —

"इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते"॥ (११।८।२०)

संसारवृक्षस्य स्वरूपं श्रीमद्भगवद्गीतोपनिषदि प्रथितचरम्, यथा—

"ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥

अधश्चोर्ध्वं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके॥

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च सम्प्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा"॥ (१५।१-३)

श्रीमद्भागवतेऽप्यस्य निरूपणमनेकत्र सविस्तरमुपलभ्यते, तद्यथा हि—

"य एष संसारतरुः पुराणः ....................."।

द्वे अस्य बीजे शतमूलस्त्रिनालः पञ्चस्कन्धः पञ्चरसप्रसूतिः।
दशैकशाखो द्विसुपर्णनीडस्त्रिवल्कलो द्विफलोऽर्कं प्रविष्टः॥

× × × ×

एवं गुरूपासनयैकभक्त्या विद्याकुठारेण शितेन धीरः।
विवृश्च्य जीवाशयमप्रमत्तः सम्पद्य चात्मानमथ त्यजास्त्रम्॥
(११।१२।२१-२४)

अपि च,

"तस्मै नमो भगवते भुवनद्रुमाय"। (३।९।१६)

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदो द्विखगो ह्यादिवृक्षः॥ (१०।२।२७)

---

१. ६।५; २. ११।८।४१; ३. ७।७; ४. ११।१२।२१; ५. २।५९।

उभयत्राऽप्ययं सन्दर्भ उद्देश्यप्रकरणभेदेन तत्त्वतः समानत्वेऽपि किञ्चिद्भिन्नत्व-मावहति। गीतास्थं प्रकरणमिदं "ऊर्ध्वमूलोऽवाक्शाखः"[1] इति काठकश्रुतिमनु-सृत्य वैराग्यप्रतिपादनाय संसारस्वरूपमुपदिशति[2] श्रीमद्भागवतस्य प्रथमसन्दर्भे उक्तार्थसदृशत्वेऽपि "गुरूपासनयैकभक्त्या" इति वाक्ययोजनया उपासनातत्त्वस्य माहात्म्यमुपश्लोकयति भागवतकारः, द्वितीये भुवनद्रुमं भगवद्रूपमिति निरूप्य भक्ति-सिद्धान्तमाविष्करोति अथान्तिमे "परमात्मन एव शरण्यत्वं, सर्वसृष्ट्यादिकारण-त्वात्" इत्येवाभिव्यनक्ति[3] ।

अथ, केचनान्येऽपि सादृश्यभाजः सन्दर्भा यथा श्रीमद्भगवद्गीतासु—

"तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" ॥ ( ७।१७ )

अपि च,

"ज्ञानी त्वात्मैव मे मतम्"। ( ७।१८ )

तथैव श्रीमद्भागवते—

"ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः॥
ज्ञानविज्ञानसंसिद्धाः पदं श्रेष्ठं विदुर्मम।
ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम् ॥

× × × ×

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव।
ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः" ॥ ( ११।१९।२-३,५ ).

श्रीमद्भगवद्गीतासु—

"भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन"। ( ११।५४ )

श्रीमद्भागवते—

"भक्त्याहमेकया ग्राह्यः श्रद्धयाऽऽत्मा प्रियः सताम्"। ( ११।१४।२१ )

श्रीमद्भगवद्गीतासु—

"विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" ॥ ( ५।१८ )

---

१. कठोपनिषदि, द्वितीयेऽध्याये, तृतीयवल्ल्यां प्रथमो मन्त्रः।
२. द्रष्टव्यमत्रैव—( श्रीमद्भगवद्गीताशास्त्रे १५।१ इत्यत्र ) शाङ्करभाष्योपक्रमवाक्यम्।
३. द्र० पद्यस्यास्य श्रीधरीटीका।

श्रीमद्भागवते—

"ब्राह्मणे पुल्कसे स्तेने ब्रह्मण्यर्के स्फुलिङ्गके।
अक्रूरे क्रूरके चैव समदृक् पण्डितो मतः" ॥ (११।२९।१४)

श्रीमद्भगवद्गीतासु—

"वेदवादरताः पार्थ नान्यदस्तीति वादिनः"। (२।४२ उत्तरार्द्धम्)

श्रीमद्भागवते—

"वेदवादरतो न स्यात्.........."। (११।१९।३०)

श्रीमद्भगवद्गीतासु—

"यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः"। (२।४२ पूर्वार्द्धम्)

श्रीमद्भागवते—

"एवं पुष्पितया वाचा व्याक्षिप्तमनसां नृणाम्"। (११।२१।३४)

श्रीमद्भगवद्गीतासु—

"यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः"। (१२।१५ पूर्वार्द्धम्)

श्रीमद्भागवते—

"नोद्विजेत जनाद्धीरो जनं चोद्वेजयेन्न तु"। (११।१९।३१)

श्रीमद्भगवद्गीतोपनिषदि दशमेऽध्याये यथा भगवता स्वविभूतीनां वर्णनं सन्दृब्धं तथा श्रीमद्भागवतेऽप्येकादशस्कन्धस्य षोडशेऽध्याये। एवमेव गीताशास्त्रे यथा विभूतिविषयिणी पार्थस्य जिज्ञासा, तथैवात्र श्रीमदुद्धवस्यापि। यथा हि श्रीमद्भगवद्गीतासु—

"वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥

कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन्।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥

विस्तरेणात्मनो योगं विभूतिञ्च जनार्दन।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम्" ॥ (१०।१६-१८)

श्रीमद्भागवते—

"येषु येषु च भावेषु भक्त्या त्वां परमर्षयः।
उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥

× × × ×

या काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूते ।
ता मह्यमाख्याह्यनुभावितास्ते नमामि ते तीर्थपदाङ्घ्रिपद्मम्" ॥ ( ११।१६।३-५ )

प्रश्नमिममुत्तरयन् भगवान् श्रीमद्भगवद्गीतास्थं विभूतिवर्णनप्रसङ्गं विस्पष्टं विनिर्दिशतीति पूर्वमेवास्माभिः प्रदर्शितम् । अत्र विभूतिवर्णनप्रसङ्गे उभयत्र किञ्चित्सादृश्यं किञ्चिद्वैसादृश्यञ्चास्तीति तद्विवेचनपुरस्सरं वयमत्र प्रस्तुवीमहि—

साम्यम्—

(क) विभूतिवर्णनस्यारम्भ उपसंहारश्च सदृशत्वं भजतः श्रीमद्गीतासु भागवते चोभयत्र, तद्यथाऽऽरम्भः —

"अहमात्मा गुडाकेश सर्वभूताशयस्थितः" । इति गीतासु"[1] ।

"अहमात्मोद्धवामीषां भूतानाम्........" । इति श्रीमद्भागवते[2] ।

उपसंहृतिसादृश्यमुभयत्र यथा—

श्रीमद्भगवद्गीतासु—

"यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यस्यान्मया भूतं चराचरम् ॥
नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप ।
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥
यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ।
तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्" ॥ ( १०।३९-४१ )

श्रीमद्भागवते—

"अहमेतत्प्रसंख्यानं ज्ञानं तत्त्वविनिश्चयः ।
मयेश्वरेण जीवेन गुणेन गुणिना विना ॥
सर्वात्मनाऽपि सर्वेण न भावे विद्यते क्वचित् ।
संख्यानं परमाणूनां कालेन क्रियते मया ॥
न तथा मे विभूतीनां सृजतोऽण्डानि कोटिशः ।
तेजः श्रीः कीर्त्तिरैश्वर्यं ह्रीस्त्यागः सौभगं भगः ॥
वीर्यं तितिक्षा विज्ञानं यत्र यत्र स मेंऽशकः ।
एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः" ॥ (११।१६।३८-४१)

---

१. १०।२०; २. ११।१६।९ ।

(ख) श्रीमद्भगवद्गीताशास्त्रे यद्यपि विभूतियोगमिति दशम एवाध्यायो व्यपदिष्ट इहैव च साकल्येन तत्तद्वर्गेषु भगवत्प्रतिनिधिरूपाणां विभूतीनां (ध्येय-मूर्त्तीनां) वर्णनमुपलभ्यते; किन्तु "रसोऽहमप्स्वि"त्यारभ्य "कामोऽस्मि भरतर्षभ"[1] इत्यन्तं सप्तमेऽध्याये, "अधियज्ञोऽहमेवात्र देहे देहभृतां वर" इत्यष्टमे[2] "अहं क्रतुरहं यज्ञ" इत्युपक्रम्य "सदसच्चाहमर्जुने"त्यन्तं[3] नवमेऽथ च "यदादित्यगत"-मित्युक्त्वा "वेदान्तकृद्वेदविदेव चाह"मित्यन्तं[4] पञ्चदशेऽध्यायेऽपि विभूतीना-मेव वर्णनमिति प्राचामाचार्याणामभिमतम्[5] । तथापि तैरेव विभूतीनां "निर्विशेषबोधोपयोगिन्यः सविशेषबोधोपयोगिन्यः" इति द्विधात्वमभ्युपेतम्[6] । उक्तपूर्वाः प्रथमा ज्ञानालम्बना द्वितीयाश्च ध्यानालम्बनाः । दशमे या वर्णितास्तास्तु भगवत्स्वरूपप्रतिनिधिरूपा ध्यानालम्बनाः, यथाहुरभियुक्ताः —

"विभूतिविस्तारम्......" । ( गीताभाष्ये—१०।७ )

"विभूतिञ्च विस्तरं ध्येयपदार्थानाम्" । ( तत्रैव–१०।१८ )

इति भगवत्पादशङ्कराचार्याः ।

"विभूतिं ध्यानालम्बनम्" । इति (१०।८) गीताव्याख्याने नीलकण्ठः ।

"विभूतिञ्च ध्यानालम्बनम्"

इति तत्रैव स्वसन्दृब्धमधुसूदनीटीकायामाचार्यवर्याः श्रीमधुसूदनसरस्वतीस्वामिनः । दशमेऽध्याये विंशतमश्लोकादारभ्य अष्टत्रिंशत्तमपद्यपर्यन्तं मूर्त्तामूर्त्तवस्तुवर्गाणां भगवत्प्रतिनिधिभूतानाम् एकाशीतिविभूतीनां सङ्ग्रहो दृश्यते, इतः पूर्वं सप्तमे अष्टमश्लोकादारभ्यैकादशं यावत् त्रयोदश, अष्टमे एका, नवमे द्वात्रिंशत्-संख्याकाः, पञ्चदशे च अष्टसंख्यात्मिकाः कारणकार्यरूपा इत्याहृत्य पञ्चत्रिंशदुत्तर-शतमिता विभूतयः श्रीमद्भगवता व्यावर्णिताः शास्त्रेऽस्मिन् । श्रीमद्भागवते तु एकस्मिन्नेवाध्याये द्वात्रिंशदुत्तरशतात्मिकाः प्रायो मूर्त्तामूर्त्तभाववर्गाणां प्रतिनिधिरूपाः प्रदर्शिताः, उभयत्र सामरस्यं भजमाना एताः —

---

१. श्रीमद्भगवद्गीता—७।८-११;   २. तत्रैव—८।४ ।

३. तत्रैव—९।१६-१९;   ४. तत्रैव—१५।१२-१५ ।

५. द्र० गीताशाङ्करभाष्यम्, मधुसूदनीटीका, श्रीधरीटीका, अन्याश्चाचार्याणां टीकाग्रन्थाः ।

६. श्रीमद्भगवद्गीताया मधुसूदनसरस्वतीकृतटीकायां धनपतिकृतभाष्योत्कर्षप्रकाशिकायाञ्च दशमाध्यायोपक्रमः ।

| श्रीमद्भगवद्गीताशास्त्रे | श्रीमद्भागवते |
| --- | --- |
| १. अहमात्मा गुडाकेश सर्वभूताशयस्थितः । ( १०।२० पूर्वार्द्धम् ) | अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः । ( ११।१६।९ पूर्वार्द्धम् ) |
| २. अहमादिश्च मध्यञ्च भूतानामन्त एव च । | अहञ्च सर्वभूतानि तेषां स्थित्युद्भवाप्ययः । ( ११।१६।९ ) अपि च, भूतानां स्थितिरुत्पत्तिरहं वै प्रतिसङ्क्रमः ( ११।१६।३५ ) |
| ३. आदित्यानामहं विष्णुः ( १०।२१ ) | आदित्यानामहं विष्णुः·····। ( ११।१६।१३ ) |
| ४. ज्योतिषां रविरंशुमान् ( १०।२१ ) | तपतां द्युमतां सूर्यम् ( ११।१६।१७ ) ( मां विद्धि इति पूर्वस्मादध्याहार्यम् ) |
| ५. देवानामस्मि वासवः ( १०।२२ ) | इन्द्रोऽहं सर्वदेवानाम् ( ११।१६।१३ ) |
| ६. नक्षत्राणामहं शशी ( १०।२१ ) | सोमं[1] नक्षत्रौषधीनाम् (११।१६।१६ ) |
| ७. रुद्राणां शङ्करश्चास्मि ( १०।२३ ) | रुद्राणां नीललोहितः ( ११।१६।१३ ) |
| ८. वित्तेशो यक्षरक्षसाम् ( १०।२३ ) | धनेशं यक्षरक्षसाम् ( ११।१६।१६ ) |
| ९. वसूनां पावकश्चास्मि ( १०।२३ ) | वसूनामस्मि हव्यवाट् ( ११।१६।१३ ) |
| १०. सेनानीनामहं स्कन्दः ( १०।२३ ) | स्कन्दोऽहं सर्वसेनान्याम् ( ११।१६।२२ ) |
| ११. सरसामस्मि सागरः ( १०।२४ ) | समुद्रः सरसामहम् ( ११।१६।२० ) |
| १२. महर्षीणां भृगुरहम् (१०।२५ ) | ब्रह्मर्षीणां भृगुरहम् ( ११।१६।१४ ) |
| १३. देवर्षीणाञ्च नारदः ( १०।२६ ) | देवर्षीणां नारदोऽहम् ( ११।१६।१४ ) |
| १४. सिद्धानां कपिलो मुनिः ( १०।२६ ) | सिद्धेश्वराणां कपिलः ( ११।१६।१५ ) |
| १५. उच्चैःश्रवसमश्वानाम् ( १०।२७) | उच्चैःश्रवास्तुरङ्गाणाम् ( ११।१६।१८ ) |
| १६. ऐरावतं गजेन्द्राणाम् ( १०।२७ ) | ऐरावतं गजेन्द्राणाम् ( ११।१६।१७ ) |
| १७. नराणाञ्च नराधिपम् ( १०।२७ ) | मनुष्याणां च भूपतिम् ( मां विद्धि इति योज्यम् ) ( ११।१६।१७ ) |
| १८. धेनूनामस्मि कामधुक् ( १०।२८ ) | हविर्धान्यस्मि धेनुषु ( ११।१६।१४ ) |
| १९. सर्पाणामस्मि वासुकिः ( १०।२८ ) | सर्पाणामस्मि वासुकिः ( ११।१६।१८ ) |
| २०. अनन्तश्चास्मि नागानाम् ( १०।२९ ) | नागेन्द्राणामनन्तोऽहम्·····। ( ११।१६।१९ ) |

---

१. अत्र द्वितीयान्तानि पदानि सर्वाणि 'मां विद्धि' इति पूर्वपद्यस्थवाक्येन संयोज्य सङ्गमनीयानि ।

२१. वरुणो यादसामहम् ( १०।२९ ) यादसां वरुणं प्रभुम्। ( मां विद्धि ) ( ११।१६।१७ )

२२. पितॄणामर्यमा चास्मि ( १०।२९ ) पितॄणामहमर्यमा ( ११।१६।१५ )

२३. यमः संयमतामहम् ( १०।२९ ) यमः संयमतां चाहम् ( ११।१६।१८ )

२४. प्रह्लादश्चास्मि दैत्यानाम् (१०।३०) मां विद्धयुद्धव दैत्यानां प्रह्लादमसुरेश्वरम्। ( ११।१६।१६ )

२५. कालः कलयतामहम्। ( १०।३० ) कालः कलयतामहम्। ( ११।१६।१० )

२६. वैनतेयश्च पक्षिणाम्। ( १०।३० ) सुपर्णोऽहं पतत्रिणाम् ( ११।१६।१५ )

२७. अश्वत्थः सर्ववृक्षाणाम् ( १०।२६ ) वनस्पतीनामश्वत्थः ( ११।१६।२१ )

२८. स्रोतसामस्मि जाह्नवी ( १०।३१ ) तीर्थानां स्रोतसां गङ्गा ( ११।१६।२० )

२९. अक्षराणामकारोऽस्मि ( १०।३३ ) अक्षराणामकारोऽस्मि ( ११।१६।१२ )

३०. मासानां मार्गशीर्षोऽहम् ( १०।३५ ) मासानां मार्गशीर्षोऽहम् ( ११।१६।२७ )

३१. ऋतूनां कुसुमाकरः ( १०।३५ ) ऋतूनां मधुमाधवौ ( ११।१६।२७ )

३२. सत्त्वं सत्त्ववतामहम् ( १०।३६ ) सत्त्वं सत्त्ववतामहम् ( ११।१६।२८ )

३३. कवोनामुशनाकविः ( ११।३७ ) कवीनां काव्य आत्मवान् ( ११।१६।२८ )

३४. मौनं चैवास्मि गुह्यानाम् (१०।३८) गुह्यानां सूनृतं मौनम् (११।१६।२६ )

अथ किञ्चिद् वैषम्यमपि यथा—

श्रीमद्भागवते काश्चिद् गीतोक्ता विभूतयो वर्णिता अपि वर्गपरिवर्तन-वैशिष्टयेन भिन्नत्वमुपगता दृश्यन्ते, ताश्चेमाः —

| श्रीमद्भगवद्गीताशास्त्रे | श्रीमद्भागवते |
|---|---|
| १. मनः—"इन्द्रियाणां मनश्चास्मि" ( १०।२२ ) | दुर्जयानामहं मनः ( ११।१६।११ ) |
| २. मेरुः–मेरुः शिखरिणामहम्। (१०।२३) | धिष्ण्यानामस्म्यहं मेरुः ( ११।१६।२१ ) |
| ३. बृहस्पतिः - पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम्। (१०।२४) | "ब्रह्मिष्ठानां बृहस्पतिः। ( ११।१६।२२ ) |
| ४. हिमालयः–स्थावराणां हिमालयः। ( १०।२५ ) | गहनानां हिमालयः ( ११।१६।२१ ) |

५. मृगेन्द्रः–मृगाणाञ्च मृगेन्द्रोऽहम् । (१०।३०) — मृगेन्द्रः शृङ्गिदंष्ट्रिनाम् । (११।१६।१९)

६. वासुदेवः–वृष्णीनां वासुदेवोऽस्मि । (१०।३७) — वासुदेवो भगवताम्····। (११।१६।२९)

७. अर्जुनः–पाण्डवानां धनञ्जयः । (१०।३७) — वीराणामहमर्जुनः । (११।१६।३५)

अथ काश्चन गीतास्थवर्गेषु नूत्ना विभूतयो यथा—

| गीतासु | भागवते |
|---|---|
| १. वेदवर्गे–वेदानां सामवेदोऽस्मि (१०।२२) | हिरण्यगर्भो वेदानाम् (१०।१६।१२) इति वेदवर्गे हिरण्यगर्भः । |
| २. छन्दोवर्गे–गायत्री छन्दसामहम् (१०।३५) | पदानिच्छन्दसामहम् । (११।१६।१२) इति छन्दोवर्गे पदम् । |
| ३. आयुधवर्गे–आयुधानामहं वज्रम् (१०।२८) | आयुधानां धनुरहम् । (११।१६।२०) इत्यायुधवर्ग वज्रस्थाने नूतनविभूतिः धनुः । |
| ४. पुरोहितवर्गे–पुरोधसाञ्च मुख्यं मां विद्धि पार्थ बृहस्पतिम् (१०।२४) | पुरोधसां वसिष्ठोऽहम् । (११।१६।२२) इति पुरोहितवर्गे वसिष्ठः । |
| ५. यज्ञवर्गे–यज्ञानां जपयज्ञोऽस्मि (१०।२५) | यज्ञानां ब्रह्मयज्ञोऽस्मि । (११।१६।२३) इति यज्ञवर्गे 'ब्रह्मयज्ञः' । |
| ६. मुनिवर्गे–मुनीनामप्यहं व्यासः (१०।३७) | नारायणो मुनीनाञ्च । (११।१६।२५) इति मुनिवर्गे 'व्यासः' । |
| ७. नक्षत्रवर्गे–नक्षत्राणामहं शशी (१०।२१) | नक्षत्राणां तथाभिजित् । (११।१६।२७) इति नक्षत्रवर्गे 'अभिजित्' । |
| ८. गन्धर्ववर्गे–गन्धर्वाणां चित्ररथः (१०।२६) | विश्वावसुः पूर्वचित्तिर्गन्धर्वाप्सरसामहम् (११।१६।३३) इति गन्धर्ववर्गे चित्ररथ-स्थाने 'विश्वावसुः' । |

केचन वर्गा विभूतयश्च श्रीमद्भगवद्गीतोक्ता अत्र परित्यक्ता अपि यथा—

१. मरुद्गणवर्गः, २. इन्द्रियवर्गः, ३. भूतवर्गः, ४. गौवर्गः, ५. स्थावरवर्गः, ६. शस्त्रभृद्वर्गः, ७. झषवर्गः, ८. सर्पवर्गः, ९. विद्यावर्गः, १०. वादवर्गः,

११. सामासिकवर्गः, १२. भविष्यद्वर्गः, १३. सामवर्गः, १४. छलयद्वर्गः, १५. वृष्णि-वर्गः, १६. पाण्डववर्गः, १७. दमयदवर्गः, १८. जिगीषद्वर्गः, १९. ज्ञानवद्वर्गः। इति विंशति वर्गाः।

१. मरीचिः, २. सामवेदः, ३. चेतना, ४. एकाक्षरम्, ५. जपयज्ञः, ६. चित्ररथः, ७. वज्रम्, ८. कन्दर्पः, ९. रामः, १०. मकरः, ११. अध्यात्मविद्या, १३. वादः, १४. द्वन्द्वः, १५. धाता, १६. मृत्युः, १७. उद्भवः, १८. कीर्तिः, १९. श्रीः, २०. स्मृतिः, २१. मेधा, २२. धृतिः, २३. क्षमा, २४. बृहत्साम, २५. गायत्री, २६. द्यूतम्, २७. जयः, २८. व्यवसायः, २९. दण्डः, ३०. नीतिः। इति त्रिंशत्संख्याका विभूतयोऽत्र परिहृताः। नवीनाश्च केचिद्वर्गा विभूतयोऽत्र सङ्कलितास्तद्यथा नूतना वर्गाः —

१. गतिमद्वर्गः, २. गुणवर्गः, ३. गुणि(धर्मि)वर्गः, ४. गुणवद्वर्गः, ५. महद्-वर्गः, ६. सूक्ष्मवर्गः, ७. दुर्जयवर्गः, ८. मन्त्रवर्गः, ९. प्रजापतिवर्गः, १०. ओषधि-वर्गः, ११. तपद्वर्गः, १२. धातुवर्गः, १३. शृङ्गिदंष्ट्रिवर्गः, १४. आश्रमवर्गः, १५. वर्णवर्गः, १६. तीर्थवर्गः, १७. धनुष्मद्वर्गः, १८. धिष्ण्यवर्गः, १९. गहनवर्गः, २०. ओषधिवर्गः, २१. ब्रह्मिष्ठवर्गः, २२. अग्रणीवर्गः, २३. व्रतवर्गः, २४. शुचिवर्गः, २५. योगवर्गः, २६. कौशलवर्गः, २७. ख्यातिवर्गः, २८. पुंवर्गः, २९. ब्रह्मचारिवर्गः, ३०. धर्मवर्गः, ३१. क्षेमवर्गः, ३२. मिथुनवर्गः, ३३. अनिमिषद्वर्गः, ३४. युगवर्गः, ३५. धीरवर्गः, ३६. व्यासवर्गः, ३७. भगवद्वर्गः, ३८. भागवतवर्गः, ३९. किम्पुरुषवर्गः, ४०. विद्याधरवर्गः, ४१. रत्नवर्गः, ४२. सुपेशस्वर्गः, ४३. दर्भजातिवर्गः, ४४. हवि-वर्गः, ४५. व्यवसायिवर्गः, ४६. कितववर्गः, ४७. तितिक्षुवर्गः, ४८. बलवद्वर्गः, ४९. सास्वतवर्गः, ५०. सास्वतनवमूर्तिवर्गः, ५१. अप्सरोवर्गः, ५२. अपोवर्गः, ५३. तेजिष्ठवर्गः, ५४. सूर्येन्दुतारागणवर्गः, ५५. नभोवर्गः, ५६. ब्रह्मण्यवर्गः, ५७. वीरवर्गः।

विभूतयः —

१. सुहृद्, २. ईश्वरः, ३. भूतानि, ४. गतिः, ५. साम्यम्, ६. औत्पत्तिकगुणः, ७. सूत्रम्, ८. महान्, ९. जीवः, १०. हिरण्यगर्भः, ११. प्रणवः, १२. मनुः, १३. दक्षः,

१४. काञ्चनम्, १५. तुर्य आश्रमः ( सन्न्यासः ), १६. प्रथमो वर्णः ( ब्राह्मणः ), १७. धनुः, १८. त्रिपुरघ्नः, १९. मेरुः, २०. यवः, २२. अजः, २३. ब्रह्मयज्ञः, २४. अहिंसनम्, २५. शुचिः, २६. आत्मसंरोधः, २७. मन्त्रः, २८. आन्वीक्षिकी, २९. विकल्पः, ३०. शतरूपा, ३१. स्वायम्भुवो मनुः, ३२. नारायणः ( मुनिः ), ३३. कुमारः ( सनत्कुमारः), ३४. सन्न्यासधर्मः, ३५. अबहिर्मतिः, ३६. सूनृतम्, ३७. अजः, ३८. संवत्सरः, ३९. अभिजित्, ४०. कृतम्, ४१. देवलोऽसितः, ४२. द्वैपायनः, ४३. वासुदेवः, ४४. उद्धवः, ४५. हनुमान्, ४६. सुदर्शनः, ४७. पद्मरागमणिः, ४८. पद्मकोशः, ४९. कुशः, ५०. गव्यमाज्यम्, ५१. लक्ष्मीः, ५२. छलग्रहः, ५३. तितिक्षा, ५४. ओजः, ५५. सहः, ५६. कर्म, ५७. आदिमूर्त्तिः परा, ५८. विश्वावसुः, ५९. पूर्वचित्तिः, ६०. स्थैर्यम्, ६१. गन्धमात्रम्, ६२. रसः, ६३. विभावसुः, ६४. प्रभा, ६५. शब्दः, ६६. बलिः, ६७. दशेन्द्रियाणां गत्युक्त्युत्सर्गादयः कार्याणि, ६८. पृथिवी, ६९. आकाशः, ७०. आपः, ७१. ज्योतिः, ७२. अहङ्कारः, ७३. महत्तत्त्वम् ७४. विकारः, ७५. पुरुषः, ७६. अव्यक्तम्, ७७. रजः, ७८. तमः, ७९. परम्, ८०. तत्त्वविनिश्चयात्मकं ज्ञानम्[1] ।

इत्थं श्रीमद्भागवतस्थं विभूतिवर्णनं श्रीमद्भगवद्गीतोक्तस्यैव विभूतिवर्णनस्य भक्तियोगानुकूलं व्याख्यानमिति प्रकरणस्योपसंहृतिवचनात्सुतरां सिद्ध्यति—

एतास्ते कीर्तिताः सर्वाः संक्षेपेण विभूतयः ।
मनोविकारा एवैते यथा वाचाभिधीयते ॥

× × ×

तस्मान्मनोवचःप्राणान् नियच्छेन्मत्परायणः ।
मद्भक्तियुक्तया बुद्ध्या ततः परिसमाप्यते ॥

( श्रीमद्भागवते—११।१६।४१-४४ )

अन्यत्रापि बहुत्र गीतोपलभ्यमाना सरणी श्रीमद्भागवते क्वचित्क्वचिद्दृष्टिं विलोभयति सद्य एव गीतास्थपदपद्धतिमर्थविच्छित्तिञ्च स्मारयति, यथा कपिलोपदेशस्योपसंहारे—

"नैतत्खलायोपदिशे"दित्यारभ्य "पदवीञ्च मे[2] " इत्यन्तो वचनोपन्यासः,

१. आसां वर्णनं श्रीमद्भागवते एकादशस्कन्धस्य षोडशेऽध्याये द्रष्टव्यम् ।

२. ३।३२।३९ ।

गीतोपसंहारपद्यानि "इदं ते नातपस्कायेत्या"दीनि सुतरां संवदति। एवमेव रहूगणम्प्रति जडभरतस्य प्रथमोपदेशवाक्यम्, "अकोविदः कोविदवादवादान्" इति ( ५।११।१ )।

"अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः" ॥ ( गीता–२।११ )

इति भगवदुक्ति स्मृतिपथमवतारयति पठनादेवेति न कस्यचन विमतिरत्र समापद्येत। एवमेव, यथा श्रीमद्भगवद्गीताशास्त्रे द्वितीयेऽध्याये—

"ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते।
सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते॥

क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः।
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति" ॥

इति ६२ तमे ६३ तमे पद्ये च सन्दर्भ उपक्लृप्तस्तथैव श्रीमद्भागवतेऽपि—

"विषयान्ध्यायतश्चित्तं विषयेषु विषज्जते"[1]।

इत्यत्र,

"विषयेषु गुणाध्यासात् पुंसः सङ्गस्ततो भवेत्।
सङ्गात्तत्र भवेत्कामः कामादेव कलिर्नृणाम्॥

कलेर्दुर्विषहः क्रोधस्तमस्तमनुवर्तते।
तमसा ग्रस्यते पुंसश्चेतना व्यापिनी द्रुतम्॥

तया विरहितः साधो जन्तुः शून्याय कल्पते।
ततोऽस्य स्वार्थविभ्रंशो मूर्च्छितस्य मृतस्य च"[2] ॥

इत्यत्र च समाम्नातः।

अपि च, गीतासु यथा—

"सर्वगुह्यतमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम्"[3] ॥

इति भगवद्वाक्यम्, तथैव श्रीमद्भागवतेऽपि—

"तथैतत्परमं गुह्यं शृण्वतो यदुनन्दन।
सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत्सखा"[4] ॥

---

१. श्रीमद्भागवते—११।१४।२७; २. तत्रैव—११।२१।१९-२१।
३. श्रीमद्भगवद्गीता—१८।६४; ४. श्रीमद्भागवते—११।११।४९।

श्रीमद्भगवद्गीताशास्त्रे यथा योगपरिभ्रष्टस्य पुनरन्यस्मिञ्जन्मनि साधनपरतोपात्ता—

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयः संसिद्धौ कुरुनन्दन[1] ॥

इति पद्येन तथैव श्रीमद्भागवतेऽपि मनुष्यादिभिर्विघ्नितयोगसाधनानां कुयोगिनां प्राक्तनाभ्यासबलेन ( अन्यस्मिन्भवे ) पुनर्योगयुक्तत्वमभ्युपेतम्, यथा—

कुयोगिनो ये विहितान्तरायै-
र्मनुष्यभूतैस्त्रिदशोपसृष्टैः ।
ते प्राक्तनाभ्यासबलेन भूयो
युञ्जन्ति योगं न तु कर्मतन्त्रम्[2] ॥ इति ।

अपरत्र भगवद्गीतासु—

ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः[3] ॥

इति, तत्पूर्वञ्च,

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ।
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥

रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ।
तथा प्रलीनस्तमसि मूढयोनिषु जायते[4] ॥

इति, तत्तद्गुणप्रभावे त्यक्तदेहानां प्राणिनां गतिर्निरूपिता तथैव किञ्चिच्छन्द-परिवर्तनपद्धत्या श्रीमद्भागवतशास्त्रेऽपि, तद्यथा—

उपर्युपरि गच्छन्ति सत्त्वेन ब्राह्मणा जनाः ।
तमसाऽधोऽध आमुख्याद् रजसान्तरचारिणः ॥

सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः ।
तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः[5] ॥

तथा चान्यत्रापि पदानां पदार्थानाञ्च सादृश्यमेवम्—

---

१. श्रीमद्भगवद्गीता—६।४३ ; २. श्रीमद्भागवते—११।२८।२९ ।
३. श्रीमद्भगवद्गीता—१४।१८ ; ४. तत्रैव—१४।१४-१५ ।
५ श्रीमद्भागवते—११।२५।२२ ।

| श्रीमद्भगवद्गीतासु | श्रीमद्भागवते |
| --- | --- |
| १. दिशो न जाने न लभे च शर्म । ( ११।२५ ) | दिशो न जाने न लभे च शान्तिम् । ( ११।३०।४३ ) |
| २. अमानित्वमदम्भित्वम् ( १३।७ ) | अमानित्वमदम्भित्वम् । |
| ३. भक्त्याऽहमेकया ग्राह्यः | भक्त्याऽहमेकया ग्राह्यः । (११।१४।२१) |
| ४. केषु केषु च भावेषु ( १०।१७ ) | येषु येषु च भावेषु । ( ११।१७।३ ) |
| ५. नित्यमनन्यभाक् ( ९।३० ) | नित्यमनन्यभाक् ( ११।१८।४४ ) |
| ६. ते मे युक्ततमा मताः ( १२।२ ) | ते मे भक्ततमा मताः ( ११।११।३३ ) |
| ७. यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ( ४।३७ ) | यथाग्निः सुसमृद्धार्चिः करोत्येधांसि भस्मसात् । ( ११।१४।१९ ) |

इत्यादिकं यथायथमनुसन्धेयम् ।

श्रीमद्भगवद्गीता प्रतीतिशास्त्रम्, श्रीमद्भागवतञ्च प्रीतिशास्त्रमिति गीतास्थ-पद-पदार्थानां समन्वितिः शुकसंहितायां ( श्रीमद्भागवते ) समुपलभ्यमाना गीताशास्त्रस्य काञ्चिदभिनवां व्याख्यानपद्धतिं पुरस्करोति "शास्त्रस्य शास्त्रान्तरं टीकेति" न्यायादित्यस्माकं परम्परोपासकानामभिमानः इति ।



# प्राच्यभारतीयान्वेषणकथासन्देशः

डॉ० जानकीप्रसादद्विवेदी
उपाचार्योऽध्यक्षश्च संस्कृतविभागे,
के० उ० ति० शि० संस्थानम्,
सारनाथः, वाराणसी

❀❀❀

उक्तशीर्षकः प्रथमः शोधलेखः सारस्वतीसुषमापत्रिकायाः सप्तचत्वारिंश-वर्षस्य प्रथमद्वितीयसंयुक्ताङ्कयोः ८८ पृष्ठतः १२४ पृष्ठपर्यन्तं (४७।१-२; पृ० ८८-१२४) प्रकाशितो द्रष्टव्यः। तत्राष्टोत्तरशतकथानां सारसंक्षेपः सन्दर्भसहितः सङ्गृहीतः। तासु अन्वेषणशब्दाधारिता अष्टचत्वारिंशद् (४८), गवेषणाशब्दाधारि-ताश्चतस्रः (४), विचयाधारिताः सप्तविंशतिः (२७), मार्गणपरिमार्गण-मृगण-अनु-समाहरण-शोधन-अनुसन्धानशब्दाधिकृताश्च क्रमेण सप्त (७), तिस्रः (३), अष्टौ (८), एका (१), पञ्च (५), पञ्च (५) कथा वेदोपनिषद्वाल्मीकिरामायणप्रभृतिग्रन्थेभ्यः समुद्धृताः सन्ति। तदीयांशस्यैव सम्पूर्तये इह सप्तविंशतिः कथा उपनिबद्धाः— अन्वेषणशब्दनिर्दिष्टाः सप्त (७), विचयशब्दाधारिता अष्टौ (८), मार्गणशब्दमधि-कृत्य षट् (६), मृगणशब्दाच्चतस्रः (४), परिमार्गण-प्रतिमार्गणशब्दयोः प्रत्येकमेकैक-कथा सम्प्रस्तुता। एताः सप्तविंशतिः केवलं वाल्मीकिरामायण-श्रीमद्भागवतग्रन्थाभ्या-मेवोन्नीताः। एतासां योजनेन १०८+२७=१३५ संख्याकाः कथा भवन्ति। लेखस्यास्य योजनायां २१६ संख्या सम्पूरयितुं समीह्यते। एतासामनुशीलनेन किन्ता-वद्वस्तु भवेदन्वेषणीयम्, तदीयप्राप्तिदेशः कथं चिन्त्यते, तत्रावलम्बनीयाः प्राप्त्यु-पायाः के के भवन्ति, कश्चार्थस्तत्र विशेषेण ग्राह्यो भवेदित्यादिकमवगन्तुं शक्यते। किञ्च प्राच्यभारतीयान्वेषणस्य विविधं क्षेत्रमपि परिज्ञातुं शक्यते।

## [ अन्वेषणम् ]—

### १. सगरपुत्रेणांशुमता पितृव्याणां गतेरन्वेषणम् = परिज्ञानम्

अयोध्याधिपतेः सगरस्यासीत् पत्नीद्वयम्—ज्येष्ठा केशिनी, द्वितीया च सुमतिः। ताभ्यां सह महाराजेन सगरेण पुत्रप्राप्त्यर्थं हिमालयाधिष्ठिते भृगुप्रस्रवण-

नामके स्थाने तपश्चरणमनुष्ठितम्। तपसा समाराधितो भृगुर्वरं व्यतरत्। तदनुसारेण केशिनी वंशवर्धकमेकं पुत्रमलभत, सुमतिश्च षष्टिसहस्रपुत्रान्। तत्रासमञ्जसो बभूव नितरामत्याचारपरायणः, तस्मात् सगरेण स निर्वासितः। तदीयः पुत्रो बभूव अंशुमान् सदाचारनिरतः प्रियंवदश्च।

महाराजेन सगरेण हिमवद्-विन्ध्ययोर्मध्यभागे कदाचिदश्वमेधयज्ञः समारब्धः, तत्रांशुमानासीदश्वचर्यायां नियुक्तः। इन्द्रो राक्षसीं तनुमाधाय यज्ञियमश्वं जहार। उपाध्यायगणा अब्रुवन्—"ह्रियमाणं यज्ञियमश्वमिहानय, अश्वहर्तारं च मारय, अन्यथा यज्ञच्छिद्रोऽयमस्माकमशिवाय प्रभवेत्"। तदर्थं महाराजः षष्टिसहस्रपुत्रानादिष्टवान्। तैर्भूमिखननानन्तरमपि नैवाश्वो न चाप्यश्वहर्ता सम्प्राप्तस्तस्मात् प्रत्यागतास्ते। पुनरादिष्टाः सगरपुत्रा भूमिखननमारब्धवन्तः। दिग्गजानवलोकयन्तः पृच्छन्तश्च ते यदा प्रागुत्तरां दिशमवाप्य भूमिमखनंस्तदा सनातनं वासुदेवं कपिलं हयं च ददृशुः, बलिनस्ते सगरपुत्रा दुर्वचांसि बहूनि व्याहरन्। ततः कपिलस्य हुङ्कारेण ते सर्वे भस्मसादभूवन्।

तान् सर्वान् षष्टिसहस्रपुत्राननागतान् वीक्ष्य सगरोऽसमञ्जसपुत्रमंशुमन्तमादिशन्नुवाच—

शूरश्च कृतविद्यश्च पूर्वैस्तुल्योऽसि तेजसा।
पितॄणां गतिमन्विच्छ येन चाश्वोऽपवाहितः॥ (वा० रा० १।४१।२)

अर्थात् त्वं तेजसा, बलेन, विद्याभिश्च सम्पन्नोऽसि, तस्मात् त्वमश्वहर्तुः स्वकीयपितृव्याणां च गतिम्=गमनस्थितिम् अन्विच्छ=जानीहि। अश्वहर्ता क्व गतः, क्व च गतास्ते पितृव्या इति सम्यगवगन्तव्यं त्वया। तदीयमादेशं शिरसावधार्यांशुमान् महर्षिकपिलाश्रममुपेत्य भस्मीभूतान् स्वकीयपितृव्यान् अविदूरे चरन्तमश्वं च ददर्श। 'लौकिकेन जलेन त्वदीयाः पितृव्यास्तृप्ता नैव भविष्यन्ति, तेन गङ्गानयने यत्नः कश्चिदास्थेयः' इति वैनतेयवचनं समाद्रियमाणोंऽशुमानश्वमादायावशिष्टं यज्ञकृत्यं सम्पादयितुं राजधानीं प्रत्यावृत्तः।

## २. रामलक्ष्मणाभ्यां जनस्थानगन्धर्वभवनादेरन्वेषणम् = प्राप्तिर्निरीक्षणं च

सीताहरणेन नितान्तं सन्तप्तो रामः सांवर्तकमनलमिव रौद्रं रूपमादधे, स्वकीयं धनुश्च सज्यं चकार। तथाविधं रामं वीक्ष्य लक्ष्मणः प्राञ्जलिर्भूत्वा प्रार्थयते—त्वया तथैव स्वीयमनुत्तमं यशो नैव परित्याज्यम्, यथा चन्द्रो लक्ष्मीम्, सूर्यः प्रभाम्, वायुर्गतिम्, भूश्च क्षमां नैव कदापि विजहाति। एकस्यापराधेन बहवो नैव हन्तव्याः।

आवाभ्यां न केवलं नृलोकः, किञ्च देवलोको गन्धर्वलोकोऽपि सोतासम्प्राप्त्यर्थमन्वेष्टव्यः। एवं शीलेन, साम्ना, विनयेन, नयेन च यदि सीता नाधिगम्यते, ततस्त्वयाऽयं लोकः समुत्सादनीयः। तदानीं लक्ष्मणो बहुभिरुदाहरणैरिदं साधयामास यत् कस्य प्राणिनो लोके विपदो न भवन्ति ? दृश्यतां तावद् इन्द्रलोकमुपागतं नहुषात्मजं ययातिम्। स तत्राप्यनयाचरणमास्थितवान्। वसिष्ठस्यैकेनैव दिवसेन पुत्रशतं जातं मृतं चापि। जगतो मातुरस्याः पृथिव्याश्चलनं दृश्यते। धर्मरूपी जगन्नेत्रौ सूर्याचन्द्रमसौ राहुकेतुसमायोगेन ग्रहणं प्राप्नुतः। एवं बुद्धया विचिन्त्यावाभ्यामन्वेषणं कार्यम्। अस्मत्पुरतो दृश्यमानं जनस्थानं समग्रमेवान्वेषणोयम्, यद् राक्षसैर्विविधैर्द्रुमैर्लताभिश्च समाकीर्णं वर्तते। अत्र बहवः पर्वताः, दुर्गाः, कन्दराः, किन्नरगन्धर्वभवनानि च विराजन्ते, तानि सर्वाण्येवान्वेष्टव्यानि = प्राप्तव्यानि निरीक्षणीयानि सन्ति—

इदमेव जनस्थानं त्वमन्वेषितुमर्हसि।
तानि युक्तो मया सार्धं समन्वेषितुमर्हसि॥
( वा० रा० ३।६७४, ७)

## ३. रामलक्ष्मणादिभिर्दण्डकारण्य-अशोकवनिकादेरन्वेषणम् = निरीक्षणम्

वानरराजेन राममित्रेण सुग्रीवेण समादिष्टा वानरसेनापतयः सीतान्वेषणपराः सञ्जाताः। विनतस्य सेनापतित्वे पूर्वा दिक्, सुषेणस्य सेनापतित्वे प्रतीची दिक्, शतबलेः सेनापतित्वे उदोची दिक् सम्पूर्णाऽन्विष्टा वानरसेनया, परं सीता नाधिगता। दक्षिणस्यां दिशि अङ्गदः सेनापतिर्भूत्वा हनुमज्जाम्बवदादिभिर्वानरवीरैः सह गत्वा विविधानि वनादीन्यन्विष्टवान्। एतस्मात् पूर्वं स्वयं रामोऽनुजेन लक्ष्मणेन सह विविधानि वन-पर्वतादीनि स्थानान्यन्वेच्छत्। एकदा विपुलं पङ्कमासाद्य सोदन् कुञ्जर इव संलक्षितो रामो लक्ष्मणेन। तदा लक्ष्मणः सान्त्वयंस्तं सीतान्वेषणाय प्रयतितुं प्रेरयति। स वदति—त्वया साम्प्रतं शोकाकुलतां विहाय मया सह सर्वं वनस्थानं विचेतव्यम्—

वनं सर्वं विचिनुवो यत्र सा जनकात्मजा॥
वनं सुविचितं सर्वं पद्मिन्यः फुल्लपङ्कजाः।
न हि पश्यामि वैदेहीं प्राणेभ्योऽपि गरीयसीम्॥
( वा० रा० ३।६१।१८,२९ )

जनस्थानाद् दण्डकारण्यात् क्रोशत्रयपरिमितदूरे प्रतिष्ठितं क्रौञ्चारण्यमपि रामलक्ष्मणाभ्यां विचितमासीत्—

दिदृक्षमाणौ वैदेहीं तद् वनं तौ **विचिन्वतुः** ।
**तयोरन्वेषतोरेवं** सर्वं तद् वनमोजसा ॥

( वा० रा० ३।६९।७,२४ )

अङ्गदादिवानरवीरैर्दक्षिणदिशि स्थितानि सुग्रीवनिर्दिष्टानि बहूनि वनानि विचितानि, किं चान्यान् वानरवीरांस्तथा कर्तमादिदेश । तदा तैर्वानरवीरैर्लोध्रवनमपि ( लोध्रम्=श्वेतं रक्तं वा पुष्पविशेषम् ) **विचितम्**—

**विचिन्वन्तु** वनं सर्वं गिरिदुर्गाणि सङ्गताः ॥
तत्र लोध्रवनं रम्यं सप्तपर्णवनानि च ।
**विचिन्वन्तो** हरिवराः सीतादर्शनकाङ्क्षिणः ॥

( वा० रा० ४।४९।१४,१७ )

सीतान्वेषणतत्परा वानरवीरा एकदा ऋक्षबिलं विविशुः । तद्बिलस्थानं मयनामकेनासुरेण निर्मितमासीद् हेमायाः प्रीत्यै । हेमा ततो देवलोकं गता । तदीया प्रियसखी मेरुसावर्णेर्दुहिता स्वयंप्रभा तद्रक्षणपरा बभूव । तत्र गतो हनुमान् स्वकीयपरिचयप्रसङ्गे एवं वदति—

**विचित्य** तु वनं सर्वं समुद्रं दक्षिणां दिशम् ।
वयं बुभुक्षिताः सर्वे वृक्षमूलमुपाश्रिताः ॥ ( वा० रा० ४।५२।९ )

सुग्रीवः पूर्वस्यां दिशि सीतान्वेषणाय विनतं सेनापतिं प्रेषितवान्, तत्र स्थितानि देश-नदी-वन-पर्वतादीनि **मार्गयितुं** स निर्दिदेश—

**मार्गध्वं** गिरिदुर्गेषु वनेषु च नदीषु च ॥ ( वा० रा० ४।४०।२० ) इति ।

जटायोरग्रजस्य सम्पातेः समक्षं स्वकीयं परिचयमेवम् अङ्गदः प्रस्तौति—वयं सुग्रीवनिर्देशानुसारमन्विच्छन्तः सीतां तथैव नाध्यगच्छन् यथा रात्रौ सूर्यप्रभा नाधिगम्यते । अस्माभिः समग्रं दण्डकारण्यं **विचितम्**, ततश्च ऋक्षबिलं दृष्टमित्यादि—

ते वयं दण्डकारण्यं **विचित्य** सुसमाहिताः ।
अज्ञानात्तु प्रविष्टाः स्म धरण्या विवृतं बिलम् ॥

( वा० रा० ४।५७।१६ )

लङ्कायां हनुमता सीता पर्याप्तमन्विष्टा, परं सा नैव दर्शनपथमागता । तदा निराशो भूत्वा हनुमांस्तत्रैव प्रायश्चित्तं कर्तुमियेष । परं विनाशे दोषं सम्पश्यन् स वदति — अहं पुनस्तानि स्थानानि भूयो विचेष्यामि यानि पूर्वं दृष्टानि, तत्र चेयमशोकवनिका मया नैव निरीक्षिता, अत इमामवश्यं विचेष्यामि—

अशोकवनिका चापि महतीयं महाद्रुमा ।
इमामधिगमिष्यामि न हीयं **विचिता** मया ॥

( वा० रा० ५।१३।५४ )

एकदा लङ्कायुद्धे मेघनादः स्वकीयनागपाशेन रामलक्ष्मणौ तथा बबन्ध, यथा तौ निश्चेष्टाविव संलक्ष्येते स्म। तत्र त्रिजटया सार्धं सीता स्वयमुपस्थाय विलपन्ती ब्रवीति, यदेताभ्यां रामलक्ष्मणाभ्यां जनस्थानं राक्षसगणवधेन **शोधितम्=निर्बाधं कृतम्**, हनुमता मदीया रावणभवनवसतिप्रवृत्तिरधिगता, दुरधिगम्यः समुद्रोऽपि समुत्तीर्णः, परमत्र लङ्कायामागत्य मेघनादपाशरूपगोष्पदे हतौ प्रतीयेते—

**शोधयित्वा** जनस्थानं प्रवृत्तिमुपलभ्य च।
तीर्त्वा सागरमक्षोभ्यं भ्रातरौ गोष्पदे हतौ॥

(वा० रा० ६।४८।१५)

## ४. रामादिभिर्गन्धर्वभवनादेरन्वेषणम् = सम्प्राप्तिनिरीक्षणं च

सीताहरणेनातितरां सन्तप्तो राम एकदा धनुषि शरं सन्धाय क्रोधवशमापन्नो जगत् परिवर्तयितुमियेष। स वदति—'यदि देवादयः सीताप्रवृत्तिं नैव निर्दिशन्ति, तदाहं युगान्ताग्निरिवानिवार्यो भूत्वा देव-गन्धर्व-मनुष्य-पन्नग-पर्वतसमन्वितमिदं जगन्नूनमेव परिवर्तयिष्यामि'। एवंभूतमग्रजं राममवलोक्य लक्ष्मणः प्रार्थयते—त्वया एकस्यापराधेन तस्य चानधिगमेनान्ये बहवो निरपराधिनो नैव हन्तव्याः। वस्तुतः स एवान्वेषणीयो यः सीतां जहार। तस्य सम्प्राप्त्यर्थं सरित्सागरशैलगुहा-काननादीनि विविधानि बहूनि स्थानानि अन्वेष्टव्यानि सन्ति। किं चेदं यज्जनस्थानं पुरतो दृश्यते, अत्र राक्षसैर्गिरिदुर्गद्रुमलताभिश्च समाकीर्णानि बहूनि स्थानानि, किन्नराणां बहव आवासाः, गन्धर्वाणां च बहूनि भवनानि मया सह भवताऽ**न्वेषणीयानि=सम्प्राप्य निरीक्षणीयानि**—

आवासाः किन्नराणां च गन्धर्वभवनानि च।
तानि युक्तो मया सार्धं **समन्वेषितुमर्हसि**॥

(वा० प० ३।६७।६-७)

वानरराजेन सुग्रीवेण पूर्वदिशि वर्तमाना ये पुरुषादक-किरात-आममीनाशन-अन्तर्जलचर-नरव्याघ्राणामावासास्तेषामन्वेषणाय विनतो नाम सेनापतिर्निर्दिष्ट आसीत्—

अन्तर्जलचरा घोरा नरव्याघ्रा इति स्मृताः।
एतेषामाश्रयाः सर्वे **विचेयाः** काननौकसः॥

(वा० रा० ४।४०।२८-२९)

मयस्य (४।४३।३०), रावणस्य (४।४०।१९, ६९; ४।४१।२५), वैनतेयस्य (४।४०।४०) चापि निलयानामन्वेषणाय सेनापतयः समादिष्टाः।

## ५. सीतान्वेषणप्रसङ्गे सुग्रीवेण निर्दिष्टानि अन्वेष्टव्यानि = निरीक्षणीयानि देशादीनि

| दिशा १ | सेनापतयः २ | देशाः ३ | पर्वताः ४ | नद्यः ५ |
|---|---|---|---|---|
| पूर्वा ( वा०रा० ४।४०। १।७१ ) | विनतः | ब्रह्ममालः, विदेहः, मालवः, काशी, कोशलः, मगधः, पुण्ड्रः, वङ्गः। | यामुनः, मन्दरः शिशिरः, ऋषभः, जातरूपशिल्लः, उदयपर्वतः, सौमनसश्रृङ्गम्, मेरुशिखरम्। | भागीरथी, सरयूः, कौशिकी, यमुना, सरस्वती, सिन्धुः, शोणः (सुदर्शनसरः)। |
| दक्षिणा ( वा०रा० ४।४१। १-४९ ) | अङ्गदः | दशार्णाः, अवन्ती, विदर्भः, ऋष्टिकः, माहिषकः, मत्स्यः कलिङ्गः, कौशिकः, आन्ध्रः, पुण्ड्रः, चोलः, पाण्ड्यः, केरलः। | विन्ध्याचलः, अयोमुखः, मलयः, महेन्द्रः, पुष्पितकः सूर्यवान्, वैद्युतः, कुञ्जरः, ऋषभः। | नर्मदा, गोदावरी, कृष्णवेणा, कावेरी, ताम्रपर्णी। |
| पश्चिमा ( वा०रा० ४।४२। १-५७ ) | सुषेणः ( तारापिता ) | सौराष्ट्रः, बाह्लीकः अवन्ती, अङ्गलेपा। | सोमगिरिः, पारियात्रः, वज्रः=वज्रगिरिगुहाः, चक्रवान्, मेरुः, वराहः, मेघः, अस्ताचलः। | नामरहिता बह्व्यो नद्यः। |
| उत्तरा ( वा०रा० ४।४३। १-६२ ) | शतबलिः | म्लेच्छदेशः, पुलिनः शूरसेनः, भरतः, कुरुः, मद्रः, काम्बोजः, यवनः, शकः, बाह्लीकः, पौरवः, चीनः, परमचीनः [उत्तरकुरुदेशाः, नैव गन्तव्याः] | हिमवान्, कालः, सुदर्शनः, देवसखा, कैलासः, क्रौञ्चः, मैनाकः, सोमगिरिः। | शैलोदाप्रभृतयः। |

| समुद्राः ६ | द्वीपाः ७ | आवासाः ८ | पुरुषादीनि ९ | वनानि १० |
|---|---|---|---|---|
| पूर्वसमुद्रः, लोहित-सागरः, क्षीरोद-सागरः, जलोद-सागरः, स्वादूद-सागरः। | यवद्वीपः, सुवर्ण-द्वीपः, रूप्यक-द्वीपः, जम्बूद्वीपः, सुदर्शन-द्वीपः। | रावणनिलयः, नर-व्याघ्राश्रयाः, काननौकसः, वैनतेयगृहम्। | यवनाः, किराताः, मन्देहराक्षसाः, सहस्रशिरा अनन्तः। | विविधानि वनानि नामरहितानि। |
| दक्षिण-समुद्रः। | ( नगरी ) भोगवती सर्पपुरी ( लोकः ) यमलोकः ( यमस्य राजधानी) सुग्रीवे-णायं निषिद्धः। | अगस्त्या-श्रमः, अगस्त्यभवनम्, रविसोमाग्नि-वपुषां पुण्यकर्मणां निवासः। | सर्पराजवासुकिः, रोहिता-नाम गन्धर्वाः छायाग्राहिणी अङ्गारका राक्षसी, स्वर्गजितः। | |
| पश्चिम-समुद्रः सिन्धु-सागर-सङ्गमः। | (नगरम्) जटीपुरम्, प्राग्ज्यो-तिषपुरम्। | नरकदानवावासः, मेरुसावर्णराश्रमः। | चतुर्विंशतिकोटि-नामरहितानि गन्धर्वाः। | |
| उत्तर-समुद्रः। | ( सरः ) मानस-सरः, वैखानस-सरः। | सोमाश्रमः, कुबेरभवनम्, मयस्य भवनम्, अश्वमुखी-निकेतः | बालखिल्याः, गन्धर्वाः, किन्नराः, सिद्धाः, विद्याधराः। | देवदारु-वनम्। |

सर्वमेतद् विचेतव्यं यन्मया परिकीर्तितम् ।
यदन्यदपि नोक्तं च तत्रापि क्रियतां मतिः ॥
( वा० रा० ४।४३।६० )

अन्वेषमाणास्ते सर्वे वानराः सर्वतो दिशम् ।
न सीतां ददृशुर्वीरा मैथिलीं जनकात्मजाम् ॥
( वा० रा० ४।४८।४ )

## ६. परमहंसमहामुनिभिरीश्वरस्य चरणयोरन्वेषणम् = प्राप्तिर्दर्शनं वा

पुराणेषु प्रसिद्धमिदं यद् दितेर्गर्भादादौ हिरण्यकशिपु-हिरण्याक्षनामानौ द्वौ दैत्यावजायेताम् । तावेव जन्मान्तरे रावणकुम्भकर्णौ, द्वापरयुगे च शिशुपालदन्तवक्त्रौ बभूवतुः । एतेषां संहारको विष्णुरेवाभूत् । नृसिंहरूपेण स हिरण्यकशिपुम्, वराहरूपेण हिरण्याक्षम्, रावणं कुम्भकर्णं च रामावतारेण, कृष्णावतारेण च शिशुपाल-दन्तवक्त्रौ निपातयामास । विष्णुनैवैतेषां हनने कारणमिदमासीद् यदेतौ विष्णुपार्षदौ जयविजयावास्ताम् । सनकादीनां शापेन पापिष्ठामासुरीं योनिमेतावापन्नौ । तदेवमवगन्तव्यम्--

एकदा ब्रह्मणः पुत्राश्चत्वारः सनकादयः पञ्चषड्ढायना दिग्वाससो विष्णुलोकं जग्मुः । शिशून् मत्वा तान् द्वाःस्थौ जयविजयौ प्रत्यषेधताम् । ततः कुपितास्ते तावशपन् । तदीयशापप्रभावेण तौ त्रीणि जन्मानि प्रापतुः । यदा भगवता विष्णुना ज्ञातं यत् स्वजनाभ्यामेव सन्तः सनकादयोऽनादृतास्तदा स स्वयं लक्ष्म्या सह ताभ्यां चरणाभ्यां चलन्नेवोपस्थितः, यौ चरणौ परमहंसानां महामुनीनामन्वेषणीयौ= प्राप्तव्यौ द्रष्टव्यौ वा भवतः —

एवं तदैव भगवानरविन्दनाभः स्वानां विबुध्य सदतिक्रममार्यहृद्यः ।
तस्मिन् ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन् सहश्रीः ॥
( श्रीमद्भाग० ३।१५।३७ )

## ७. महर्षिकर्दमेन प्रियाया देवहूत्याः प्रियस्यान्वेषणम् = साधनेच्छा

ब्रह्मावर्ताधीशस्य स्वायम्भुवमनोरासीद् दुहिता देवहूतिः । स एकदा सभार्यस्तां दुहितरं स्यन्दनमास्थाय महीं पर्यटत् । क्रमेण स सरस्वत्या नद्या परिप्लुतं पुण्यं शिवामृतजलं महर्षिगणसेवितं यद् बिन्दुसरस्तत्र तीर्थे वर्तमानं रमणीयं कर्दमाश्रममाजगाम । ब्रह्मपुत्रेण कर्दमेन सह तस्य विविधा वार्ता समजायत । अन्ते तेनोक्तं यद्

प्रियव्रतोत्तानपदोः स्वसेयं मम च दुहिता देवहूतिर्वयःशीलगुणादिभिर्युक्तं पतिमन्विच्छति। यदा नारदमुखादनया भवतः शीलश्रुतरूपवयोगुणानश्रृणोत् तदाप्रभृति भवन्तं पतिरूपेण सम्प्राप्तुं निश्चयवतीयं वर्तते। भवन्तं चाहं विवाहार्थं समुद्यतमश्रृणवम्। ततः श्रद्धयोपहृतामिमां मे दुहितरं पत्नीरूपेण ग्रहीतुं भवानर्हति। स्वायम्भुवमनोः प्रार्थनया प्रीणितो मुनिस्तदीयां दुहितरं स्वीचकार।

देवहूतिः शुश्रूषया, सौहृदेन, मधुरया वाचा, विश्रम्भेण च मुनिं प्रीणितवती। तां व्रतेन कर्शितां प्रियामेकदा मुनिः पप्रच्छ विभवभोगाधिगमाय। तयोक्तं यदतिरिरंसया कृतमनोभवधर्षिताया मे आत्मा यथा सिध्येत्, तथा भवनं किञ्चिदाख्याहि। एवं प्रियवचनं निशम्य महर्षिकर्दमो योगमास्थितः प्रियाया देवहूत्याः प्रियं कार्यमन्विच्छन् = सम्पादयितुं साधयितुं वाऽभिलषन् कामगं विमानमेकमाविश्चकार —

प्रियायाः प्रियमन्विच्छन् कर्दमो योगमास्थितः।
विमानं कामगं क्षत्तस्तर्ह्येवाविरचीकरत्॥

(श्रीमद्भाग० ३।२३।१२)

सर्वरत्नसमन्वितेन सर्वकालसुखावहेन दिव्योपकरणोपेतेन तेन विमानेन कर्दमो देवहूत्या सह नन्दन-चैत्ररथादिवनेषु रेमे। रममाणयोस्तयोः शतं शरदो व्यतीयुः। ततः क्रमेण दुहितरः, सिद्धगणाधीशः कपिलश्च जज्ञे, यो हि सांख्याचार्यः सुसम्मतो बभूव।

[ विचयः ]

## १. रामादिभिर्नदीनां विचयः = निरीक्षणम्

सीतान्वेषणपरायणौ रामलक्ष्मणौ गोदावरीं नदीमपि विचिक्यतुः। यतो हि सीता ततः पद्मान्यानेतुं प्रतिदिनं गच्छति स्म। रामादिष्टो लक्ष्मणो भूयस्तां विचिकाय, परं सीतां नाधिजगाम—

नदीं गोदावरीं रम्यां जगाम लघुविक्रमः।
तां लक्ष्मणस्तीर्थवतीं विचित्वा राममब्रवीत्॥

(वा० रा० ३।६४।३)

उदीचीं दिशमन्वेष्टुमुत्साहवन्तं सेनापतिं शतबलमुद्दिश्य सुग्रीवो निर्दिशति यद् भवन्तः सर्वे रामप्रियार्थं सीतासम्प्राप्त्यर्थं मया निर्दिष्टानि बहूनि दुर्गाणि नद्यश्च परिमार्गितव्याः —

इमानि बहुदुर्गाणि नद्यः शैलान्तराणि च ।
भवन्तः परिमार्गन्तु बुद्धिविक्रमसम्पदा ॥
( वा० रा० ४।४३।१० )

सुग्रीवनिर्देशमनुसरन्तो वानरवीराः सरःसरिदाकाशदुर्गदेशनगरेषु सीतां **विचिन्वन्ति स्म=निरीक्षन्ते स्म**—

ते सरांसि सरित्कक्षानाकाशं नगराणि च ।
नदोदुर्गांस्तथा देशान् **विचिन्वन्ति** समन्ततः ॥
( वा० रा० ४।४७।२ )

## २. वानरवीरादिभिर्हिमवन्महेन्द्रक्रौञ्चमैनाकप्रभृतिपर्वतानां विचयः = निरीक्षणम्

मारीचवधान्निवृत्य रामः सलक्ष्मणः सीतान्वेषणपरो बभूव । तेनाश्रमः, पर्वत-नदी-वनानि च विचितानि, परं स ततो निराश एव सञ्जातः —

**विचित्य** सर्वतः शैलं रामो लक्ष्मणमब्रवीत् ।
नेह पश्यामि सौमित्रे ! वैदेहीं पर्वते शुभाम् ॥
( वा० रा० ३।६१।२२ )

सीतान्वेषणाय दक्षिणां दिशं गन्तुकामान् अङ्गदहनुमदादीनभिलक्ष्य सुग्रीवः सम्भाषते यद् युष्माभिः सर्वैर्दक्षिणदिशि प्रतिष्ठिता अयोमद्-महेन्द्र-पुष्पितकाख्या महागिरयोऽवश्यं मार्गणीयाः । एतेषां यानि विशिष्टलक्षणान्यासंस्तान्यपि सर्वाणि सुग्रीवो निर्दिदेश ( द्र० ४।४१।१३-१४,२०,२४,२८,३१ )—

उत्तरस्यां दिशि ये महागिरयो वर्तन्ते, तत्र सीताविचयाय सुग्रीवः सेनापतिं शतबलिमादिदेश । हिमवत्-क्रौञ्च-मैनाकपर्वतान् नामग्राहं निर्दिशति । तद्यथा—

अन्वीक्ष्य वरदांश्चैव हिमवन्तं **विचिन्वथ** ( वा० रा० ४।४३।१२ )

( द्र० ४।४३।२९-३० ) मासे सम्पूर्णे सति पूर्वाया दिशः समागतः सेनापतिर्विनतः, उदीच्या दिशः प्रत्यागतः शतबलिः, प्रतीच्या दिशः प्रत्यावृत्तः सुषेणश्च सुग्रीवं प्रति पर्वतादिविचयं सीतानधिगमं च निवेदयामासुः —

**विचिताः** पर्वताः सर्वे वनानि गहनानि च । ( वा० रा० ४।४७।११ )

व्यतीते समयावधौ विचितेषु च शैलादिषु सीतामनधिगम्याङ्गदो निराशः सन् प्रायश्चित्तमाचरितुं विचारयति, तथापि स धैर्यमुत्साहं च समाश्रित्य शैलादीन् पुनर्मार्गितुमादिशति। तदीयादेशमवधारयन्तो वानरा एवमूचुः —

पुनर्मार्गामिहे शैलान् कन्दरांश्च शिलास्तथा।
काननानि च शून्यानि गिरिप्रस्रवणानि च॥

( वा० रा० ४।४९।१३ )

विन्ध्यपर्वतं समग्रमेव पुनरङ्गदहनुमदादिप्रमुखवीरा विचिक्युः सीताप्रवृत्तिपरिज्ञानाय—

सह ताराङ्गदाभ्यां तु संगम्य हनुमान् कपिः।
विचिनोति स विन्ध्यस्य गुहाश्च गहनानि च॥
तत्र वायुसुतः सर्वं विचिनोति स्म पर्वतम्॥

( वा०रा०४।५०।१,४ )

स्वयम्प्रभासंरक्षितम् ऋक्षबिलं मयासुरेण निर्मितं सत् पर्वतोपरि दुर्गं इवाभाति स्म, तत्र सीतां विचिन्वतां निरीक्षमाणानामङ्गदादिवीराणां मासावधिकः समयो व्यतीतः —

मयस्य मायाविहितं गिरिदुर्गं विचिन्वताम्।
तेषां मासो व्यतिक्रान्तो यो राज्ञा समयः कृतः॥

( वा० रा० ४।५३।२ )

## ३. सुषेणादिभिर्गिरिगुहानां विचयः = निरीक्षणम्

सीतासम्प्राप्तये पश्चिमदिगन्वेषणाय सुग्रीवस्तारायाः पितरं स्वश्वशुरं सेनापतिं सुषेणं प्रेषयामास। तत्र सौराष्ट्रप्रभृतिदेशान् निर्दिश्य सुग्रीवोऽनुरुणद्धि तं वज्रनामकगिरेर्गुहानां विचयाय—

नानाद्रुमलताकीर्णो वज्रो नाम महागिरिः।
गुहास्तत्र विचेतव्याः प्रयत्नेन प्लवङ्गमाः॥

( वा० रा० ४।४२।२६ )

सीतान्वेषणे प्रवृत्तास्त्रयः सेनापतयो मासान्ते प्रत्यागताः। पूर्वस्या दिशो विनतः, उत्तरस्याः शतबलिः पश्चिमायाश्च दिशः सुषेणो निवृत्य सुग्रीवं संदिष्टवन्तो यदस्माभिः सर्वे देशाः, सर्वाणि नगराणि, वनानि, पर्वताः, गुहाश्चापि सम्यङ् निरीक्षिताः, परं सीता नैव दृष्टा, किञ्च तस्याः प्रवृत्तिं हनुमानेव ज्ञास्यतीत्यादि—

गुहाश्च विचिताः सर्वा याश्च ते परिकीर्तिताः।
विचिताश्च महागुल्मा लता विततसन्तताः॥
( वा० रा० ४।४७।१२ )

ताराङ्गदाभ्यां सह दक्षिणां दिशमुपेत्य हनुमताऽपि विन्ध्यगिरौ वर्तमानाः सर्वा गुहा दृष्टाः, परं तत्र सीता नैव दृष्टिपथमागता ( वा० रा० ४।४८।२ )। पर्वत इव भीमरूपः कश्चित्तत्र दैत्योऽङ्गदेन तलप्रहारेण निपातितः। तदनन्तरं वानरवीरा विन्ध्यपर्वतस्थानां गह्वरस्थानानां विचये प्रवृत्ता अभूवन् ( वा० रा० ४।४८।२२-२३ ) । विविधजनपदादीनामन्वेषणेन नितान्तं परिश्रान्तोऽङ्गदः स्वसेनाया वानरवीरान् वदति यद् वयं वनानि, गिरीन्, नदीः, दुर्गान्, गहनस्थानानि, गिरिगुहाश्च विचितवन्तः, परं नैव क्वचित् सीता तदपहर्ता च दृश्यते, सुग्रीवेण निर्धारितः कालो व्यतीतः, सुग्रीवश्च वानरपतिरुग्रशासको वर्तते, तस्माद् भवद्भिः सर्वैः शोक-निद्रा-तन्द्रादिकं विहाय तथा **विचेतव्यम्=निरीक्षणीयम्**, यथा सीता दृश्येत—

विहाय तन्द्रां शोकं च निद्रां चैव समुत्थिताम्।
विचिनुध्वं तथा सीतां पश्यामो जनकात्मजाम्॥
( वा० रा० ४।४९।५ )

## ४. सीतया कुसुमानां विचयः = सङ्ग्रहो राशीकरणं वा

पञ्चवटीस्थाने शूर्पणखाया लक्ष्मणेन कर्णनासाच्छेदेन तिरस्कृतो रावणः सीतां हर्तुमैच्छत्। तत्र मारीचस्य साहाय्यं सम्प्राप्तवान्। मारीचो योजनानुसारं स्वर्णरत्नमयं मनोरमं मृगरूपमास्थाय सीतासमक्षमुपस्थाय च वने विचरन्नासीत्। स कदाचिद् रामाश्रमसमीपमायाति, पुनश्च प्रतिनिवृत्य मृगयूथैरनुगत उपतिष्ठते। अन्ये वनचरा मृगचराश्चापि तं सम्पश्यन्तो जिघ्रन्तश्चेतस्ततो विद्रवन्ति। स मायावी राक्षसो मृगवधलालसोऽपि भावस्य प्रच्छादनार्थं तान्नेव भक्षयति। तदानीं रुचिरानना सीता कुसुमावचये व्यग्रा सती वने विचरन्ती आसीत्—

कुसुमावचये व्यग्रा पादपानत्यवर्तत।
कुसुमान्यवचिन्वन्ती चचार रुचिरानना॥
( वा० रा० ३।४२।३१-३२ )

मुक्तामणिविचित्राङ्गं रत्नमयमदृष्टपूर्वं तं मृगमवलोक्य सीता परमं विस्मयमाजगाम। कुसुमविचयपरा सा हर्षमत्यन्तं लेभे, 'आर्यपुत्र! सहानुजो भूत्वेह त्वरितमागच्छ' इत्येवं क्रन्दन्ती च बभूव ( वा० रा० ३।४३।१ )। उपस्थितो लक्ष्मणस्तं मारीचमेवामन्यत, येन मृगयासक्ता बहवो राजानो मायया निहताः।

परं सीतया नानावर्णविचित्राङ्गस्य रत्नमयस्य मृगस्य तस्य जीवतो मृतस्य वा समानयनाय रामो भृशं सम्प्रार्थितः, तस्माद् रामो लक्ष्मणवचनमुपेक्ष्य तमनुससार, अन्ते च तं जघान। अत्र लोकः शिक्ष्यते—'यथा अदृष्टपूर्वे हेममये समासक्तमानसा रामो महतीं विपदमाप, तथैव सोऽपि विपद्भाग् भवति य एतादृशे वस्तुनि समासज्जते।

पुष्पावचयः फलावचयश्च सीतायै विशेषेण रोचते स्म, तस्मात् तदीयहरणानन्तरमपि रामस्तदेवाशङ्कते—

गता विचेतुं पुष्पाणि फलान्यपि च वा पुनः।
अथवा पद्मिनीं याता जलार्थं वा नदीं गता॥

(वा० रा० ४।६०।९)

विचेतुम्=सङ्ग्रहीतुम्।

## ५. सीतान्वेषणप्रसङ्गे हनुमता लङ्कायाः विचयः = विशेषनिरीक्षणम्

लङ्कामुपेत्य हनुमता लङ्काद्वीपपर्वतस्थनानातरुगणनदीप्रस्रवणादिकं दृष्टम्। तस्यात्यद्भुतरक्षोगणहर्म्यमण्डलदर्शनपूर्वकं नगरमध्यनिक्षिप्तरावणमूलबलदर्शनं रावणान्तःपुरप्रवेशनं च सञ्जातम्। रावणाधिष्ठितान्तर्नगरदर्शनं पुष्पकविमानदर्शनं रावणान्तःपुरदर्शनं च क्रमेण रात्रौ तेन कृतम्। अन्तःपुरे विविधदेवदानवादिप्रमदाजनपरिवृतरावणदर्शनपूर्वकं तदीयैश्वर्यदर्शनेन स नितान्तं मुग्धोऽपि सञ्जातः। रावणोपान्तभागेषु मुरजपणवादिवाद्यवादनाय प्रवृत्तानामन्नपाननिद्रापारवश्येन परस्परमालिङ्ग्य स्वपन्तीनां स्त्रीणां सम्यग्दर्शनम्। दिव्यसौन्दर्यसमन्विता मन्दोदरी अपि तेन दृष्टा। एतेन महता व्यवसायेन समाचरितेनापि सीता नैव दृष्टिवशवर्तिनी बभूवेति परमां चिन्तामधिजगाम हनूमान्। किञ्च तदीयमरणचिन्तया एवमपि विचारपरः स बभूव, यन्मम प्रतिगमने रामादीनां प्राणपरित्यागेन महान् विनाशः सम्पद्येतेति मम प्रतिगमनं नोचितम्। किं चाहं विषबन्धनाद्युपायैः प्राणान् परित्यक्ष्यामि, इहैव जीवन् वा प्रायश्चित्तमारचयिष्यामि, नैव जाम्बवत्-सुग्रीव-रामसमीपं गमिष्यामि, परमन्ते तेनेदं चिन्तितम्—अनिर्वेद एव श्रियः परमसुखस्य च मूलं मन्यते। अथ च स एव सर्वार्थेषु प्रवर्तकः सन् कस्यापि जन्तोर्जन्म सफलं करोति। तस्मादहमनिर्वेदकरं यत्नमास्थाय सीतान्वेषणपरो भविष्यामि, यतो हि जीवनस्य विनाशे दोषबाहुल्यं परिलक्ष्यते—

विनाशे बहवो दोषा जीवन् प्राप्नोति भद्रकम्।
तस्मात् प्राणान् धरिष्यामि ध्रुवो जीवति सङ्गमः॥

(वा० रा० ५।१३।४९)

एवं निश्चयमधिगम्य तेन प्रतिज्ञातम्—यावत् सीता नाधिगम्यते, तावदहं लङ्कायां **विचये=विशेषनिरीक्षणे** भूयो भूयः प्रयत्नपरो भविष्यामि—

यावत् सीतां न पश्यामि रामपत्नीं यशस्विनीम् ।
तावदेतां पुरीं लङ्कां **विचिनोमि** पुनः पुनः ॥
( वा० रा० ५।१३।५१ )

यानि स्थानानि मया पूर्वमवलोकितानि पुनर्विचेष्यामि । येयमशोकवनिका नावलोकिता सा विशेषेण विचेतव्या भविष्यतीत्यवधार्य स धैर्यमावहन् कियता कालेनाशोकवनिकायां शिंशपावृक्षमूलमुपगतां सीतां सम्पश्यन् हर्षमवाप ।

**६. अधनेन पुरुषेण शक्यस्य वस्तुनो विचयः = साधनमाचरणमवलम्बनं वा**

एकदा लङ्कायुद्धे हनुमतः समक्षमिन्द्रजिन्मेघनादस्तीक्ष्णेनासिना मायामयीं सीतां निचकर्त, इदमाह च स हनूमन्तम्—त्वं सुग्रीवो रामश्च यन्निमित्तमिहागताः, सा सीता मया विशस्ता । अनन्तरमहं रामं लक्ष्मणं त्वां सुग्रीवमनार्यं विभीषणं चापि वधिष्यामि । अतः सर्वेषां युष्माकं परिश्रमो निष्फल एव सञ्जातः । हनुमांस्तथा वृत्तं वीक्ष्य रामसमीपमागत्य सीतावधं रामाय श्रावयामास । तद्वचनं श्रुत्वा शोकमूर्च्छितो रामश्छिन्नमूलद्रुम इव भूमौ निपपात । लक्ष्मणो बाहुभ्यां सम्परिष्वज्य तमेवमुवाच—हे आर्य ! धर्मः साम्प्रतमनर्थेभ्यस्त्वां त्रातुं न शक्नोतीति स निरर्थक एव । यदि स निरर्थको बलहीनो वा न भवेत्तर्हि धर्मसंयुक्तो भवान् नैव व्यसनमाप्नुयात्, अधर्मपरायणो रावणश्च नरकं व्रजेत् । एतस्मान्न केवल धर्मः किं चाधर्मोऽपि निरथक एवाभाति, अन्यथा अधर्मशीलेषु रावणादिषु नैवार्था विवर्धेरन्, धर्मशीलाश्च भवादृशा नैव क्लिश्येरन् ।

लक्ष्मणेन धर्मस्य मूलमर्थ एव संसाधितः । तदनुसारेण यस्य पार्श्वेऽर्थः सञ्चितस्तस्यैव सर्वाः क्रियाः प्रवर्तन्ते, पर्वतेभ्य आपगा इव । यो ह्यर्थेन विमुक्तस्तस्य सर्वाः क्रिया विच्छिद्यन्ते यथा ग्रीष्मर्तौ कुसरितो विनश्यन्ति । यस्य पार्श्वेऽर्था भवन्ति, तस्यैव बहवो जना मित्राणि दृश्यन्ते । स एव पण्डितो बुद्धिमान् महाबाहुर्गुणाधिकश्च मन्यते । परं भवता राज्यमुत्सृजता अर्थाः सम्परित्यक्ताः । अर्थवत एव जनस्य धर्मः, अर्थः, कामश्च सकलो भवति । निर्धनः पुरुषो यदि कथञ्चिदर्थप्राप्तये शक्यस्य साधनस्य **विचयम्=आचरणमवलम्बनं** वा कुरुते, तर्हि सोऽर्थप्राप्तौ न फलवान् भवति—

यस्यार्था धर्मकामार्थास्तस्य सर्वं प्रदक्षिणम् ।
अधनेनार्थकामेन नार्थः शक्यं विचिन्वता ॥

हर्षः कामश्च दर्पश्च धर्मः क्रोधः शमो दमः ।
अर्थादेतानि सर्वाणि प्रवर्तन्ते नराधिप ! ॥

( वा० रा० ६।८३।३८-३९ )

## ७. राक्षसोभिर्मृतस्य पत्यू रावणस्य विचयः = दर्शनेच्छा प्रापणेच्छा च

रामरावणयोर्युद्धं रामरावणयुद्धमिवाभूत्, अर्थात् तस्य नैव किञ्चिदुपमानं दृश्यते। लङ्कायुद्धस्यान्तिमे दिवसे इन्द्रसारथिना मातलिना श्रीरामः संस्मारितः — 'अद्यैव रावणविनाशकालो वर्तते' इति। ततः श्रीराम इन्द्रार्थं ब्रह्मणा निर्मितं भास्करवर्चसं कालाग्निमिव शरं सन्धाय रावणस्य प्राणाञ्जहार। तत्र शोकवेग-परीतात्मा विभीषणो विलपन् वदति—'प्राणपरित्यागेनाद्य भूमावादित्यः पतितः, चन्द्रो महति तमसि मग्नः, चित्रभानुश्च प्रशान्तार्चिर्बभूव। किञ्च सुनीतीनां सेतुर्धर्मस्य विग्रहश्च गत इत्याभाति' इत्यादि। तत्र शोकार्ता रावणपत्न्यो बहुधा पर्यदेवयन्—'देवैरवध्यस्त्वमासोः, परमद्य हितवादिनां सुहृदां वचनं तिरस्कृत्य वर्तमानो रामबाणेन निहतः सन् भूमौ शेषे। यदि त्वया रामाय मैथिली निर्यातिता स्यात्, तर्हि मूलहरं घोरमिदं व्यसनं न सम्प्राप्येत। किञ्च सीताप्रत्यर्पणकार्येण भ्राता विभीषणः शत्रुतां नागच्छेत्, रामो मित्रकुलं भवेत्, वयं सर्वा अविधवाः स्याम, शत्रवश्च सकामा न स्युः। नृशंसेन त्वया स्वभवने बलात् सीतां संरुन्धता राक्षसाः, वयं सर्वाः पत्न्यः, आत्मा चैतत्त्रयमेव युगपन्निपातितम्। अत्र दैवगतिरेव बलीयसीति वक्तुं शक्यते' इत्यादि। रामेण विभीषणः सम्बाधितस्तस्य दाहसंस्कारनिर्वर्तनाय, यतो हि वैरं मरणान्तं मन्यते। अस्य मरणेन मम प्रयोजनं सफलं बभूवेति —

मरणान्तानि वैराणि निर्वृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥

( वा० रा० ६।१११।२५ )

राक्षस्यो रावणपत्न्यः सुबहुशो वार्यमाणा अपि सङ्ग्रामभूमिमवाप्य पतिं विचिन्वन्त्यः=तदीयं दर्शनमिच्छन्त्य इतस्ततो भूमौ निपतिता बभूवुः —

उत्तरेण विनिष्क्रम्य द्वारेण सह राक्षसैः ।
प्रविश्यायोधनं घोरं विचिन्वन्त्यो हतं पतिम् ॥

( वा० रा० ६।११२।३ )

## ८. पुरञ्जन्या पत्युर्विचयः = प्रापणेच्छा

वेनभुजनिर्मन्थनात् समुद्भूतः पृथुर्महाराज आसीद् विष्णुकलारूपः, स च पराक्रमी विद्वान् प्रजाकल्याणपरश्चासीत्। स ग्रस्तबीजां पृथिवीं हन्तुमुद्यतो बभूव, परं पृथिवीवचनानुसारेण तां विविधं दुदोह। अन्तिमेऽश्वमेधयज्ञे इन्द्रस्तदीयं यज्ञियमश्वं जहार। ततोऽत्रिणा इन्द्रवधाय सम्प्रेरितः पृथुपुत्र इन्द्रं हन्तुमकामयत। तद्भयाद् इन्द्रोऽश्वं परित्यज्य पलायितः, तदा ऋषिभिः पृथुपुत्रस्य नामधेयं कृतं **'विजिताश्वः'** इति। स च विजिताश्वो राजा बभूव पृथौ स्वधामगते सति। तस्य पावकः, पवमानः, शुचिः, हविर्धानश्चेति चत्वारः पुत्रा आसन्। हविर्धानस्य बर्हिषद्-गय-शुक्ल-कृष्ण-सत्य-जितव्रतनामानः षट् पुत्राः सञ्जाताः। बर्हिषदो नामान्तरं वर्तते प्राचीनबर्हिः, वेदिषद् वेति। तस्य प्राचीनबर्हिषो दश पुत्रा अभूवन्, ये प्रचेतसो बार्हिषदाश्चोच्यन्ते।

प्राचीनबर्हिर्नाम राजा पश्चात् कर्मस्वासक्तमानसो जातस्तं नारदः प्रबोधयामास। तत्र प्रसङ्गे कल्पितं पुरञ्जनचरितं श्रावयामास। तदनुसारेण पुरञ्जनो नाम राजा अविज्ञातनामानं स्वसखायं विहाय प्रियवस्तुनोऽन्वेषणाय एकदा हिमवतो दक्षिणेषु सानुषूपस्थाय श्रिया दीप्तां भोगवतीमिव नगरीमेकां ददर्श। तत्र कामरूपिणी प्रमदोत्तमा काचिद् बाला पतिमन्वेषमाणा बभूव, तां वीक्ष्य पुरञ्जनः पृच्छति—'अनुकूलं प्रियं पतिं विचिन्वन्ती=प्राप्तुमिच्छन्ती किं त्वं सरस्वती, उत लक्ष्मीः, आहोस्विदसि पार्वती, या मुनिवद् वने रहसि विहरसि -

> त्वं ह्रीर्भवान्यस्यथ वाग् रमा पतिं विचिन्वती किं मुनिवद् रहो वने।
> त्वदङ्घ्रिकामाप्तसमस्तकामं क्व पद्मकोशः पतितः कराग्रात्॥
> (श्रीमद्भाग० ४।२५।२८)

अग्रे पुरञ्जनस्तया सह रममाणः कालधर्ममुपेयाय। अन्ते नारदेनोक्तम्—मयेह विषयजातं पारोक्ष्येण प्रदर्शितम्, यतो हि भगवान् विश्वभावनः परोक्षप्रियो भवति—

> बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम्।
> यत् परोक्षप्रियो देवो भगवान् विश्वभावनः॥
> (श्रीमद्भाग० ४।२८।६५)

[ मार्गणम् ]

## १. अङ्गदादिभिर्भोगवतीपुर्या मार्गणम् = निरीक्षणम्

अङ्गदस्य सेनापतित्वे जाम्बवद्-हनुमदादयो वानरवीराः सुग्रीवेण दक्षिणस्यां दिशि सम्प्रेषिताः सीतान्वेषणाय। तदीयं मार्गं निर्दिशन् सुग्रीवो वदति—'विन्ध्याचलः, नर्मदा, गोदावरी, कृष्णवेणा, दशार्णदेशः, अवन्ती, विदर्भः, आन्ध्र-पुण्ड्र-चोल-पाण्ड्य-केरलदेशाः, अयोमुखपर्वतः, कावेरी, मलयगिरिः, ताम्रपर्णी, महेन्द्रपर्वतः, दक्षिणसमुद्रः, पुष्पितकगिरिः, सूर्यवान् पर्वतः, वैद्युतः पर्वतः, कुञ्जरपर्वतः, अगस्त्यभवनम् इत्याख्येषु स्थानेषु सीतासम्मार्गणानन्तरं सर्पाणामालयभूता भोगवती नाम पुरी द्रष्टव्या, सा च तीक्ष्णदंष्ट्रैर्महाविषैर्घोरैः पन्नगैः सर्वतः परिरक्षिता प्रतिभाति। तत्र विशाला रथ्याः सन्ति, महाघोरः सर्पराजो वासुकिर्यस्यां वसति। एवं सा दुर्धर्षैव वेदितव्या। सा च ऋषभनामकपर्वतात् पूर्वमवस्थिता चकास्ति, सा त्वया नैव परित्याज्या, किन्च सर्वतोभावेन मार्गितव्या=निरीक्षणीया—

तत्र भोगवती नाम सर्पाणामालयः पुरी।<br>
सर्पराजो महाघोरो यस्यां वसति वासुकिः॥<br>
निर्याय मार्गितव्या च सा च भोगवती पुरी॥

( वा० रा० ४।४१।३६-३८ )

ततो दक्षिणस्यां दिशि वर्तमानानि स्थानानि—ऋषभपर्वतः, रोहितगन्धर्ववनम्, रविसोमाग्निवपुषां पुण्यकर्मणां निवासः, स्वर्गजितावासः, यमस्य राजधानी पितृलोकश्चेति। सुग्रीवेण पितृलोकस्यान्वेषणं निषिद्धमासीत्, यतो हि स नितरां तमसावृत आस्ते।

## २. रामलक्ष्मणाभ्यां सुग्रीवस्य मार्गणम् = प्राप्त्यर्थमुद्यमः

गृध्रराजस्य जटायोर्दाहसंस्कार-जलदानादिकार्यनिर्वर्तनानन्तरं रामलक्ष्मणौ ततः पश्चिमायां दिशि सीतामवेक्षमाणौ दक्षिणां दिशं जग्मतुः। तत्र जनस्थानात् त्रिक्रोशदूरस्थितं क्रौञ्चवनमन्विष्य मतङ्गाश्रममुपेयतुः। तत्र पर्वतगुहासमीपं वसन्ती अयोमुखी नाम राक्षसी लक्ष्मणमुपगुह्य रमणार्थं तं प्रार्थयते। ततो लक्ष्मणेन निकृत्तकर्णनासास्तना घोरदर्शना सा महद् वनं विवेश। ततो भीमदर्शनः कबन्धनामा दनुजो महाबलौ रामलक्ष्मणौ जग्राह। वित्रशौ तौ तदीयौ भुजावसिना चिच्छिदतुः।

तदा स स्वीयकबन्धरूपप्राप्तिप्रसङ्गं प्रकाशयति। तद्वचनानुसारं रामोऽवटे ( गर्ते ) क्षिप्त्वा तं ददाह । तत्प्रभावेण सः सर्वप्रत्यङ्गभूषणो विरजाम्बरो भास्वरदिव्य-पुरुषो बभूव । तदा स वदति—'ऋक्षरजसः पुत्रः सुग्रीवः साम्प्रतं बालिभयाद् ऋष्यमूकपर्वते चतुर्भिर्वानरैः सह वसति । स वानरेन्द्रो महावीर्यः सत्यसन्धो दक्षश्च वर्तते। स सीतायाः परिमार्गणे सहायो भविष्यति, एतेन त्वं तमात्मनो वयस्यं कुरु। इतः पश्चिमां दिशमवाप्य पम्पां पुष्करिणीं पश्यन् मतङ्गाश्रमपरिचर्यापरां श्रमणां शबरीं द्रक्ष्यसि। पम्पासमीप एव ऋष्यमूकगिरिर्विराजते। तत्र स्थिताया गुहायाः प्राग्द्वारे बहुमूलफलः शीतोदक एको महान् ह्रदो वर्तते। तस्यां गुहायां धर्मात्मा स सुग्रीवो वसति ।

ततः कबन्धे निर्याते रामः शबर्याश्रममाजगाम । शबर्यामात्मानं हुताशने हुत्वा स्वर्गं गतायां रामो लक्ष्मणमाह—साम्प्रतमहं सुग्रीवं झटिति द्रष्टुं कामये, यतो हि सीतापरिमार्गणरूपं मे कार्यं तदधीनमेवास्ति—

तदधीनं हि मे कार्यं सीतायाः परिमार्गणम् । (वा० रा० ३।७५।९)

पम्पापुष्करिणीदर्शनानन्तरं रामो ऋष्यमूकपर्वतं प्राप। तौ दृष्ट्वा सुग्रीवो बिभेति यद् बालिप्रेषितौ छद्मवेषधारिणाविमौ सम्भाव्येते इति। हनुमांस्तत्र सुग्रीव-माह यदेवं नैवाशङ्कनीयमिति। हनुमान् रामलक्ष्मणसमीपं गत्वा सुग्रीवसन्देश-माचख्यौ। अन्ते लक्ष्मणेनोक्तम्—आवाभ्यां स एव वानरेश्वरः सुग्रीवो मार्ग्यते= प्राप्तुमिष्यते, यस्य सन्देशस्त्वया आख्यातः —

तमेव चावां मार्गावः सुग्रीवं प्लवगेश्वरम् ॥
( वा० रा० ४।३।२७ )

तदनन्तरं हनुमत्साहाय्येन रामः सुग्रीवेण सह सख्यं विधाय परस्परं साहाय्यार्थं प्रतिज्ञातवन्तौ ।

## ३. हनुमता रावणान्तःपुरस्य मार्गणम् = दर्शनं निरीक्षणं च

सीतान्वेषणाय चतसृषु दिक्षु गच्छतां सर्वेषां वानरवीराणां मध्ये हनुमन्तमभि-लक्ष्य सुग्रीवोऽवदत्—'त्वयि बलं बुद्धिः पराक्रमो देशकालानुवृत्तिर्नयश्च वर्तते, पितुर्मारुतस्य सदृशो गतिवेगस्तेजो लाघवं च त्वयि दृश्यते। सर्वे लोकास्ते विदिताः सन्ति, तस्मादहं सीतान्वेषणरूपं कार्यं प्रति त्वयि निश्चितार्थोऽस्मि' इति। संहृष्टो रामोऽपि अभिज्ञानरूपेण स्वनामाङ्कोपशोभितमङ्गुलीयकं तस्मै ददौ। उक्तवांश्च—

हे वीर ! त्वदीयः सत्त्वयुक्तो विक्रमः, व्यवसायः, सुग्रीवस्य सन्देशश्च मे सिद्धिमेव दिशति । ततस्ताराङ्गद-जाम्ववद्-गज-गवाक्ष-शरभ-गन्धमादन-द्विविद-मैन्दादिभिः समं स हनुमान् दक्षिणां दिशं प्रतस्थौ । सम्पातिवचनानुसारं स महेन्द्रपर्वतात् समुद्र-मुल्लङ्घ्य लङ्कां प्रविवेश । तत्र हनुमता रावणान्तःपुरदर्शनम्, पुष्पकाधिरोहणम्, पृथक् शयने शयानां दिव्यसौन्दर्ययुक्तां मन्दोदरीं वीक्ष्य सीतासम्भावनया हर्षाभि-व्यक्तिश्च कृता। राक्षसानां सुखावहं राक्षसकन्यानां प्रियं जीमूतसंकाशं प्रदीप्तोज्ज्वल-कुण्डलं भास्वरे शयने प्रसुप्तं राक्षसाधिपं रावणमपश्यत् सः । ततो नानामृगमांससुरा-धिवासितपानभूमिप्रवेशपूर्वकं तत्रस्थनारीजनशयनकदम्बदर्शनं कृतवान् । तत्र राक्षसा-लये रावणप्रमदानां दर्शनेन धर्मसाध्वसशङ्कितः स महतीं धर्मलोपशङ्कां जगाम । परं मया जानकी मार्गितव्याऽऽसीत् । काचिदपि स्त्री स्त्रीगणेष्वेवान्वेष्टव्या भवितुमर्हति, न तु मृगीषु । पुनश्च सर्वेन्द्रियप्रवर्तकं मे मनः शुद्धमेवावर्ततेति समाधानमास्थितं तेन—

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥
नान्यत्र हि मया शक्या वैदेही परिमार्गितुम् ।
स्त्रियो हि स्त्रीषु दृश्यन्ते सदा सम्परिमार्गणे ॥
यस्य सत्त्वस्य या योनिस्तस्यां तत् परिमार्ग्यते ।
न शक्या प्रमदा नष्टा मृगीषु परिमार्गितुम् ॥
तदिदं मार्गितं तावच्छुद्धेन मनसा मया ।
रावणान्तःपुरं सर्वं दृश्यते न च जानकी ॥

( वा० रा० ५।११।४३-४६ ) ।

### ४. कुम्भकर्णेन वानराणां मार्गणम् = प्राप्त्यर्थमुद्यमः

लङ्कायुद्धे रामबाणव्यथितेन रावणेन कुम्भकर्णो महता प्रयत्नेन प्रबोधितः । तदीयं शरीरं स्वयं रावणः काञ्चनाङ्गदकेयूरनिष्काभरणहारकवचादिभिः सज्जयामास । एवं भुजङ्गेन नद्धो मन्दर इव स बृहत्कर्णः कुम्भकर्णो दानवदेवशत्रुः शूल-मादाय भ्रातरं सम्परिष्वज्य च युद्धाय विनिर्ययौ । युद्धभूमावुपस्थिते सति तस्मिन् सशैलसागरवना वसुधा समकम्पत । वानरवाहिनी पर्वतसन्निभं तमवलोक्य वायु-नुन्ना घना इवेतस्ततो विद्रुता । सा राजपुत्रस्याङ्गदस्य समाश्वासनेन न्यवर्तत । निवृत्य नैष्ठिकीं बुद्धिमास्थाय च मरणे कृतनिश्चयास्ते वीराः कुम्भकर्णमभ्यद्रवन् ।

यथा भृशसङ्क्रुद्धो गरुडः पन्नगान् भक्षयति, तथा स कुम्भकर्णो बाहुभ्यां परिक्षिप्य वानरवीरान् भक्षयन्नासीत् । परमुत्साहवन्तो वानरा महाद्रुमान् समुत्पाट्य कुम्भकर्णोपरि प्रचिक्षिपुः । अम्बरस्थेन हनुमता कुम्भकर्णस्य शिरसि पातिता बह्वो द्रुमाः, शिलाः, शैलशृङ्गाणि च कुम्भकर्णः शूलेन बिभेद । महीधराग्रेण व्यथितो रुधिरावसिक्तश्च कुम्भकर्णः शूलेन मारुतेर्बाह्वन्तरं तथैव बिभेद, यथा गुहः स्वामिकार्त्तिकेय उग्रशक्त्या क्रौञ्चमभिदत् । अङ्गदतलताडितः कुम्भकर्ण एकदा मोहमाप । सुग्रीवप्रक्षिप्तं शैलशृङ्गं कुम्भकर्णस्य बाह्वन्तरं प्राप्य विदीर्णं जातम् । कुम्भकर्णस्य कालायसं शूलं हनुमान् बभञ्ज । लङ्कायां नीयमानः सुग्रीवः कुम्भकर्णस्य कर्णौ नासिकां च विददार । अस्त्रहीनः कुम्भकर्णः शृङ्गादिभी रामेण सह युयोध । रामो राक्षसैः परिवारितं किञ्च वानरवीरान् **मार्गमाणम्**=तत्प्राप्त्यर्थं प्रयत्नवन्तं कुम्भकर्णमितस्ततो धावन्तं ददर्श —

> सर्वान् समभिधावन्तं यथा रुष्टं दिशागजम् ।
> **मार्गमाणं** हरीन् क्रुद्धं राक्षसैः परिवारितम् ।।
> ( वा० रा० ६।६७।१३८ )

अन्ते राम ऐन्द्रं निशितं शरं सन्धाय तस्य शिरस्तथैव चकर्त, यथा पुरा पुरन्दरो वृत्रस्य शिरश्चकर्त ।

### ५. हनुमद्-विभीषणाभ्यां जाम्बवदादीनां मार्गणम् = दर्शनार्थमुद्यमः

एकदा लङ्कायुद्धे मेघनादस्य बाणैर्न केवलं वानरवाहिनी, अपि च रामलक्ष्मणावपि मूर्च्छितौ बभूवतुः । मूर्च्छाप्राप्तेः पूर्वं रामो लक्ष्मणमाह—यदेष स्वयंभुवा ब्रह्मणा दत्तवरः सन् सर्वान् व्यथयति । स्वयम्भूर्भगवानचिन्त्यस्तदस्त्रावपातं त्वं मया सहाव्यग्रमनाः सहस्व । अनन्तरं मेघनादोऽस्त्रजाले रामलक्ष्मणौ वानरसेनापतींश्च शादयित्वा हर्षाल्लङ्कापुरीं प्रविवेश । तदानीं केवलं बिभीषणो हनुमांश्चेतादृशो वीरावास्तां यौ मूर्च्छाविगतौ सन्तौ उल्काहस्तौ भूत्वा सुग्रीवाङ्गदादिकान् मूर्च्छितान् भूमौ विसंज्ञानिव पतितान् विलोकितवन्तौ । सर्वमेव सागरोघनिभं भीमं वानरबलं मेघनादबाणार्दितमासीत् तदानीम् । हनूमान् विभीषणश्च स्वभावजरया युक्तं प्रजापतिसुतं जाम्बवन्तं **मार्गते**=**दर्शनार्थं प्रयतते**—

सागरौघनिभं भीमं दृष्ट्वा बाणार्दितं बलम् ।
मार्गते जाम्बवन्तं च हनूमान् सविभीषणः ॥
( वा० रा० ६।७४।१३ )

विभीषणवचनमभिज्ञाय जाम्बवान् सुग्रीवाङ्गदराघवादिकानतिक्रम्य हनूमतः प्राणधारणविषये पृच्छति । 'यदि मारुतिर्जीवति, अस्माकमपि तर्हि जीविताशा भवेत् । यदि हनूमतः प्राणा उज्झितास्तर्हि वयं सर्वे मृता एव भवामः' इत्येवं वदन् स जाम्बवान् हनूमन्तं प्रेरयति ओषधिपर्वतान्मृतसञ्जीवनीं विशल्यकरणीं सुवर्णकरणीं सन्धानीं च महौषधीमानेतुम् । ओषधिपर्वतोऽयं हिमालयपर्वतस्य कैलास-ऋषभनामकयोः शृङ्गयोर्मध्यवर्ती आसीत् । हनुमान् ओषधिपर्वतं तमानीतवान् । ओषधिप्रयोगानन्तरं पुनश्च तं यथास्थानमेव हिमालये स्थापयामास ।

## ६. ऋषिभिरीश्वरपदस्य मार्गणम् = दर्शनं प्राप्तिश्च

इदं नाविदितं विदुषां यद् विष्णोः पदं बहुधा स्तूयते आर्तजिज्ञासुभिरर्थार्थिभिर्ज्ञानिजनैश्च भक्तैः । किञ्च तस्मात् पदात् सुरसरितो भागीरथ्या गङ्गाया अपि समुद्भवः सञ्जातः । पुराणेषु श्रूयते — दक्षिणपदाद् 'वरणा', वामपदाच्च योगशायिनो भगवतः 'असि'-नदी प्रादुर्भूता । बालरूपो योगशायी भगवान् विष्णुः स्वयमपि स्वकीयं चरणं मुखेऽर्पयति इति स स्तूयते—

करारविन्देन मुखारविन्दे पदारविन्दं विनिवेशयन्तम् ।
वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं शिरसा प्रपद्ये ॥

श्रीमद्भागवतमहापुराणे विदुरमैत्रेयसंवादे देवैः कृता ईश्वरस्तुतिरेका दृश्यते । तत्र देवाः प्रार्थितवन्तः—हे देव, वयं ते तत् पदारविन्दं नमामः, यन्मूलमाश्रित्य यतयः संसारदुःखं बहिरुत्क्षिपन्ति । त्वदीयाङ्घ्रिच्छायां तां वयमाश्रयेम, यामाश्रित्य तापत्रयेणोपहता जीवाः शर्म लभन्ते । तत्तेऽङ्घ्रिसरोजपीठं वयं व्रजेम यद् धीरा ज्ञानेन, वैराग्यबलेन, श्रद्धया भक्त्या च हृदयेऽवधारयन्ति, यत् पदाम्बुजं स्मृतं सत् स्वपुंसामभयं प्रयच्छति, तत्ते पदाम्बुजं वयं सर्वे शरणं व्रजेम । यत् ते पदम् ऋषिजना एकान्तं रमणीयं च स्थलमुपेत्य विविधैश्छन्दोभिः स्तुन्वन्तो मार्गन्ति=पश्यन्ति, प्राप्नुवन्ति, प्राप्तुं यतन्ते वा, तत् पदं वयं सर्वे समागताः स्मः —

मार्गन्ति यत्ते मुखपद्मनीडैश्छन्दःसुपर्णैर्ऋषयो विविक्ते।
यस्याघमर्षोदसरिद्वरायाः पदं पदं तीर्थपदः प्रपन्नाः॥
(श्रीमद्भाग० ३।५।४०)

[ परिमार्गणम् ]

१. विनतादिसेनापतिभी रावणस्य परिमार्गणम् = दर्शनार्थं प्राप्त्यर्थं वा उद्यमः

नेदं जातु विस्मर्तव्यं यत् सीताया दर्शनार्थं सम्प्राप्त्यर्थं वा बहूनां देशानां नगराणां वनानां पर्वतानाम् आश्रमादीनां चान्वेषणमनुष्ठितमासीत्, तत्र रावणस्य रावणनिलयस्य चाप्यन्वेषणाय सेनापतयः सुग्रीवेण समादिष्टाः। सर्वप्रथमं पूर्वं-दिशि प्रस्थानायोद्यतं सेनापतिं विनतं सुग्रीव आह रावणनिलयस्य मार्गणाय—

तत्र सीतां च वैदेहीं निलयं रावणस्य च।
मार्गध्वं गिरिदुर्गेषु वनेषु च नदीषु च॥
रावणः सह वैदेह्या मार्गितव्यस्ततस्ततः॥
(वा० रा० ४।४०।१९-२०,३४,६२,६५,६९)

एवं पश्चिमायां दिशि तारापितरं सुषेणं प्रेषयितुकामः सुग्रीवश्चतुर्वारं वचनमिदं व्याजहार, यत् त्वया पश्चिमसमुद्रतटे, वज्रगिरे रम्येषु सानुषु तदीयासु विशालासु गुहासु च, नरकनामकदानवस्य यत्रावासस्तस्मिन् प्राग्ज्योतिषपुरे, सुमेरुपर्वतस्थदुर्गेषु, सरस्सु, सरित्सु चापि वैदेही रावणश्च मार्गितव्यः (४।४२।१२,२९,३२,४७)।

उदीच्या दिशः सेनापतिं शतबलिमपि समुद्दिश्य सुग्रीवो जनपद-नद-नदी-पर्वत-काननादीनि परिगणयन् मध्ये वैदेह्या रावणस्य च मार्गणं स्मारयति। हिमवतो देवदारुवनादिषु, 'देवसखा'-नामकपर्वतस्य काञ्चनखण्डेषु निर्दरेषु गुहासु च, कैलासस्थकुबेरभवने, तत्र वर्तमानेषु चन्द्रनिकाशेषु पर्वतेषु गुहासु च वैदेह्या सह रावणोऽवश्यं मार्गितव्यः (द्र०, ४।४३।१३,१८,२४)।

ऋक्षबिलं प्रविष्टो हनुमान् हेमायाः प्रियसखीं स्वयम्प्रभां प्रत्यात्मनः परिचयं प्रस्तुवन्निदमेवाह यद् रामस्य सखा सुग्रीवोऽस्मान् दक्षिणदिशि प्रस्थितान् सर्वान् वानरवीरानादिदेश रावणं वैदेहीं च मार्गितुम्—

रावणं सहिताः सर्वे राक्षसं कामरूपिणम्।
सीतया सह वैदेह्या मार्गध्वमिति चोदिताः॥
(वा० रा० ४।५२।८)

[ प्रतिमार्गणम् ]

## १. कालगौतममुनिना भोजनस्य प्रतिमार्गणम् = निर्धारणम्

श्रीरामस्य राज्यकाले एकदा गृध्रोलूकयोः कलहः संवृत्तः। वस्तुतः स कलहः पापविनिश्चयेन गृध्रेण उलूकेन सह प्रारब्ध आसीत्। उलूकेन पूर्वं यद् भवनम् अधिकृतम्, तन्ममास्तीति गृध्रोऽवदत्। निर्णयार्थं गृध्रोलूकौ तौ रामसमीपमाजग्मतुः। तौ रामं स्तुवन्तावूचतुः—'त्वं सर्वदेवमयोऽपरो नारायण इव विराजसे, त्वं सर्वास्त्रविधिपारगोऽसि, त्वमिन्द्र-सोम-अनल-भास्करसन्निभाऽसि। त्वदीयं शासनं लोके नित्यं धर्मपूर्वकमेव प्रवर्तते। **यथार्थमन्विष्य=विज्ञाय** समरूपेण व्यवहरसि—

या च ते सौम्यता राजन्! सम्यक् प्रणिहिताविमौ।
समं चरसि **चान्विष्य** तेन सोमांशको भवान्॥
(वा० रा० ७।५९-३।१५ प्रक्षिप्तः)

तस्मादावां निर्णयार्थं तव समीपं 'समागतौ' इति। रामः सिद्धार्थ-अशोक-सुमन्त्रादीन् सचिववरान् समाहूतवान्। तेषां समक्षं पृष्टो गृध्रोऽवदत्—यदेयं वसुमती मनुष्यैरावृता, ततः प्रभृति उद्दिष्टं गृहं मे वर्तते। उलूकवचनानुसारेण तद्भवनं तदाधिकृतं बभूव, यदा वसुमती पादपैरुपशोभिता आसीत्। सचिवैरुलूक एव यथार्थ-वक्ता समुद्घोषितः। यतो हि श्रोत्रमलोत्पन्नौ मधुकैटभौ यदा विष्णुना निहतौ, तदा वसुमती तयोर्मेदसाप्लाविता बभूव। भूयः सा मेदिनी हरिणा विशोधिता। तस्यां शुद्धायां मेदिन्यां सर्वप्रथमं वृक्षाः समारोपिता इति।

एतेन राम उलूकस्य गृहमुद्घुष्य परालयस्य हर्तारं गृध्रं दण्डयितुमिच्छति। तदानीमाकाशवाणी निर्दिदेश गृध्रे दण्डस्य वारणाय, यतो हि अयं महात्मा पूर्वं ब्रह्मदत्तनामा सत्यव्रतः शूरो बभूव, तस्य गृहे कालगौतमनामा मुनिः शतदिवसात्मकभोजनस्य **प्रतिमार्गणम्=निर्धारणम्** अकरोत्—

गृहं स्वस्यागतो विप्रो भोजनं **प्रत्यमार्गत**।
साग्रं वर्षशतं चैव भोक्तव्यं नृपसत्तम॥
(वा० रा० ७।५९-३।५७ प्रक्षिप्तः)

परमेकस्मिन् दिवसेऽज्ञानाद् भोजने मांसमागतम्, तस्मान्मुनिना गृध्रभावाय शापः प्रदत्तः। प्रार्थनया प्रसादितो मुनिरभाषत -इक्ष्वाकूणां राज्ञामन्यतमस्य रामस्य स्पर्शेन त्वं गृध्रत्वं हास्यसि दिव्यरूपं चाधिगमिष्यसीति। आकाशवाणीमाकर्ण्य रामः स्वस्पर्शेन गृध्रस्य शापान्तमकरोत्।

[ मृगणम् ]

### १. सुग्रीवेण राज्यस्य मृगणम् = अधिकर्तुं प्रतीक्षा

सीताहरणेन दुःखितो रामः सलक्ष्मणः ऋष्यमूकपर्वतमुपेत्य हनुमतः साहाय्येन सुग्रीवेण सह मैत्रीं चकार । तत्र सुग्रीवः स्वदुःखकारणमग्रजं बालिनं वदति । तदीया कथा एवमवगन्तव्या—'एकदा रात्रौ बालिशत्रुर्मायावी-नाम राक्षसः किष्किन्धा-द्वारमुपेत्य बालिनं युद्धार्थमाह्वयामास । तदा बाली सुग्रीवेणानुगतः संस्ततो निर्गतः, तथाविधं बालिनं वीक्ष्य संत्रस्तो मायावी वेगेनाभिद्रवन् बिलं विवेश । तं परित्यज्य बाली स्वपुरं गन्तुं नैच्छत्, तस्मात् सुग्रीवं बिलद्वारि स्थापयित्वा बाली बिले राक्षस-ममार्गयत, परं मायाविनं **मार्गयतः=अन्विच्छतो** बालिनः संवत्सरो व्यतीतः :—

'तं मे **मार्गयतस्तत्र** गतः संवत्सरस्तदा' ।

( वा० रा० ४।१०।१९ )

मायाविनं दृष्ट्वा बाली तं बन्धुभिः सार्धं निहतवान्, परं यदा स बिलद्वारि समुपस्थाय सुग्रीवमाह्वयते, तदा तत्र सुग्रीवो नासीत् । यतो हि बिलद्वारि प्रवहन्तं रुधिरौघं वीक्ष्य सुग्रीवः 'मायाविना बाली हतः' इति विज्ञाय बिलं तं शिलाखण्डे-नापिधाय ततः किष्किन्धामागत्य सचिवादीनामाग्रहेण राज्यसिंहासनासीनः सञ्जातः । बाली कथङ्कारं बिलान्निष्क्रम्य किष्किन्धामागतः, तत्र राज्यसिंहासनासीनं मां (सुग्रीवम्) विलोक्य तेन तर्कितम्—'सुग्रीवे नास्ति भ्रातृत्वम्' किं चानेनात्मनो राज्यं **मृगयता=अधिकर्तुं प्रतीक्षमाणेन** बिलेऽहं निरुद्धः —

तत्रानेनास्मि संरुद्धो राज्यं **मृगयतात्मनः** ।
सुग्रीवेण नृशंसेन विस्मृत्य भ्रातृसौहृदम् ॥

( वा० रा० ४।१०।२५ )

तदनन्तरं बाली वस्त्रमेकं प्रदाय सुग्रीवं राज्यान्निर्वासयामासेत्यादि ।

### २. योगमार्गैः पुम्भिः स्वगतेर्मृगणम् = प्राप्तिप्रयत्नः

एकदा दितेः प्रार्थनया कश्यपस्तस्यां स्वकीयं तेजोऽर्पितवान् । ततोऽनुदिनं वर्धमानं दितेर्गर्भं वीक्ष्य लोकपाला हतौजसोऽभूवन्, विश्वसृजं ब्रह्माणं प्रार्थित-वन्तश्च । ब्रह्मा हिरण्यकशिपु-हिरण्याक्षयोर्जन्मकथाप्रसङ्गे तानुद्दिश्याह यदेकदा पञ्चहायनाः सनक-सनन्दन-सनातन-सनत्कुमारनामानो मे मानसाश्चत्वारः सुताः सर्वलोकनमस्कृतं वैकुण्ठनिलयं जग्मुः । तत्र भगवत्प्रतिकूलशीलौ जय-विजयाख्यौ द्वारपालौ तान् प्रवेशाय निषिषिधतुः । तदा मन्दधीभ्यां ताभ्यां वैकुण्ठलोकप्रतिकूला-चरणमिदं विज्ञाय ते ब्रह्मदण्डं पातयामासुः । ते ऊचुः —'इतोऽन्यांल्लोकान् युवां

व्रजतम् । अत्र त्वादृशस्य वासो नोचित इति । एवमस्त्रपूगैरनिवार्यं शापरूपं ब्रह्म-दण्डमवाप्य भीतौ तौ पादाब्जगृहतुः । तदानीं भगवानरविन्दनाभः सतामतिक्रमं स्वकीयजनकृतं विज्ञाय श्रिया सहितस्तत्र समाययौ । तेन लब्धाशिषस्ते चत्वारो भ्रातरः शरणमाश्रयं गतिं वा मृगयताम्=प्राप्तुं प्रयतमानानां पुंसां यद् योगमार्ग-ध्यानास्पदं भवति, तद् वपुर्धारयन्तमष्टभोगैर्युतं भगवन्तमस्तुवन्—

पुंसां गतिं मृगयतामिह योगमार्गैर्ध्यानास्पदं बहु मतं नयनाभिरामम् ।
पौंस्नं वपुर्दर्शयानमनन्यसिद्धैरौत्पत्तिकैः समगृणन् युतमष्टभोगैः ॥
(श्रीमद्भाग० ३।१५।४५)

३. ध्रुवस्य मात्रा सुनीत्या पद्मपलाशलोचनस्य विष्णोर्दुःखच्छिद्रूपेण मृगणम् = परिज्ञानम्

स्वायम्भुवमनोर्ज्येष्ठः पुत्र आसीद् उत्तानपादः, तस्य द्वे भार्ये बभूवतुः—सुरुचिः, सुनीतिश्च । तयोः सुरुचिरासीत् पत्युः प्रेयसी, सुनीतिश्चोपेक्षिता । तस्मात् सुनीति-सुतं ध्रुवं राजा नाभ्यनन्दत । एकदा सुरुच्या दुरुक्तविद्धं बालकं ध्रुवमाह माता सुनीतिः—हे तात ! त्वं विमत्सरो भूत्वाऽधोक्षजपादपद्ममाराधय अध्यासनं यदीच्छसि, यस्याङ्घ्रिपद्मं परिचर्य ब्रह्मा पारमेष्ठ्यं पदमध्यतिष्ठत् । तव पितामहो भगवान् मनुयं मखैरिष्ट्वा दुरवापं भौमं दिव्यमपवर्गं च सुखमभिपेदे । हे वत्स ! यस्य पदाब्ज-पद्धतिर्मुमुक्षुभिर्जनैर्मृग्यते=प्राप्तुं द्रष्टुं वा प्रयत्यते, भृत्यवत्सलं तमेव पुरुषमाश्रय—

तमेव वत्साश्रय भृत्यवत्सलं मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।
अनन्यभावे निजधर्मभाविते मनस्यवस्थाप्य भजस्व पूरुषम् ॥
(श्रीमद्भाग० ४।८।२२)

स च पुरुष इतरैर्जनैर्विमृग्यमाणया लक्ष्म्या मृग्यते=दृश्यते प्राप्यते वा, तमेव पद्मपलाशलोचनमहं तव दुःखच्छिदं मृगयामि=जानामि (कल्पये), ततः कमपि नान्यं पुरुषम्—

नान्यं ततः पद्मपलाशलोचनाद् दुःखच्छिदं ते मृगयामि कञ्चन ।
यो मृग्यते हस्तगृहीतपद्मया श्रियेतरैरङ्ग ! विमृग्यमाणया ॥
(श्रीमद्भाग० ४।८।२३)

एवं मातुरर्थागमं वचो निशम्यात्मानं सन्नियम्य स पितुः पुरान्निश्चक्राम, तदा तत्र समागत्य नारदः पाणिना तं बालं स्पृशन्नुवाच—यस्य प्रसादः पुंसां दुराराध्यो मन्यते, तीव्रयोगसमाधिना मृगयन्तोऽपि यस्य पदवीं मुनयो न विदुः, स त्वया कथं लभ्येत, इति विज्ञाय निवर्तितव्यं त्वया—

मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः ।
न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिना ॥
( श्रीमद्भाग० ४।८।३१ )

परं बालस्य सङ्कल्पं विदित्वा नारदस्तस्मै 'ॐ नमो भगवते वासुदेवाय' इति द्वादशाक्षरमन्त्रमुपदिश्य तं मधुवनं प्रेषयामास, यत्र भगवन्तमाराध्य स सिद्धिमधिजगाम ।

## ४. प्राचीनबर्हिषा मृगस्य ( आत्मनः ) मृगणम् = दर्शनम्

अध्यात्मतत्त्वज्ञो नारदः कर्मस्वासक्तमानसं प्राचीनबर्हिषं प्रतिबोधयितुकामः पारोक्ष्येणाध्यात्ममुपदिदेश । तदेवमवगन्तव्यम्—पुरञ्जनो नाम राजा पुरञ्जन्या प्रियतमया सह हिमवतो दक्षिणस्यां दिशि वर्तमानायां राजधान्यां रममाणः सुखं चिरमुवास । तस्य दशोत्तरशतं दुहितरः, एकादशशतानि च पुत्रा आसन् । तत्रैकैकस्य पुत्रस्य शतं पुत्रा अभूवन् । येन पञ्चालेषु पौरञ्जनो वंशः समेधितो बभूव । तत्राकस्माच्चण्डवेगनामा गन्धर्वः षष्ट्युत्तरशतत्रयसंख्याकैर्गन्धर्वैस्तावतीभिर्गन्धर्वीभिश्च सह समाक्रम्य पुरञ्जनपुरीं हर्तुमारभत । भयस्याग्रजेन प्रज्वारेण सा पुरी भस्मसान्नीता । प्रमदासङ्गदूषितः पुरञ्जनोऽपि कालधर्ममुपेयिवान् । अनन्तरं स विदर्भदेशस्य राजकुमारीरूपेण जन्म लेभे, मलयध्वजस्तामुपयेमे । मलयध्वजः कृष्णम् आरिराधयिषुः कुलाचलं जगाम । सहैव पत्नी वैदर्भी अप्यासीत् । सा प्रेम्णा पतिं तं पर्यचरत् । कदाचित् तत्र पतिमुपरतं वीक्ष्य विलपन्ती सा दारुमय्यां चितौ पत्युः कलेवरमादीप्य मरणाय मनो दधे । तत्राविज्ञातसखा समागत्य तां ब्रवीति । अहं त्वं च पूर्वं मानसायनौ हंसावभूतम् । त्वं मां विहायान्यत्र गतवान् । रामासङ्गादीदृशीं पापीयसीं दशां प्राप्तस्त्वं नैव विदर्भदुहिता, न चायं तव पतिः, न त्वं पतिः पुरञ्जन्याः, परं मयैव मायैषा विनिर्मिता आसीत् । वस्तुतोऽहं भवांश्च नान्यः । एवमेकेन मानसेन हंसेन प्रतिबोधितो द्वितीयो हंसः स्मृतिं नष्टामाप, स्वस्थश्च बभूव ।

इममेवार्थं स पारोक्ष्यान्तरेणापि स्पष्टीकृतवान्—हे राजन् ! कश्चिदेकः पुरुषो गृहस्थाश्रमं प्रविश्य रामया रममाणः सन् वनितादिजनालापेष्वतितरां प्रलोभितकर्णः आयुर्हरतोऽहोरात्रान्तान् काललवविशेषानविगणय्य परोक्षमनुप्रवृत्तेन लुब्धकेन कृतान्तकेनान्तःशरेण भिन्नहृदयो भवति, तं त्वं मृगय = पश्य, द्रष्टुमर्हसीत्यर्थः —

क्षुद्रश्चरं सुमनसां शरणे मिथित्वा रक्तं षडङ्घ्रिगणसामसु लुब्धकर्णम् ।
अग्रे वृकानसुतृपोऽविगणय्य यान्तं पृष्ठे मृगं मृगय लुब्धकबाणभिन्नम् ॥
( श्रीमद्भाग० ४।२९।५३ )

एवं लेखद्वयेन पञ्चत्रिंशदुत्तरैकशतकथानां ( १३५ ) वृत्तं सम्पूरितम् । अवशिष्टानामेकाशीतिकथानामपि वृत्तजातं सति समयेऽन्वेषणपराणामुपकाराय नूनं प्रस्तोष्यत इति ।

●

लघु-ग्रन्थमाला

[ ५६ ]

# कतिपयपाणिनिसूत्राणां विशेषव्याख्यानम्

प्रणेता

डॉ० के० वि० सोमयाजुलुः

वरिष्ठ-व्याख्याता

श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठे

जगन्नाथपुर्याम्



सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वि० सं० २०५४

॥ श्रीगुरुभ्यो नमः ॥

# अभिप्रायाविष्करणम्

मानवानां परस्पराभिप्रायव्यक्तीकरणाय अतिमुख्यतमं साधनं भवति भाषा। भाषा यद्यपि बह्व्यस्सन्ति। तासु संस्कृतभाषा महत्त्वपूर्णा वरीवर्ति। अस्यां संस्कृत-भाषायां साधुशब्दाः, अपशब्दाश्च वर्तन्ते। साधुशब्दप्रयोगे धर्मः। अपशब्दप्रयोगे चाधर्मः। असाधुशब्देभ्यो विविच्य साधुशब्दज्ञानार्थं व्याकरणमावश्यकम्। "व्याक्रि-यन्ते शब्दा अनेने"ति व्याकरणम्। इदञ्च व्याकरणं "ऐन्द्र-चान्द्रा"दिभेदेन यद्यप्य-नेकधा व्यभाजि; परन्तु अद्यत्वे व्याकरणमधिजिगांसमानानां छात्राणां पिपाठयिषू-णाञ्च पाणिनीयव्याकरणमेवात्यन्तमुपकरोति। अस्य पाणिनीयव्याकरणस्य सूत्रकर्ता पाणिनिः। तेनाष्टाध्यायी-नामकः कश्चन ग्रन्थो व्यलेखि। अष्टाध्याय्याम् अष्टौ अध्यायाः, प्रत्यध्यायं चत्वारः पादाश्च विराजन्ते। तेन प्रायः ३,९८१ सूत्राणि, १९७० धातवः, सुप्तिङाद्यष्टविधप्रत्ययाश्च व्याकरणेऽत्र न्यरूपिषत। ततः पाणिनि-सूत्राणामुपरि वार्तिककारो वररुचिर्वार्तिकान्यलिखत्। सूत्रवार्तिकयोरुपरि भगवता पतञ्जलिना महाभाष्यं प्रणीतम्। तद्ग्रन्थार्थोऽतीव गभीरः। प्रौढानामेव तद्गभीरार्थो ज्ञेयो भवति। प्रौढत्वञ्च "सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम्"।

अत्रेदं किञ्चिद्विज्ञापनीयम्—पाणिनिसूत्राणि परमप्रामाणिकानि, वेदस्थाना-पन्नानि च वर्तन्ते। तेषामर्था अप्यतीव गभीराः। तादृशमहत्त्वपूर्णानां पाणिनिसूत्राणां यथार्थमज्ञात्वा दर्शनान्तरीया नैयायिकमीमांसकादयः स्वीयतत्तच्छास्त्रीयवासनया पाणिनिसूत्राणि विपरीतं व्याचख्युः। न्यायमीमांसादिशास्त्रेषु मुनित्रयोक्ता अर्था व्याकरणसम्मता एव वर्तन्ते। परन्तु तद्व्याख्यातारो गोतमजैमिनीया ये वर्तन्ते, ते स्वकपोलकल्पितरीत्या पाणिनिसूत्राणि व्याख्याय बहुधा आचिक्षिपुः। तेषां तादृशा-क्षेपान् सविमर्शमस्मिन्निबन्धे तत्तत्सूत्रव्याख्यानसन्दर्भेऽहं यथामति प्रादर्शयम्। एवञ्च गोतमजैमिनीयोक्ताक्षेपाणां खण्डनपूर्वकं पाणिनिसूत्राणां यथार्थं शब्दतत्त्वं विज्ञापयितुमेवाहं "कतिपयपाणिनिसूत्राणां विशेषव्याख्यानम्" इति लघुशोधप्रबन्ध-

मसृजम् । तत्राऽपि सर्वेषां सूत्राणां व्याख्याने ग्रन्थविस्तृतभियाऽहं सूत्रचतुष्टयस्यैव विशेषव्याख्यानमकरवम् । यद्यप्यत्र निबन्धस्थानि सूत्राणि पण्डितप्रकाण्डैर्व्याख्यातानि स्युस्तथापि मदीयशास्त्रज्ञानवर्धनाय विशिष्याऽत्र मत्कृतं प्रधानं परिश्रमं वैयाकरण-लोकं प्रति विज्ञापयितुमेव ममाऽत्र लघुशोधप्रबन्धलेखने प्रवृत्तिर्जागृतेति सर्वेषां पण्डितप्रकाण्डानां सविधे सश्रद्धं सविनयञ्च विनिवेद्य बद्धाञ्जलिर्भवामोति ।

बुधजनविधेयः
के० वि० सोमयाजुलुः
वरिष्ठव्याख्याता
पुरीस्थ-श्रीसदाशिवकेन्द्रीयसंस्कृतविद्यापीठस्य

## मङ्गलाचरणम्

वन्देऽहं पितरौ पूज्यौ रुक्मिणीसुब्बरायकौ ।
पूज्यानस्मद्गुरून्नौमि सूर्यनारायणाभिधान् ॥

षड्शास्त्रमधीत्याहं गुरुशुश्रूषया सदा ।
तत्कृपामृतभागेव प्रवर्ते शोधकर्मणि ॥

श्रीनिवासं महादेवं शङ्खचक्रगदाश्रयम् ।
श्रीवेङ्कटेशयज्वानं मातामहमहोदयम् ॥

नीलाद्रिवासिनं देवं सुभद्राग्रजसंयुतम् ।
प्रार्थये च जगन्नाथं सततं मामवत्विति ॥

श्रीरुक्मिणीसुब्बरायतनूजोऽहं यथामति ।
प्रवर्ते शोधकार्येऽत्र गुरुस्मरणपूर्वकम् ॥



# विषयानुक्रमणिका

# कतिपयपाणिनिसूत्राणां विशेषव्याख्यानम्

## कर्तुरीप्सिततमं कर्म इति सूत्रार्थविचारः

'कर्तुरीप्सिततमं कर्म' इति पाणिनिसूत्रम्। कर्तुः, ईप्सिततमं, कर्मेति पदच्छेदः। अत्र सूत्र ईप्सितशब्दः क्रियापरः। कर्तुरित्यत्र कृञ्धातोः कर्त्रर्थे "ण्वुल्तृचौ" इति सूत्रेण तृच्प्रत्यये, चकारस्यानुबन्धलोपे कृ+तृ इति स्थिते तृच आर्धधातुकत्वेन तस्मिन् परे कृञ्धातोः ऋकारस्य "सार्वधातुकार्धधातुकयो"रिति सूत्रेण गुणे, रपरत्वे च कृते निष्पन्नकर्तृशब्दात् "क्तस्य च वर्तमाने" इति सूत्रेण षष्ठ्यां कृतायां कर्तुरिति पदं निष्पन्नम्। "आप्लृ व्याप्तौ" इत्यस्माद् धातोस्सन्नन्तात् "मतिबुद्धिपूजार्थेभ्यश्च" इति सूत्रेण कर्मणि क्तप्रत्यये, ततः "आप्ज्ञप्यृधामीत्" इति सूत्रेणाप्लृधातोराकारस्येत्वे निष्पन्नेप्सितशब्दात्तमपि ईप्सिततममिति रूपं भवति। अतिशयेनाप्तुमिच्छाभूतमिति तदर्थः। आप्तिश्चात्र सम्बन्धः। कर्तृकर्मणोस्साक्षात्सम्बन्धस्याभावात् कर्तृपदार्थविशेषणीभूतव्यापारद्वारकस्सम्बन्धोऽत्र गृह्यते। स च जन्यत्व-जन्याश्रयत्वेतदन्यतररूपः। "कारके" इत्यधिक्रियते। तथा च कारकसंज्ञा-कर्मसंज्ञयोस्समावेशः। एवञ्च कर्तुः स्वनिष्ठव्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयीभूतः कर्मसंज्ञां लभत इति सूत्रार्थः। तथा च कर्तृस्वनिष्ठव्यापारप्रयोज्यफलाश्रयत्वेनेच्छाविषयत्व कर्मत्वमिति कर्मलक्षणं फलति। "चैत्रस्तण्डुलं पचती"त्यत्र लक्षणसमन्वयः—कर्ता=चैत्रः। तन्निष्ठो यो व्यापारः=विक्लित्त्यनुकूलव्यापारः। तत्प्रयोज्यं यत् फलं=विक्लित्तिः। तदाश्रयत्वेन या इच्छेत्युक्ते तण्डुलो विक्लित्त्याश्रयो भवत्वितीच्छा। तद्विषयत्वं तण्डुले वर्तत इति तण्डुलस्य कर्मत्वम्। फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात् कर्मत्वम्। अत एव फलसमानाधिकरणेभ्यः स्तोकादिशब्देभ्यो द्वितीयायां कृतायां स्तोकं पचतीत्यादयः प्रयोगा उपपद्यन्ते।

अत्रायं प्रश्नः—"कर्तुरीप्सिततमं कर्म" इति सूत्रे कर्तुरिति विशेषणं मास्तु। सूत्रे तत्पदाभावेऽपि कारकाधिकाराद्व्यापारलाभो भविष्यतीति।

अत्रेदं समाधानम्—प्रकृतसूत्रे कर्तुरिति पदाभावे व्यापारप्रयोज्यफलाश्रयत्वं कर्मत्वमिति कर्मलक्षणं फलति। तथा सति माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्येतत्तात्पर्येण प्रयुक्ते "माषेष्वश्वं बध्नाती"ति वाक्ये माषाणामपि कर्मत्वापत्तिः। तथा हि—अत्र सूत्रे कर्तुरिति पदाभावे व्यापारप्रयोज्यफलाश्रयं कर्मेत्येवार्थः फलति। तथा च निरुक्तार्थकवाक्ये कर्मनिष्ठप्रसञ्जनक्रियायाः व्यापारपदेन ग्रहणे तज्जन्यसंयोगरूपफलाश्रयत्वं माषेषु वर्तत इति माषाणां कर्मत्वापत्तिः। कर्तुरिति पदसत्त्वे तु

कर्तृनिष्ठव्यापारप्रयोज्यफलाश्रयत्वं कर्मत्वमित्यर्थः फलति। तथा च प्रकृतोदाहरणे प्रसञ्जनक्रिया न कर्तृनिष्ठो व्यापारः, किन्तु बन्धनमेव। तज्जन्यास्वातन्त्र्यरूपफलाश्रयत्वस्याश्व एव सत्त्वेन माषेष्वभावान्नातिव्याप्तिः।

अत्र सूत्रे तमब्ग्रहणस्य प्रयोजनत्रयं वर्तते। तथा हि—प्रकृतसूत्रे तमब्ग्रहणेन व्यापारे प्राधान्यं, फले व्यापारप्रयोज्यत्वं, फलस्य प्रकृतधातुवाच्यत्वञ्चेति प्रयोजनत्रयं सिद्धयति। तथा च प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्यप्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वमिति कर्मलक्षणं फलति। चैत्रस्तण्डुलं पचतीत्यत्र लक्षणसमन्वयः—प्रकृतधातुः पच्धातुः, तदर्थो यः प्रधानीभूतो व्यापारः=फूत्कारादिव्यापारः, तत्प्रयोज्यं प्रकृतधात्वर्थक्रियाजन्यञ्च यत् फलं=विक्लित्तिः तदाश्रयत्वं तण्डुले वर्तत इति। स्पष्टञ्चेदं लघुशब्देन्दुशेखरे कारकप्रकरणे[1]।

## तमब्ग्रहणस्य प्रथमप्रयोजनविचारः

"कर्तुरीप्सिततमं कर्म" इति कर्मसंज्ञासूत्रे तमब्ग्रहणात् प्रकृतकर्मलक्षणे व्यापारे प्राधान्यं निवेश्यते। तथा चात्र तमब्ग्रहणस्य 'यवेभ्यो गां वारयतो'त्यादौ यवादीनामपादानत्वं, गवादोनां कर्मत्वमिति संज्ञाद्वयस्य विषयव्यवस्थासिद्धिः फलम्। संयोगाद्यनुकूलव्यापाराभावानुकूलव्यापारो वारयतेरर्थः। प्रधानव्यापारश्चैत्रनिष्ठः। अप्रधानव्यापारो गोनिष्ठः। प्रधानव्यापारप्रयोज्यफलं संयोगाभावः, न तु संयोगः। तादृशाभावरूपफलाश्रयत्वेन गवादेः कर्मत्वम्। अर्थादपादानसंज्ञाविधायकसूत्रे तमपः भावेन गवादिनिष्ठाप्रधानव्यापारजन्यसंयोगाश्रयत्वेन यवादोनामपि कर्मत्वापत्त्या वारयतियोगे विशेषविहितमपादानत्वं पच्यादियोगे सावकाशस्य कर्मत्वस्य बाधकं स्यात्। तथा चोभयत्राऽप्यपादानत्वापत्तिरिति संज्ञाद्वयस्य विषयव्यवस्था नोपपद्येत। अतस्सूत्रे तमब्ग्रहणमावश्यकम्।

## तमब्ग्रहणस्य द्वितीयप्रयोजनविचारः

एवं कर्मसंज्ञा-सूत्रे तमपोऽभावे कर्मलक्षणे फले व्यापारप्रयोज्यत्वस्यालाभेन कर्तृनिष्ठव्यापारवाचकधातूपात्तफलाश्रयत्वं कर्मत्वमित्यर्थापत्तौ 'यवेभ्यो गां वारयती'त्यादौ पुनर्यवादीनामपि कर्मत्वापत्तिः। तथा हि — कर्ता=चैत्रादिः, तन्निष्ठो यो व्यापारः=अभावानुकूलः, तद्वाचको धातुर्वारयतिः, तदर्थफलमभाव इव संयोगोऽपि स्यात्। अतस्तदाश्रयत्वेन पुनर्यवादीनामपि कर्मत्वापत्तिः। अतः फले व्यापारप्रयोज्यत्वनिवेशार्थं सूत्रे तमब्ग्रहणमावश्यकम्।

ननु कर्मलक्षणे प्रयोज्यत्वनिवेशेऽपि दोषतादवस्थ्यम्। प्रयोज्यत्वस्य जन्यजन्यसाधारणत्वादिति चेत्, सत्यम्। जन्यजन्ये प्रयोज्यत्वव्यवहारः। यथा—गमयति-

---

१. लघुशब्देन्दुशेखरे सचन्द्रकलाके, कारकप्रकरणे, पृ० ६१७।

योगे मैत्रश्चैत्रं ग्रामं गमयतीत्यादौ प्रधानप्रेरणाजन्यत्वं प्रयोज्यनिष्ठव्यापारे। तज्जन्यत्वं संयोगे। अतः प्रेरणाप्रयोज्यत्वं संयोगे सिद्ध्यतु। प्रकृते प्रधानव्यापार-प्रयोज्यत्वमभावे, तज्जन्यत्वं संयोगे नास्ति। अतस्संयोगे प्रधानव्यापारप्रयोज्यत्वा-भावान्न दोषः।

## तमब्ग्रहणस्य तृतीयप्रयोजनविचारः

माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थके 'माषेष्वश्वं बध्नाती'त्यत्र कर्तृग्रहणेन कर्तृनिष्ठबन्धनरूपव्यापारजन्यफलाश्रयत्वस्याभावेन माषाणां कर्मत्ववारणेऽपि पुष्ट्यर्थं माषक्षेत्रे बध्नातीत्यर्थके 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्वापत्तिर्दुर्वारा। कर्तृनिष्ठरज्ज्वादिसंयोगरूपव्यापारप्रयोज्यत्वस्य भक्षणे सत्त्वेन तदाश्रयत्वेन माषाणां कर्मत्वापत्तिः। अतः फले प्रकृतधात्वर्थत्व-निवेशः। प्रकृते भक्षणं न प्रकृतधात्वर्थः, किन्त्वस्वातन्त्र्यम्, अतो न दोषः।

केवलतमब्ग्रहणफलन्तु "अग्नेर्माणवकं वारयती"त्यत्र माणवकस्य कर्मत्व-सिद्धिः। तमब्ग्रहणाभावे "वारणार्थानामीप्सितः" इति सूत्रं विशेषविहितत्वेनास्याप-वादः स्यात्। तथा च माणवकशब्दाद् द्वितीया न सिद्ध्येत्। तमब्ग्रहणे त्वीप्सितमात्रे चरितार्थाया अपादानसंज्ञाया ईप्सिततमे परत्वादनेन बाधः। तथा च 'अग्ने-र्माणवकं वारयती'त्यत्र माणवकशब्दाद् द्वितीया निराबाधा।

## कर्मलक्षणविचारसन्दर्भे भूषणसारकाराशयः

कर्मलक्षणविचारसन्दर्भे कौण्डभट्टस्यायमाशयः। तथा हि—कर्तृनिष्ठक्रिया-जन्यफलाश्रयत्वं कर्मत्वमिति कर्मलक्षणस्वीकारे 'चैत्रो ग्रामं गच्छती'त्यत्र ग्रामे संयोगानुकूलव्यापारजन्यसंयोगो यथा वर्तते तथा चैत्रेऽपि संयोगरूपफलसत्त्वेन चैत्रशब्दादपि द्वितीयापत्तौ 'चैत्रश्चैत्रं गच्छतीति' प्रयोगापत्तिः। एवं 'प्रयागतः काशीं गच्छती'त्यत्राऽपि प्रयागे वर्तमानश्चैत्रः प्रयागं त्यक्त्वा यदा काशीं गच्छति तदा संयोगविभागयोरप्येकक्रियाजन्यतया चैत्रनिष्ठक्रियाजन्यसंयोगाश्रयतया काश्या इव तन्निष्ठक्रियाजन्यविभागाश्रयतया प्रयागस्यापि कर्मत्वस्य सत्त्वेन द्वितीयायाः प्राप्तौ 'प्रयागं गच्छती'त्यापत्तिश्चेति चेत्, न, परया चैत्रनिष्ठ-कर्तृसंज्ञया कर्मसंज्ञाया बाधान्न द्वितीयेति 'चैत्रो ग्रामं गच्छती'त्यर्थे 'चैत्रश्चैत्रं गच्छती'ति प्रयोगापत्तिर्न भवति।

ननु कर्मसंज्ञाया अभावेऽपि वस्तुतः फलाश्रयत्वमादाय द्वितीया स्यादेवेति चेत्, न, द्वितीयोत्पत्तौ संज्ञाया नियामकत्वाच्चैत्रस्य कर्मत्वसत्त्वेऽपि तादृशसंज्ञाया अभावान्न द्वितीया। यदि विभक्त्युत्पत्तौ संज्ञाया नियामकत्वं नाङ्गीक्रियेत तर्हि

'गमयति कृष्णं गोकुलमि'त्यत्र क्रियाजन्यफलाश्रयत्वेन कृष्णपदाद् यथा द्वितीया भवति तथैव 'पाचयति कृष्णेन गोपः' इत्यत्रापि कृष्णस्य क्रियाजन्यफलशालित्वेन कृष्णपदादपि द्वितीयाप्राप्तौ 'पाचयति कृष्णं गोपः' इत्यापद्येत। संज्ञाया नियामकत्वे तु "गतिबुद्धि"सूत्रेण णिजर्थेनाऽऽप्यमानस्य यदि कर्मत्वं तर्हि गत्यादिधातुयोग एवेति नियमितत्वात् पाचयतियोगे प्रयोज्यस्य कर्मत्वाभावान्न प्रयोज्यवाचकाद् द्वितीया। किन्तु तदीयकर्तृप्रयुक्ता तृतीयैवेति 'पाचयति कृष्णेन गोपः' इति प्रयोगसिद्धौ न दोषः। ननु विभक्त्युत्पत्तौ संज्ञाया नियामकत्वाभ्युपगमेन 'चैत्रश्चैत्रं गच्छती'ति प्रयोगस्य साधुत्ववारणेऽपि तत्र चैत्रनिष्ठसंयोगजनकश्चैत्रनिष्ठो व्यापार इति शाब्दबोधो भवत्येवेति चेत्, न, समवायसम्बन्धेन धात्वर्थफलनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन जायमानशाब्दबुद्धित्वावच्छिन्नं प्रति आश्रयोपस्थितिः कारणमिति ज्ञानवतां पुरुषाणां तादृशप्रयोग इष्ट एव। अथवा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिर्हेतुरिति कार्यकारणभावस्य सत्त्वेन चैत्रस्य व्यापाराधिकरणत्वेनानधिकरणत्वाभावेन न शाब्दबोधः। ननु प्रयागतः काशीं गच्छतीत्यत्र संयोग इव विभागस्यापि गम्लृधात्वर्थत्वात् कर्मत्वमिति चेत्, न, समभिव्याहृतधात्वर्थफलशालित्वं कर्मत्वमित्युक्तत्वेन प्रयागस्य तादृशकर्मत्वाभावेन न दोष इति।

## नैयायिकमतरीत्या पूर्वोक्तदोषद्वयवारणप्रदर्शनम्

नैयायिकास्तु 'चैत्रश्चैत्रं गच्छती'ति प्रयोगवारणाय परसमवेतत्वं द्वितीया वाच्यम्, तच्च परसमवेतत्वं क्रियाया विशेषणम्। 'प्रयागतः काशीं गच्छति' इत्यत्र प्रयागस्य कर्मत्वापत्तौ प्रयागं गच्छतीत्यापत्तिवारणाय फले प्रकृतधात्वर्थतावच्छेदकत्वं निवेशनीयम्। परसमवेतत्वञ्च यस्मात् प्रातिपदिकाद् द्वितीया चिकीर्षिता तदर्थापेक्षया यः परस्तत्समवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमिति। चैत्रस्तण्डुलं पचतीत्यत्र लक्षणसमन्वयः — यस्मात् प्रातिपदिकाद् द्वितीया चिकीर्षिता=तण्डुलपदात्, तदर्थापेक्षया यः परः=चैत्रः, तत्समवेता या क्रिया= विक्लित्त्यनुकूला फूत्कारादिक्रिया, तत्समवेतं धात्वर्थतावच्छेदकञ्च यत्फलं= विक्लित्तिः, तदाश्रयत्वं तण्डुले वर्तत इति। तत्र परत्वं द्वितीयाप्रकृत्यर्थापेक्षया गृह्यते। अन्यथा चैत्रश्चैत्रं गच्छतीत्यापत्तिस्तदवस्थैव। कुत इति चेत् परसमवेतत्वं नाम भेदाश्रयत्वम्। तथा च 'मैत्रात् परश्चैत्रः' इत्यत्र चैत्ररूपपरसमवेता या क्रिया, तज्जन्यधात्वर्थतावच्छेदकसंयोगरूपफलाश्रयत्वेन चैत्रस्य कर्मत्वापत्तिः। द्वितीयाप्रकृत्यर्थापेक्षया परत्वस्य ग्रहणे तु 'चैत्रश्चैत्रं गच्छती'त्यत्र चैत्ररूपद्वितीयाप्रकृत्यर्थापेक्षया चैत्रस्य परत्वाभावान्न तस्य कर्मत्वम्।

अत्रायं प्रश्नः — नैयायिकोक्तकर्मलक्षणे द्वितीयाप्रकृत्यर्थापेक्षया परत्वस्य ग्रहणेन 'चैत्रश्चैत्रं गच्छती'ति प्रयोगापत्तिर्न भवति। चैत्रे चैत्रभेदस्यासम्भवादित्ययुक्तम्। कुत इति चेत्–तत्र परसमवेतत्वपरिष्कारे परशब्देन भेदो गृह्यते। भेदो नामाभावः। स चाभाव उभयाभावो वा विशिष्टाभावो वाऽत्र ग्राह्यः। तथा च चैत्रे चैत्र घट उभयं नास्तीत्याकारकप्रतीतिसिद्ध उभयाभावो वा नो चेद् आकाशत्वावच्छिन्नश्चैत्रो नास्तीत्याकारकविशिष्टाभावो वा समायाति। तथा सति 'चैत्रश्चैत्रं गच्छती'त्यत्र चैत्रे उभयाभावस्य वा विशिष्टाभावस्य वा ग्रहणेन चैत्रे चैत्रभेदस्य सत्त्वात् तत्समवेतक्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वेन चैत्रस्य कर्मत्वाऽऽपत्तौ 'चैत्रश्चैत्रं गच्छती'त्यापत्तिः पुनस्तदवस्थैवेति।

अत्रेदं समाधानम्— परसमवेतत्वपरिष्कारे परशब्देन भेदस्य ग्रहणेऽप्यत्रोभयाभावो वा विशिष्टाभावो वा नैव ग्राह्यः, पूर्वोक्तदोषापत्तेः; किन्तु तद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकोऽत्यन्ताभावोऽत्र ग्राह्यः। तद्व्यक्तित्वावच्छिन्नप्रतियोगितानिरूपकात्यन्ताभावो नाम तद्व्यक्तिनिष्ठाधेयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितानिरूपकोऽत्यन्ताभावः। तथा च 'चैत्रश्चैत्रं गच्छती'त्यत्र चैत्रे उभयाभावस्य, विशिष्टाभावस्य वा सम्भवेऽपि चैत्रत्वावच्छिन्नचैत्रत्वेतरधर्मानवच्छिन्नचैत्रनिष्ठप्रतियोगितानिरूपकात्यन्ताभावस्यासम्भवान्न 'चैत्रश्चैत्रं गच्छती'त्यापत्तिः। तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकाभावे प्रतियोगिवैयधिकरण्यं निवेशनीयम्। अन्यथा तत्र प्रतियोगिसमानाधिकरणाभावस्य प्राप्त्या "अग्रे वृक्षः कपिसंयोगी मूले न" इत्यत्रैकस्मिन्नेव वृक्षाधिकरणे अग्रावच्छेदेन कपिसंयोगस्य सत्त्वेऽपि मूलावच्छेदेन तदभावात्तत्राऽतिव्याप्तेः। अतोऽभावे प्रतियागिवैयधिकरण्यं निवेशनीयम्। फलस्य प्रकृतधात्वर्थतावच्छेदकस्य ग्रहणात् 'प्रयागात् काशीं गच्छती'त्यत्र विभागस्य प्रकृतधात्वर्थाभावात् प्रयागं गच्छतीत्यापत्तिरपि न भवति। अतो न दोष इति वदन्ति।

## नैयायिकमतखण्डनम्

तन्न युक्तम्। 'चैत्रश्चैत्रं गच्छतो'त्यत्र द्वितीयावारणार्थं परसमवेतत्वाङ्गीकारे नैयायिकानामतिरिक्तपरसमवेतत्वरूपकल्पनाप्रयुक्तं गौरवमापद्येत। किञ्चातिप्रसङ्गो द्वितीयाया उत शाब्दबोधस्य वेति सन्देहः। परसमवेतत्वस्य द्वितीयावाच्यत्वेऽपि 'पाचयति कृष्णेन गोपः' इत्यत्र प्रयोज्यस्य कर्मत्वेन द्वितीयापत्तिस्तदवस्थैव। 'तण्डुलं पचति चैत्रः' इत्यत्र तण्डुलपदाद्यथा द्वितीया भवति तथा 'तण्डुलः पच्यते स्वयमेव' इत्यत्रापि प्रथमान्तार्थस्य तण्डुलस्यापि त्वदुक्तकर्मत्वापत्तौ 'तण्डुलं पच्यते' इत्यापत्तिः। एवं 'गमयति कृष्णं गोकुलमि'त्यत्र कृष्णपदाद्यथा

द्वितीया प्राप्नोति तथा 'पाचयति कृष्णेन गोपः' इत्यत्रापि प्रयोज्ये कृष्णे स्वभिन्न-प्रयोजकसमवेतक्रियाजन्यणिजन्तधात्वर्थतावच्छेदकोभूतप्रकृत्यर्थक्रियात्मकफलशालित्व-रूपकर्मत्वस्य सत्त्वेन द्वितीयाप्राप्तौ 'पाचयति कृष्णं गोपः' इत्यापत्तिश्च। शाब्दबोधातिप्रसङ्गस्त्विष्टापत्त्या यद्वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यक-शाब्दबोधं प्रति धात्वर्थव्यापारानधिकरणाश्रयोपस्थितिः कारणमिति कार्यकारण-भावस्वीकारेण वा निरस्तः। किञ्च प्रकृत्यर्थप्रकारकबोधे द्वितीयार्थपरसमवेत-त्वोपस्थितिः कारणम्, परसमवेतत्वप्रकारकबोधे विशेष्यतया धातुजन्योपस्थितिः कारणमित्यादिकार्यकारणभावस्वीकारेऽत्यन्तं गौरवम्। किञ्च 'घटं जानाति' इत्यत्र नैयायिकोक्तकर्मत्वाभावेन द्वितीयानापत्तिः। अतो वैयाकरणमतमेव युक्तम्। स्पष्टञ्चेदं वैयाकरणभूषणसारे[1]।

## कर्मसंज्ञाप्रकरणप्रत्याख्याने भर्तृहरेः कल्पनाचातुर्यम्

महानुभावो भर्तृहरिस्साधनसमुद्देशे कर्मप्रकरणे विचित्रां कल्पनां प्रादर्शयत्। यथा—"कर्तुरीप्सिततमं कर्म", "तथायुक्तञ्चानीप्सितम्", "अकथितञ्च" इत्यादि-सूत्राणि सम्यग्व्याख्यायानन्तरम्—

"यथैवैकमपादानं शास्त्रे भेदेन दर्शितम्।
तथैकमेव कर्माऽपि शास्त्रे भेदेन दर्शितम्[2]॥

इति कारिकया स्वसिद्धान्तमुद्घाटयामास।

## कारिकार्थविवरणम्

शास्त्रे=पाणिनीये, एकमेव=एकसूत्रसिद्धमेव नाम "ध्रुवमपायेऽपादानम्" इति सूत्रसिद्धमेव, अपादानम्=अपादानसंज्ञा, यथा=येन प्रकारेण, भेदेन= अनेकधा="भीत्रार्थानां भयहेतुरि"त्यादिसप्तभिस्सूत्रैः[3], "ल्यब्लोपे कर्मणो"त्यादि-वार्तिकद्वयेन च दर्शितम्=स्पष्टप्रतिपत्तये कण्ठत उक्तम्, तथा=तद्वत्, कर्मापि= कर्मसंज्ञापि, एकमेव=एकसूत्रसिद्धमेव नाम "कर्तुरीप्सिततमं कर्म" इति सूत्र-सिद्धमेव, शास्त्रे=पाणिनीये, भेदेन=अनेकधा=अनेकसूत्रैः, दर्शितम्=स्पष्ट-प्रतिपत्तये कण्ठत उक्तमिति।

---

१. वैयाकरणभूषणसारे, तत्त्वदर्शिनीटीकासहिते, सुबर्थ-निर्णये।

२. वाक्यपदीये, तृतीयकाण्डे, अम्बाकर्त्रीसहिते, सप्तमे साधनसमुद्देशे, पृ० २२३, श्लोकसंख्या—७८।

३. वैयाकरणसिद्धान्तकौमुद्याम्, बालमनोरमा-सहितायाम्, कारकप्रकरणे, पृ० ४४६-४५०।

भाष्यकारेण "ध्रुवमपायेऽपादान"मिति प्रथमसूत्रेणैव सर्वत्रापादानत्वं संसाध्य "भीत्रार्थानां भयहेतुः" इत्यादिसूत्राणि प्रत्याख्यातानि । भाट्टरहस्येऽप्ययं प्रत्याख्यानप्रकारो विस्तरेण खण्डदेवेन न्यरूपि –"वस्तुतस्तु बहुधैतानि सर्वाणि भाष्यकारेण प्रत्याख्यातानि..... .....''इत्याद्युक्त्वा अन्ते "ततश्च तत्सूत्रेणेवापादानत्वसिद्धयासूत्रान्तरवैयर्थ्य"मिति तत्रत्यो ग्रन्थः[१]। तं भाष्यार्थं दृष्टान्तीकृत्य भर्तृहरिणा कर्माधिकारे कर्मसंज्ञाप्रकरणे "कर्तुरीप्सिततमं कर्म" इति प्रथमसूत्रेणैव कर्मत्वं संसाध्य "तथायुक्तञ्चानीप्सित"मित्यादीनि कर्मसंज्ञाविधायकसूत्राणि प्रत्याख्यातानि। एषैव भर्तृहरेर्नूतनकल्पना । एनमेवार्थमहमधुना विस्तरेण यथामति प्रदर्शयामि ।

### उक्तार्थस्य विस्तरेण प्रतिपादनम्

प्रथमाध्याये चतुर्थपादे कारकाधिकारे "ध्रुवमपायेऽपादान"मित्यपादानसंज्ञाविधायकं सूत्रम् । अपायो विश्लेषः । तत्र ध्रुवम्=निश्चलमवधिभूतं कारकं अपादानं स्यादिति तदर्थः । तथा च विभागाश्रयत्वे सति तद्विभागजनकतत्क्रियानाश्रयत्वमपादानत्वमिति निष्कृष्टार्थः । 'वृक्षात् पर्णं पतती'त्युदाहरणम् । अत्र पतनक्रियया वृक्षपर्णयोर्विभागो जातः । तत्क्रियानाश्रयत्वेन वृक्षस्यापादानत्वम्, तत्क्रियाश्रयत्वेन पर्णस्य कर्तृत्वञ्च सिद्ध्यति ।

### भीत्रार्थानामित्यादिसूत्राणामावश्यकता

अनन्तरं "भीत्रार्थानां भयहेतुरि"त्यादिसप्तभिः सूत्रैरपादानसंज्ञा विहिता पाणिनिना । 'चोरादिबभेति', 'अध्ययनात् पराजयते' इत्यादीन्युदाहरणानि । एषु वृक्षपर्णयोरिव चोरस्य, बिभ्यतश्च वास्तवौ संयोगविभागौ न स्तः । अतः प्रथमसूत्रेण चोरादेरपादानत्वं न प्राप्नोतीत्याशयेन तत्सिद्धये सप्त सूत्राण्यारब्धानि । तथा "जुगुप्साविरामप्रमादार्थानामुपसंख्यानमि"ति, "यतश्चाध्वकालनिमानं, ततः पञ्चमी, तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात् सप्तमी च वक्तव्या" इति वचनद्वयं कात्यायनेन आरब्धम् ।

### सप्तसूत्रीप्रत्याख्यानप्रकारः

ततः पतञ्जलिना भीत्रार्थानां भयहेतुरित्यादिसूत्रसप्तकं,वार्तिकद्वयञ्च प्रत्याख्यातम् । तथा हि—"भीत्रार्थानां भयहेतुः" (पा० सू० १।४।२५) । अयं योगश्शक्योऽवक्तुम् । कथं 'वृकेभ्यो बिभेति', 'दस्युभ्यो बिभेति', 'चोरेभ्यस्त्रायते', 'दस्युभ्यस्त्रायते' इति ? इह तावत् 'वृकेभ्यो बिभेति', 'दस्युभ्यो बिभेति'—य एष मनुष्यः प्रेक्षापूर्वकारो भवति, स पश्यति यदि मां वृकाः पश्यन्ति ध्रुवो मे मृत्युरिति स बुद्ध्या

---

१. भाट्टरहस्ये, खण्डदेवभावप्रकाशसहिते, द्वितीयभागे पञ्चम्यर्थनिरूपणे, पृ० २११ ।

सम्प्राप्य निवर्तते। तत्र "ध्रुवमपायेऽपादानम्" इत्येव सिद्धम्। इह 'चोरेभ्यस्त्रायते, दस्युभ्यस्त्रायते' इति। य एष मनुष्यः प्रेक्षापूर्वकारी सुहृद्भवति, स पश्यति यदीमं चोराः पश्यन्ति ध्रुवमस्य वधबन्धनादिपरिक्लेशा इति स बुद्ध्या सम्प्राप्य निवर्तयति। तत्र "ध्रुवमपायेऽपादान"मित्येव सिद्धमिति "भीत्रार्थानां भयहेतुरि"ति सूत्रे भाष्य[1] उक्तम्। बाह्यरूपेण वास्तवसंयोगविभागावेव नापादानत्वप्रयोजकौ; किन्तु बुद्धिपरिकल्पितावपि। गृहे स्थितोऽपि चैत्रादिरेवं चिन्तयति "यद्यहं तत्र गमिष्याम्यवश्यं चोरा मां हन्यु"रिति। अतो नाहं तत्र गच्छामीत्यालोचयति। गृहे दस्यूनामभावेऽपि बुद्धिसन्निधापितस्य चोरस्य सत्त्वात्तत्र चोरादेर्दस्यूनाञ्च संयोगविभागौ जातावेव। तत्र निवृत्तिपर्यन्तं धात्वर्थः। 'चोरात् त्रायते' इत्यत्र निवर्तनापर्यन्तं धात्वर्थः। अतः प्रथमसूत्रेणैव वृकादीनामपादानत्वस्य सिद्धत्वादिदं सूत्रं नारम्भणीयम्। एवमेव "पराजेरसोढः", "वारणार्थानामीप्सितः" इत्यादीनि सूत्राण्यपि नारम्भणीयानीति विचारोऽयं भाष्ये वरीवर्ति। स्पष्टं चेदं लघुशब्देन्दुशेखरे कारकप्रकरणे—"एषां धातूनां स्वार्थपूर्वकबौद्धविश्लेषजनकनिवृत्तिलक्षणया सूत्रेणैव सिद्धयेदं वार्तिकमुत्तरसूत्राणि च प्रत्याख्येयानी"ति तत्रत्यो ग्रन्थः[2]। [3]वैयाकरणसिद्धान्तलघुमञ्जूषायां सुबर्थविचारेऽपि नागेशभट्टेन—"विभागश्च न वास्तवसम्बन्धपूर्वक एव, किन्तु बुद्धिपरिकल्पितसम्बन्धपूर्वकोऽपि। अत एव जुगुप्सापूर्वकनिवृत्तिलक्षकतामाश्रित्य जुगुप्साविरामेत्यादिप्रत्याख्यानं भाष्योक्तं सङ्गच्छते" इत्युक्तम्।

भर्तृहरिरपादानप्रकरणस्थं भाष्यार्थमवष्टभ्य तद्भाष्यार्थं "यथैवेकमपादानं शास्त्रे भेदेन दर्शितम्" इति दृष्टान्ततया प्रदर्श्य तमर्थं "तथैकमेव कर्माऽपि शास्त्रे भेदेन दर्शितमि"ति दार्ष्टान्तिकमतिदिदेश।

## दार्ष्टान्तिकाशयविवरणम्

"कर्तुरीप्सिततमं कर्म" (पा०सू० १।४।४९) इति प्रथमं कर्मसंज्ञाविधायकं सूत्रम्। कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यादिति तदर्थः। 'चैत्रस्तण्डुलं पचति' इत्युदाहरणम्। अत्र चैत्रनिष्ठव्यापारजन्यविक्लित्तिरूपफलाश्रयत्वेन तण्डुलस्य कर्मसंज्ञायां ततः "कर्मणि द्वितीया" इति सूत्रेण द्वितीया।

---

१. 'पातञ्जल-महाभाष्ये' प्रदीपोद्द्योतसहिते प्रथमाध्याये चतुर्थपादे–तृतीयाह्निके, २५ सूत्रे, पृ० २६०-२६१।

२. लघुशब्देन्दुशेखरे, सचन्द्रकलाके, कारकप्रकरणे, पृ० ६८९।

३. वैयाकरणसिद्धान्तलघुमञ्जूषायाम्, कला-टीका-सहितायाम्, सुबर्थविचारे, पृ० २२३।

एवं 'विषं भुङ्क्ते' चोरान् पश्यति, गां दोग्धि पयः, क्रूरमभिक्रुध्यति, ग्रामं गच्छन् तृणं स्पृशति, इत्यादौ विषादिषु प्रकर्षाभावेन निरुक्तकर्मत्वस्याप्राप्त्या "तथायुक्तञ्चानीप्सित"मित्यादीनि सूत्राणि[1] पाणिनिना आरब्धानि।

### अत्र काचन शङ्का

"कर्तुरीप्सिततमं कर्म" इति कर्मसंज्ञा-सूत्रे तमपो ग्रहणेन तत्सामर्थ्यलब्ध-स्यार्थस्य विषादावभावात् कथमेकेन सूत्रेण सर्वत्र संज्ञासिद्धिरिति।

### अत्रेदं समाधानम्

प्रथमसूत्र एकस्य तमपः परित्यागेन "तथायुक्तञ्चानीप्सित"मित्यादिसूत्रो-दाहरणेष्वपि "कर्तुरीप्सिततमं कर्म" ( पा० सू० १।४।४९ ) इति सूत्रेणैव सर्वत्र कर्मत्वं सिद्धयति। सर्वत्र कर्तुः क्रिययाऽऽप्यमानस्य समत्वादिति।

### तृणादीनां प्रथमसूत्रेण कर्मत्वसम्पादनम्

यत्तु तमब्ग्रहणस्योदाहरणं 'दध्ना भुञ्जीय' इति, तत्र समकक्ष्यतया दध्योदनयोरीप्सितत्वे तमब्ग्रहणमकिञ्चित्करम्। तमपोऽभावेन श्रमापनोदनार्थं ग्रामगमनेऽप्यन्तरा वृक्षमूलोपसर्पणमभिसंहृतमिति प्रकृतोदाहरण ईप्सितमात्रस्य कर्मसंज्ञा पूर्वसूत्रेणैव सिद्धयति।

### अत्र कश्चन पूर्वपक्षः

'यवेभ्यो गां वारयती'त्यादौ यवादेरपादानत्वमेव। गवादेः कर्मत्वमेवेति कर्मत्वापादानत्वयोर्विषयविभागप्रदर्शनार्थं कर्मसंज्ञा-सूत्रे तमब्ग्रहणमावश्यकम्। अन्यथा पच्यादौ चरितार्थस्य कर्मत्वस्य विशेषविहितेन "वारणार्थानामीप्सितः" ( पा० सू० १।४।२७ ) इत्यपादानत्वेन बाधापत्त्या गवादेरपि पञ्चम्यापत्तिरिति।

### समाधानम्

"वारणार्थानामीप्सितः" इति सूत्रस्य वारणार्थानां धातूनां योग ईप्सितोऽर्थोऽ-पादानमिति नार्थः। किन्तु वारणमर्थ्यन्त इति वारणार्थाः। वारयितव्याः प्रतिषेद्धव्या इति यावत्। वारणार्थानां=प्रतिषेद्धव्यानां गवादीनामीप्सिता यवादय एवेति तेषामेवापादानत्वम्, गवादीनां कर्मत्वमेवेति तमब्ग्रहणाभावेऽपि तयोर्विषयविभागस्सिद्धः।

---

१. वैयाकरणसिद्धान्तकौमुद्याम्, बालमनोरमा-सहितायाम्, कारकप्रकरणे, पृ० ४११।

एवञ्च प्रयोजनाभावात् कर्मसंज्ञा-सूत्रे तमपो ग्रहणं न कार्यम्। अतः "तथा-युक्तञ्चानीप्सितम्" (१।४।५०) इत्यादिसूत्रोदाहरणेष्वपि सर्वत्र कर्मत्वस्य सिद्धत्वात् "तथायुक्तञ्चानीप्सित"मित्यादि सप्त सूत्राणि प्रत्याख्येयान्येवेति कारिकार्थः।

## तमब्ग्रहणं प्रत्याख्येयमिति भर्तृहरिसिद्धान्तः

एवं सन्दर्भमाश्रित्यान्योऽपि विषयो हरिग्रन्थादवगम्यते यत् कर्मसंज्ञा-सूत्रे तमपोऽभावेन कर्मत्वस्य, "स्पृहेरीप्सितः" (१।४।३६) इति सूत्रविहितसम्प्रदानत्वस्य चोभयोरपीप्सितविषयत्वाविशेषात् स्पृहयतियोग उभयोः प्राप्तौ पचत्यादौ चरितार्थस्य कर्मत्वस्य स्पृहयतियोगे विशेषविहितेन सम्प्रदानत्वेन बाधः। एवं शेषषष्ठ्या अप्यनेन सम्प्रदानत्वेन बाधः। अतः स्पृहयतियोगे 'पुष्पेभ्यस्स्पृहयती'ति सम्प्रदानत्व-मूलिका चतुर्थीविभक्तिरेव साध्वी। कर्मत्वशेषत्वयोर्बाधितत्वान्न द्वितीया-षष्ठ्यौ। एष चार्थस्सम्प्रदानसंज्ञाधिकारे—

"हेतुत्वे कर्मसंज्ञायां शेषत्वे वापि कारकम्।
ऋच्यर्थादिषु शास्त्रेण सम्प्रदानाख्यमुच्यते"॥

इति [1]कारिकया हरिणा प्रादर्शि। विवृतश्चायमर्थस्तत्रैव हेलाराजेन।

## यथैवैकमित्यादिश्लोकस्थदृष्टान्तवार्त्तान्तपर्यालोचनम्

भाष्यकृताऽपादानप्रकरणे "ध्रुवमपायेऽपादान"मिति प्रथमसूत्रेणापादानत्वं संसाध्य "भीत्रार्थानां भयहेतुः" (पा० सू० १।४।२५) इत्यादिसूत्राणि प्रत्याख्यातानि। एतच्चांशतो निरूपितमेव। कर्मसंज्ञाप्रकरणे प्रथमसूत्रे तमब्ग्रहणं परित्यज्य तत्सूत्रेणैव सर्वत्र कर्मत्वं संसाध्य "तथायुक्तञ्चानीप्सितमित्यादिसूत्राणि भाष्यकृता न प्रत्याख्यातानि। नाऽपि तदर्थस्सूचितः। परन्तु न्यायसाम्याद्भर्तृहरिणैष नवीनः पन्थाः प्रादर्शि। तत्र स्वोप-दर्शिते मार्गे पाठकानामश्रद्धेयत्वनिराकरणाय यथैवैकमित्यादिकारिका-पूर्वार्धेना-पादानप्रकरणस्थभाष्यार्थो दृष्टान्ततया न्यरूपि। तमपोऽभावेऽपि न कापि क्षतिरित्यपि निगूढाभिप्रायो भर्तृहरेः। तमेवाशयं विस्तरेण प्रादर्शयद्धेलाराजः। "एवं कर्मापीप्सित-तममेकमेव, कर्तुः क्रियया आप्यमानस्य सर्वत्र भावात्। मन्दबुद्ध्यनुग्रहायोत्तरसूत्र-प्रपञ्च इति कारिकार्थः" इति तत्रत्यो हेलाराजग्रन्थः[2]। अनेनैवाशयेन सम्प्रदाना-धिकारे "हेतुत्वे कर्मसंज्ञायाम्" इत्यादिकारिकया सम्प्रदानत्वस्य कर्मत्वशेषत्वबाधकत्वं प्रत्यपाद्यत।

---

१. वाक्यपदीये तृतीयकाण्डे, अम्बाकर्त्रीसहिते, साधनसमुद्देशे सम्प्रदानाधिकारे, पृ० ११७, १३०।

२. तत्रैव, प्रकीर्णप्रकाशे—पृ० २२४।

### तमब्ग्रहणप्रत्याख्याने हरिसम्मतिः

अत्र कश्चन प्रश्नः—तमब्ग्रहणप्रत्याख्यानं हरेस्सम्मतं न वेति विचारः। "यथैवेकमपादानमि"त्यादिकारिकया तमब्ग्रहणं प्रत्याख्येयमित्यर्थो न लभ्यते। केवलमेकसूत्रेण सिद्धे "तथायुक्तञ्चानीप्सितमि"त्यादिसूत्रान्तराणां प्रयोजनं स्पष्टप्रतिपत्त्यर्थमित्येवोक्तं कारिकया।

### समाधानम्

विना तमब्ग्रहणप्रत्याख्यानं प्रथमसूत्रेण सर्वत्रानिर्वाहात्तत्प्रत्याख्यानमपि कारिकया गर्भीकृतमेव।

### समीक्षा

महानुभावेन शब्दब्रह्मविदा गुरुणा भर्तृहरिणा निरुक्तदिशा नूतनपन्था अन्वसारि। परन्त्वनन्तरकालिकाश्शास्त्रव्याख्यातारो भर्तृहरेर्नूतनपथं नानुमन्वते। तथा हि—

### हरदत्तमतम्

"स्पृहेरीप्सितः" (१।४।३६) इति सूत्रे काशिकावृत्तेर्व्याख्याने पदमञ्जरीग्रन्थे[1] हरदत्तमिश्रेणैवमुक्तम्—"ईप्सितमात्र इयं संज्ञा, प्रकर्षविवक्षायां परत्वात् कर्मसंज्ञैव भवति। पुष्पाणि स्पृहयति। यदा त्वीप्सितमीप्सिततमं वा शेषत्वेन विवक्ष्यते तदा षष्ठी भवती"ति।

### हरदत्ताशयविवरणम्

कर्मसंज्ञा-सूत्रे तमपस्सत्त्वेन धातुवाच्यफलाश्रयस्यैव कर्मत्वम्। सम्प्रदानसंज्ञाविधायकसूत्रे तमपोऽभावेन फलस्य धातुवाच्यत्वे नाग्रहः। एवञ्च स्पृहयतेरिच्छामात्रवाचित्वे फलस्य धात्ववाच्यत्वेन तत्र कर्मत्वाप्राप्त्या सम्प्रदानत्वाच्चतुर्थी। स्पृहयतेरिच्छानुकूलव्यापारमात्रवाचित्वे स्विच्छारूपधात्वर्थफलाश्रयत्वेन सम्प्रदानत्वबाधनेन परत्वात् कर्मसंज्ञा। ईप्सितेप्सिततमयोरुभयोरपि शेषत्वेन विवक्षायां षष्ठ्येव। तथा चेप्सितमात्रे = धात्ववाच्यफलाश्रयत्व इयं सम्प्रदानसंज्ञा। प्रकर्षविवक्षायान्तु = फलस्य धातुवाच्यत्वविवक्षायान्त्वीप्सिततमस्यापीप्सितत्वेन सम्प्रदानत्वकर्मत्वयोरुभयोरपि प्राप्तौ परत्वात् कर्मसंज्ञैवेति हरदत्तग्रन्थार्थः। तस्मिन् ग्रन्थे तमब्ग्रहणाग्रहणमूलिका विषयव्यवस्था प्रादर्शि। अनेन तमब्ग्रहणप्रत्याख्यानरीतिर्हरदत्तेन नाभ्युपेयत इति स्पष्टमवगम्यते। भर्तृहरौ नामनिर्देशनपूर्वकं दोषोद्भावनमयुक्तमिति मन्वानो हरदत्तस्स्वीयविषयप्रदर्शनमात्रेण तत्राविश्वासं व्यञ्जयति।

---

१. पदमञ्जर्याम् पृ० ५५१।

### भट्टोजिदीक्षितमतम्

श्रीमान् भट्टोजिदीक्षितोऽपि "स्पृहेरीप्सितः" (पा० सू० १।४।३६) इति सूत्रे [1]प्रौढमनोरमायां कर्मत्वसम्प्रदानत्वशेषत्वानां बाध्यबाधकभावोऽस्तीति हरि-हेलाराजयोराशयञ्च विविच्य पार्थक्येन प्रादर्शयत्। तत्र हरिहेलाराजयोस्त्विति-तु-शब्देन तन्मतेऽरुचिर्दर्शिता। तद्यथा—"स्पृहेरीप्सितः" इति सूत्रव्याख्यान-सन्दर्भे 'परत्वादि'ति कौमुदीप्रतीकमादाय तेन 'परस्परेण स्पृहणीयशोभम्, स्पृहणीयगुणैर्महात्मभि'रित्यादिसिद्धम्। एतत्सर्वं हरदत्तादिरीत्योक्तम्। वाक्य-पदीयहेलाराजग्रन्थयोस्तु स्पृहयतियोगे कर्मसंज्ञायाश्शेषषष्ठ्याश्च बाधिकेयं सम्प्रदान-संज्ञेति स्थितम्। तन्मते स्पृहणीयमित्यत्र 'दानीयः' इतिवत् सम्प्रदाने कृत्यः। 'कुमार्य इवे'त्यत्र तु विभक्तिविपरिणामेन कान्ताय स्पृहयन्तीति व्याख्येयमिति दीक्षितेनाऽभाणि।

### हरिदीक्षितमतम्

प्रौढमनोरमा-व्याख्याने शब्दरत्नेऽपि[2] कर्मत्वादीनां बाध्यबाधकभावाभावमेव स्पष्टीचकार हरदत्तः। "षष्ठ्यपवादत्वाच्छेषत्वविवक्षा कर्तुमशक्येत्यभिमान" इति तत्रत्यो ग्रन्थः।

### भावप्रकाशकारमतम्

शब्दरत्नव्याख्याता वैद्यनाथोऽपि स्वीयभावप्रकाशे[3] कर्मत्वसम्प्रदानत्व-शेषत्वानां बाध्यबाधकभावाभावमेव स्पष्टं प्रत्यपीपदत्।

### खण्डदेवमतम्

[4]भाट्टरहस्ये श्रीमान् खण्डदेवोऽपि पूर्वोक्तमतद्वयं प्रदर्श्य भर्तृहरिमतस्याना-देयत्वं स्पष्टीचकार। "तेन निरवकाशत्वात् सम्प्रदानसंज्ञा कर्मसंज्ञा-शेषषष्ठ्योर्बाधि-केति वाक्यपदीयप्रभृतयः। वस्तुतस्तत्रीप्सितग्रहणादीप्सिततमत्वप्रयुक्तकर्मसंज्ञाया-स्सम्बन्धसामान्यप्रयुक्तशेषषष्ठ्या वा बाधे प्रमाणाभावः ..."इत्याद्युक्त्वा अन्ते कर्मत्वविवक्षायां पुष्पस्य स्पृहयतीति स्पष्टमुक्तं महानुभावेन खण्डदेवेन।

---

१. प्रौढमनोरमा-ग्रन्थे, लघुशब्दरत्न-भैरवीभावप्रकाशसरलाख्यव्याख्यानचतुष्टयसहिते, कारक-प्रकरणे, पृ० ९-१०।

२. प्रौढमनोरमा-व्याख्याने, शब्दरत्ने, कारकप्रकरणे, पृ० ९-१०।

३. भावप्रकाशे, लघुशब्दरत्नव्याख्याने, कारकप्रकरणे, पृ० ९-१०।

४. भाट्टरहस्ये, मूलग्रन्थे द्वितीयभागे चतुर्थ्यर्थविचारे, पृ० २५५,-२५६।

## नागेशभट्टमतम्

वैयाकरणनागेशोऽपि वैयाकरणसिद्धान्तलघुमञ्जूषायां सुबर्थविचारे[१], लघुशब्देन्दुशेखरे कारकप्रकरणे[२] च कर्मत्वसम्प्रदानत्वशेषत्वानां बाध्यबाधकभावाभावमेव न्यरूपयत् ।

एवं पर्यालोचने भर्तृहरिप्रदर्शिते नूतनपथेऽनन्तरकालिका व्याख्यातारो वैमत्यमेव प्रदर्शयन्निति स्पष्टमवगम्यते । 'पुष्पेभ्यः स्पृहयती'त्यत्र स्पृहयतियोगे विभक्तित्रयमपि साध्वेव । अत एव स्पृहयतियोगे विभक्तित्रयमपि दरीदृश्यते महाकविप्रयोगेषु । तद्यथा—

"स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समस्समुन्नतेः"[३] ॥

"परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजनिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत्"[४] ॥

"परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजनिष्यत् ।
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत्"[५] ॥

"[६]स्त्रीषु प्रवीरजननी जननी तवैव देवी स्वयं भगवती गिरिजाऽपि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोकव्रीडाविदीर्णहृदया स्पृहयाम्बभूव" ॥

अत एव 'स्पृहयन्ति गुणान् मनीषिणः परिवादन्तु परस्य दुर्जनः' इति, 'कुमार्य एव कान्तस्य त्रस्यन्ति स्पृहयन्ति च' इति प्रयोग उपपद्यत इति स्पष्टमाह गोकुलनाथः [७]पदवाक्यरत्नाकरे । भर्तृहरिमतेऽप्येते प्रयोगा अगत्या साध्या भवेयुरेव ।

---

१. वैयाकरणसिद्धान्तलघुमञ्जूषा-ग्रन्थे, कला-टीका-सहिते, सुबर्थविचारे, पृ० १२७३ ।

२ लघुशब्देन्दुशेखरग्रन्थे—सचन्द्रकलाके, कारकप्रकरणे, पृ० ६७५ ।

३. किरातार्जुनीये—२।४३, पृ० ४३ ।

४. "कालिदासग्रन्थावली" नामकग्रन्थे—रघुवंशे—७।१४, पृ० १५१ ।

५. तत्रैव, कुमारसम्भवे—७।६६, पृ० ८९ ।

६. अनर्घराघवे –४।३३, पृ० २२४ ।

७. पदवाक्यरत्नाकरे—सप्तदशप्रकरणे, पृ० ७१३ ।

एवञ्च कर्मसंज्ञा-सूत्र ईप्सिततमत्वं प्रकृतधात्वर्थप्रधानीभूतव्यापारप्रयोज्य-प्रकृतधात्वर्थफलाश्रयत्वेनेच्छाविषयत्वम्, तमपस्सत्त्वात् । अपादानसंज्ञा-विधायक-सूत्रे तु धात्वर्थव्यापारप्रयोज्यधात्वर्थफलाश्रयत्वमीप्सितत्वम् । व्यापारे प्रधानेति विशेषणं न दीयते, तमपोऽभावादिति विवेकः ।

### द्वितीया समीक्षा

निरुक्तदिशा कर्मत्वसम्प्रदानत्वशेषत्वानां बाध्यबाधकभावं स्वीकुर्वतां मत-मेकम् । तदस्वीकुर्वतां मतं द्वितीयम् । द्वितीयमतमवलम्बमाना हरदत्तादयः प्रथममते वैमत्यं प्रादर्शयन् । तच्चायुक्तम् । तन्मते कर्मसंज्ञा-सूत्रे तमपोऽभावेन तन्मते बाध्य-बाधकभावस्य सुघटत्वात् । एवञ्च कथं वा तन्मतनिराकरणं सङ्गच्छते नव्यव्याख्या-तृणामिति तेषु कश्चनायमाक्षेपोऽवशिष्यते ।

### वारणार्थानामीप्सित इति सूत्रस्यार्थान्तरकल्पनम्

कर्मसंज्ञाविधायकसूत्रे तमपोऽभावे 'यवेभ्यो गां वारयती'त्यादौ कर्मत्वसम्प्रदा-नत्वयोर्विषयव्यवस्था दुरुपपादा स्यात् । तत्सत्त्वे त्वीप्सितेऽपादानत्वमीप्सिततमे कर्मत्व-मिति तद्व्यवस्था सिद्ध्यति । न च वारणार्थानां=वारयितव्यानां=प्रतिषेद्धव्याना-मीप्सितोऽर्थोऽपादानं स्यादिति सूत्रार्थस्वीकारेण न दोष इति वाच्यम्, तस्यार्थस्य भाष्यानुक्तत्वेनाऽप्रामाणिकत्वात् ।

### अत्रैव वार्तिकविरोधः

किञ्च "वारणार्थानामीप्सितः" इति सूत्रे 'अग्नेर्माणवकं वारयती'त्यत्र माणवके अपादानत्वमाशङ्क्य कर्मणो यदीप्सितं तदपादानमित्यर्थकेन कर्मणा यदीप्सितमिति वचनेन वार्तिककृता परिहृतम् । पूर्वोक्तार्थस्वीकारे तु सूत्रेणैव तद्वारणसम्भवाद्वार्तिककारस्य वचनान्तरानुधावनं निष्फलमेव स्यात् ।

### अत्र भाष्यविरोधः

किञ्च माणवकेऽतिव्याप्तिवारणपरं "कर्मणो यदीप्सितमिति" वचनं "वारणार्थेषु कर्मग्रहणानर्थक्यं, किं कारणम् ?" कर्तुरीप्सिततमं कर्मेति वचना-दिति भाष्येण[१] प्रत्याख्यायि । माणवके अपादानत्वं प्राप्नोति । तच्च कर्मत्वेन बाध्यत इति खलु तस्याशयः । ईप्सिते अपादानत्वं चरितार्थम् । वारयतिव्यतिरेके पचत्यादौ कर्मत्वञ्चरितार्थम् । ईप्सिततम उभयप्राप्तौ परत्वात् कर्मत्वमिति भाष्यकृतो भावः । तमपोऽभावेऽपादानत्वबाधनं कर्मत्वस्य न घटेत ।

---

१. पातञ्जलमहाभाष्ये —प्रदीपोद्द्योतसहिते प्रथमाध्याये तृतीयपादे तृतीयाह्निके, २७ सूत्रे, पृ० ३६४ ।

### हरिग्रन्थस्य युक्तत्वपूर्वपक्षः

"वारणार्थानामीप्सितः" (पा० सू० १।४।२७) इति सूत्रे ईप्सित इति क्तार्थकर्मणा कर्तुराक्षेपोऽङ्गीकृतः। तद्वत् कर्मसंज्ञासूत्रेऽपि 'ईप्सित' इति कर्मणा कर्तुराक्षेपेणैव सिद्धौ पुनः कर्तृग्रहणेन प्रकर्षलाभसम्भवान्माणवकादेः कर्मत्वसिद्ध्या तमब्ग्रहण-प्रत्याख्यानस्यैव निरुक्तभाष्यात् प्रतीत्या हर्याद्युक्तं युक्तमेव। अत एव भाष्यकृता तमब्ग्रहणादिति नोक्तम्। किन्तु "कर्तुरीप्सिततमं कर्म" इति वचना-दित्येवोक्तमिति।

### समाधानम्

लघुना तमब्ग्रहणेन सिद्धे कर्मसंज्ञाविधायकसूत्रे "कर्तुरीप्सिततमं कर्म" ( पा० सू० १।४।४९ ) इत्यत्र कर्तुरित्यस्य प्रत्याख्याने भाष्यतात्पर्यात्। स्पष्टञ्चेदं "वारणार्थानामीप्सितः" इति सूत्रे भाष्यप्रदीपोद्द्योते[1]। अत एव "कर्तुरीप्सिततमं कर्म" इति सूत्रे भाष्ये तमब्ग्रहणस्यैव माणवके अपादानत्ववारणेन कर्मत्वसिद्धिः फलं प्रत्यपादि। तथा च भाष्यम्—"इह पुनस्तमब्ग्रहणे क्रियमाणे तदुपपन्नं भवति। वारणार्थेषु कर्मग्रहणानर्थक्यम्, 'कर्तुरीप्सिततमं कर्म' इति वचना"दिति। अत एव भाष्ये तमब्ग्रहणस्य प्रयोजनमुक्त्वा कर्तुरित्यस्य प्रयोजनं नोपन्यस्तम्।

### तमब्ग्रहणस्यावश्यकत्वप्रतिपादनम्

किञ्च कर्मसंज्ञाविधायकसूत्रे तमपोऽभावे यदा पुष्ट्यर्थं माषभक्षणाय माषक्षेत्र एवाश्वबन्धनं, तदा 'माषेष्वश्वं बध्नाती'त्यत्र माषाणां कर्मत्वापत्तिः। माषेषु प्रसक्तमश्वं माषनाशो मा भूदित्यन्यत्र बध्नातीत्यर्थस्वीकारे कर्तृग्रहणेन माषाणां कर्मत्ववारणेऽपि निरुक्तार्थस्वीकारे तदयोगात्। किञ्चात्र तमपोऽभावे "वारणार्थानामीप्सितः" (पा० सू० १।४।२७) इति सूत्रमस्यापवादस्स्यात्। वारयतिमात्र-व्यतिरेकस्यापादानत्वस्य निरवकाशत्वात्। पच्यादियोगे कर्मत्वस्य चरितार्थत्वात्। उभयोरपीप्सितत्वमात्रविषयकत्वात्। तथा 'चाग्नेर्माणवकं वारयती'त्यादावग्नि-माणवकयोरुभयोरप्यपादानत्वापत्त्या माणवकस्य कर्मत्वं न स्यात्। न च कर्मत्वाऽ-प्राप्तियोग्येऽग्नावपादानत्वस्य चारितार्थ्यं शङ्क्यम्। संयोगाद्यनुकूलव्यापारा-भावानुकूलव्यापारार्थकत्वाद्वारयतेस्तदुपस्थाप्यसंयोगरूपफलाश्रयत्वेन अग्नेरपि कर्म-त्वादेर्दुर्वारत्वात्।

---

१. पातञ्जलमहाभाष्ये—प्रदीपोद्द्योतसहिते, प्रथमाध्याये, चतुर्थपादे, तृतीयाह्निके, ४९ सूत्रे, पृ० ३७५।

न च कर्मसंज्ञाविधायकसूत्रे कर्तृग्रहणेन कर्तृव्यापारप्रयोज्यफलाश्रयस्य कर्मत्वलाभेन अग्नौ तत्त्वाभावात् तत्रापादानत्वस्य चारितार्थ्यं शङ्क्यम्। कर्तृग्रहणेन कर्तृव्यापारवाचकधातूपस्थाप्यफलाश्रयत्वमित्यर्थस्यैव लाभेन फले व्यापारप्रयोज्यत्वालाभेन निरुक्तरीत्याऽग्नावपि कर्मत्वस्यानिवारणात्। कर्तृव्यापारः= अन्तिमव्यापारश्चैत्रनिष्ठः, तद्वाचको धातुर्वारयतिः, तदुपस्थाप्यं फलमभाव इव संयोगोऽपि स्यादिति दोषतादवस्थ्यमेव। नाऽपि कर्मसंज्ञा-सूत्र ईप्सितशब्दस्याभिप्रेतपरत्वेनाग्नेरनीप्सितत्वेन कर्मत्वाऽप्राप्त्या तत्रापादानत्वस्य चरितार्थतया कथमपवादत्वमिति भ्रमितव्यम्। "वारणार्थानामीप्सितः" (पा० सू० १।४।२७) इति सूत्रस्थभाष्येणोभयत्रापीप्सितशब्दः "क्रियाशब्दो, न त्वभिप्रेतपरो रूढः" इति लाभादपवादस्य सुदृढत्वात्। अतः कर्मसंज्ञा-सूत्रे तमब्ग्रहणमावश्यकमेव, नैव प्रत्याख्येयम्।

## ईप्सितशब्दो न रूढः, किन्तु क्रियापर इति विषयसमर्थनम्

"वारणार्थानामीप्सितः" इति सूत्रे भाष्ये[1] उक्तम्—"किमुदाहरणम्? माषेभ्यो गां वारयति, भवेद्यस्य माषा न गावः। तस्य माषा ईप्सितास्स्युः। तस्याऽपि माषा एव ईप्सिताः, अतश्चेप्सिता यदेभ्यो गां वारयति" इति। यस्य गावो न माषास्तत्र माषाणां कथमपवादत्वम्? तेषां परकीयत्वेन तस्यानीप्सितत्वादिति शङ्का भाष्ये। सूत्र ईप्सितशब्दोऽभिप्रेतपरो रूढो गृह्यत इत्याशयेन शङ्का। ईप्सितशब्दो न रूढः, किन्तु क्रियापरः। धात्वर्थक्रियाजन्यफलाश्रय इत्यर्थक इत्याशयेन समाधानम्। वारयत्यर्थघटकसंयोगाश्रयत्वेन माषाणामीप्सितत्वमिति तद्भावः।

## अत्रार्थे कर्मसंज्ञा-सूत्रस्थभाष्यप्रामाण्यप्रदर्शनम्

एवं कर्मसंज्ञा-सूत्रस्थभाष्यादप्ययमर्थो[2] लभ्यते। तत्र हि—'दध्ना भुञ्जीय', 'पयसा भुञ्जीय' इत्यत्र दधिपयसोरीप्सितत्वात् कर्मत्वमाशङ्क्य तस्याऽप्योदन एव ईप्सिततमः, न तु गुणेष्वनुरोध इति समाहितम्। सूत्रे अभिप्रेतपरो रूढ ईप्सितशब्द आश्रीयत इति शङ्कितुराशयः। क्रिया-शब्दोऽयं, न रूढ इति समाधातुराशयः। धात्वर्थक्रियाजन्यफलाश्रय इत्यर्थक ईप्सितशब्दः। तेनौदनस्य कर्मत्वम्, न दधिपयसोः। तयोः करणत्वमेवेति तद्भावः। "वारणार्थानामीप्सितः"

---

१. पातञ्जलमहाभाष्ये—प्रदीपोद्द्योतसहिते, प्रथमाध्याये, चतुर्थपादे, तृतीयाह्निके, २७ सूत्रे, पृ० ३६२।

२. तत्रैव, १७, २९ सूत्रयोः पृ० ३६२-३६८।

( १।४।२७ ), "कर्तुरीप्सिततमं कर्म" ( १।४।४९ ) इति सूत्रद्वये भाष्यप्रदीपोद्द्योतयोः स्पष्टमिदम्[५] ।

अतस्तमब्ग्रहणं न प्रत्याख्येयम् ; किन्तु कर्तव्यमेव । कृते तस्मिन् माषाणां कर्मत्ववारणं, माणवकादेः कर्मत्वसिद्धिश्च सुशकम् ।

## भर्तृहरावप्रामाण्यशङ्का

अत्रेयं शङ्का-निरुक्तदिशा कर्मसंज्ञाविधायकसूत्रे "कर्तुरीप्सिततमं कर्म" इत्यत्र कर्तृग्रहणप्रत्याख्यान एव भाष्यतात्पर्यम्, न तु तमब्ग्रहणप्रत्याख्यान इत्यस्मिन् विषये "वारणार्थानामीप्सितः", "कर्तुरीप्सिततमं कर्म" इति सूत्रद्वयस्य भाष्यार्थः प्रमाणतयोपलब्धः । तर्हि तमब्ग्रहणप्रत्याख्यानपरवाक्यपदीयग्रन्थस्याप्रामाण्यं प्रस्फुटीयत इति ।

## अप्रामाण्यशङ्काया निवारणम्

नैतावता गुरौ भर्तृहरावप्रामाण्यशङ्का कार्या । यतो हि महात्मानस्सम्भवमात्राभिप्रायेणान्तरान्तरानुपपन्नानर्थानुत्प्रेक्षन्ते । तावता तेषां तत्रार्थे न निर्भरः । पाठकास्तानर्थान् संशोध्य याथार्थ्यं गृह्णन्त्येवेत्येव तेषां महात्मनां प्रवृत्तिस्तत्र । यथा—महर्षेः कणादस्य वैशेषिकशास्त्रनिर्माणम् । तत्र हि परमाणूनां निरवयवत्वं प्रसाध्य तेषां संयोगाद्द्व्यणुकादिक्रमेण जगदुत्प्रेक्षितम् । महर्षेर्दृष्टिस्तु मायावादे । न हि तावता कणादमुनावविश्वासः प्राज्ञानाम् । तथैव भर्तृहरिरप्यपादानप्रकरणस्थं भाष्यार्थं पर्यालोच्यैषा रीतिरन्यत्रापि सम्भवति न वेत्युत्प्रेक्षयामास ; परन्त्वियान् विशेषो यदपादानप्रकरणेऽविकृतमेव पाणिनीयं सूत्रमास्थितमितरसूत्रप्रत्याख्यानाय भाष्यकृता । भर्तृहरिणा तु सूत्रान्तरप्रत्याख्यानाय पाणिनिसूत्रे तमब्ग्रहणं परित्यक्तम् । हरेरपि तत्परित्यागे न निर्भरः । अन्यथा 'अग्नेर्माणवकं वारयती'त्यत्रापादानत्वकर्मत्वयोर्व्यवस्था तेन प्रदर्शनीया स्यात् । वारणार्थानामित्यस्य वारयितव्यानां=निवार्यमाणानामित्यर्थकरणन्त्वतिफल्गु । तावताऽपि न निस्तारः । पुष्ट्यर्थं माषभक्षणाय माषक्षेत्र एवाश्वं बध्नाति इत्यर्थपरत्वे माषेष्वश्वं बध्नातीत्यत्र माषाणां कर्मत्वापत्तेः दुस्समाधेयत्वात् । हरिहेलाराजाभ्यां निरुक्तार्थे समाधिरप्रदर्शित एव । अतोऽत्रार्थे हरेर्निर्भरो नास्तीत्येव निर्णयः सुकरः । अत एव स्वातन्त्र्यमनवलम्ब्यापादानप्रकरणस्थभाष्यदृष्टान्तेन प्रकृतार्थो गुरुणा शब्दब्रह्मविदा भर्तृहरिणा प्रादर्शि । दृश्यते चेतादृशी सरणिरन्यत्रापि स्थले भर्तृहरेः । यथा—"स्वरितञितः कर्त्रभिप्राये क्रियाफले" ( १।३।७२ ) इति सूत्रं प्रथमं भाष्याशयानुसारं व्याख्याय कर्तृगामिनि

क्रियाफले तदुपलक्षिते संविधाने वर्तमानात् स्वरितेतो ञितश्च धातोरात्मनेपदं स्यादिति व्याख्याय, पश्चात्—

"क्रियाप्रवृत्तावाख्याता केश्चित् स्वार्थपरार्थता।
असती वा सती वाऽपि विवक्षितनिबन्धना"[१] ॥

इति कारिकया प्रकारान्तरेणोपग्रहसमुद्देशे भर्तृहरिणा व्याख्यातम्। क्रिया-जन्यफलस्य कर्तृगामित्वे स्वरितञितो धातोरात्मनेपदं स्यादिति तदाशयः। अन्यथा परस्मैपदम्। मतान्तरेण प्रदर्शिता द्वितीयव्याख्यैव परमसिद्धान्ततया वैयाकरणलोकेन परिगृह्यते। बहवो व्याख्यातारो 'नागेशः कुरुते'[२] इत्यादौ यशोरूपफलस्य कर्तृगामि-त्वादात्मनेपदमिति भाष्यसम्मतप्रथमपक्षस्वरूपमपि न जानते।

तथा "समर्थः पदविधिः" इति सूत्रे उपसर्जनपदार्थे संख्या-विशेषो वृत्तौ न भासत इति भाष्यकृता प्रत्यपादि। "संख्या-विशेषो भवति वाक्ये—राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां पुरुष इति, समासे न भवति। अस्ति कारणं येनैतदेवं भवति। किं कारणम्? योऽसौ विशेषवाची शब्दस्तदसान्निध्यादि"ति तत्रत्यो [३]भाष्यग्रन्थः। राजपुरुष इत्यादौ शक्यतावच्छेदकराजत्वादिरूपेण राज्ञो भानम्। न त्वेकत्वादिसंख्या-वैशिष्ट्येनेति तद्भाष्याशयः। भर्तृहरिणा तु तद्भाष्यार्थतया वाक्यपदीये वृत्तिसमुद्देशे[४] अभेदैकत्वसंख्या महता प्रबन्धेन प्रादर्शि। वस्तुतस्त्वभेदैकत्वसंख्येति व्यवहारो भाष्ये क्वापि नास्ति। तद्भानप्रसक्तिरपि भाष्ये कुत्रापि नैव सूचिता भगवता पतञ्जलिना।

तद्वदेव "कर्तुरीप्सिततमं कर्म" (१।४।४९) इति सूत्रे तमपः परित्यागेन तत्प्रथमसूत्रेणैव "तथायुक्तञ्चानीप्सितम्" (१।४।५०) इत्याद्युत्तरसूत्रेषु सर्वेष्वपीप्सि-तत्वमात्रेण कर्मत्वं सम्पाद्यावशिष्टकर्मसंज्ञाप्रकरणप्रत्याख्यानमपि भर्तृहर्युपज्ञमेव। तावता न महात्मनि तस्मिन्नप्रामाण्यशङ्कावकाशः।

अतः स्पृहयतियोगे विवक्षा-भेदेन द्वितीया-चतुर्थ्योष्षष्ठ्याश्च साधुत्वे न किञ्चिद्बाधकमित्येतत्प्रघट्टकार्थः।

---

१. वाक्यपदीये तृतीयकाण्डे, अम्बाकर्त्रीसहिते, उपग्रहसमुद्देशे, श्लो० ५, पृ० ६८०।

२. परिभाषेन्दुशेखरव्याख्यायाम्—"भैरवी"नामिकायाम्, पृ० २।

३. पातञ्जले महाभाष्ये—प्रदीपोद्द्योतसहिते, द्वितीयाध्याये प्रथमपादे प्रथमाह्निके प्रथमसूत्रे, पृ० १२३-१३०।

४. वाक्यपदीये द्वितीयभागे, तृतीयकाण्डे, अम्बाकर्त्रीसहिते, वृत्तिसमुद्देशे, पृ० १२१-१०१।

अत्रेदं तत्त्वम्—भाष्यकारेण "ध्रुवमपायेऽपादान"मित्यनेनैव सर्वलक्ष्यसङ्ग्रहाद् अवशिष्टमपादानप्रकरणं प्रत्याख्यातम् । तमपादानप्रकरणप्रत्याख्यानरूपं भाष्यार्थं दृष्टान्तीकृत्य भर्तृहरिणा तमब्ग्रहणप्रत्याख्यानद्वारा "कर्तुरीप्सिततमं कर्म" इति प्रथम-सूत्रमपहायातिरिक्तं कर्मसंज्ञाप्रकरणं प्रत्याख्यातम् । परन्तु भाष्ये कुत्रापि कर्मसंज्ञा-प्रकरणप्रत्याख्यानं नास्ति । नापि तदर्थो ध्वनितः । अपादानप्रकरणवत् कर्मसंज्ञा-प्रकरणप्रत्याख्यानं भर्तृहरिणा कृतं यत् तत्सर्वं भर्तृहर्युपज्ञमेव । एवं रीत्यापि कर्मसंज्ञा-प्रकरणप्रत्याख्यानं सम्भावयितुं शक्यत इत्येव भर्तृहरेराशयः । वस्तुतः कर्मसंज्ञाप्रकरणप्रत्याख्याने भर्तृहरेरपि नैर्भयं नास्ति इत्येतादृशं हरेराशयं विशिष्या-स्मिन् विषये मया कृतं परिश्रमं मादृशानां संस्कृतज्ञानां, शास्त्रज्ञानां च विज्ञापयितु-मेव ममात्र प्रवृत्तिर्जाता, न तु महानुभावस्य गुरोर्भर्तृहरेरुपरि दोषारोपणं कर्तुमिति साञ्जलिबद्धं विनिवेदयामि ।

### मीमांसकमतरीत्या तथायुक्तञ्चानीप्सितमित्यादिसूत्राणां लाक्षणिकार्थबोधकत्वप्रतिपादनम्

न्यायसुधाकारो भट्टसोमेश्वरः "कर्तुरीप्सिततमं कर्म" इति प्रथमसूत्रं शक्यार्थ-बोधकम् । अवशिष्टानि तथायुक्तञ्चानीप्सितमित्यादीनि सर्वाणि कर्मसंज्ञाविधायक-सूत्राणि लक्ष्यार्थबोधकानि । तथायुक्तञ्चानीप्सितमित्यादिसर्वेषामपि सूत्राणां शक्यार्थबोधकत्वे तु, तेषु क्रियाजनकत्वरूपशक्तेरभावात् शक्यतावच्छेदकैक्याभावेन तेषु सूत्रेष्वनेकशक्यतावच्छेदककल्पनाद्वारा अनेकशक्तिकल्पने गौरवापत्तेः । अतः "कर्तुरीप्सिततमं कर्म" इति सूत्रे तमब्ग्रहणबलात् तत्सूत्रमपहाय अवशिष्टकर्मसंज्ञा-विधायकसूत्राणि सर्वाण्यपि लक्ष्यार्थबोधकान्येवेति द्वितीयाध्याये प्रथमपादे पञ्चमे सम्मार्गाधिकरणे प्रत्यपादयत् ।

### न्यायसुधाकारादिमीमांसकमतखण्डनम्

तन्न युक्तम् । तन्मते सूत्रद्वयबलेन कर्मत्वस्य अनेकविधत्वावगमाद्गौरवम् । न चैकत्र शक्तिरपरत्र लक्षणेति वाच्यम्, कुत्र शक्तिः ? कुत्र लक्षणेत्यत्र विनिगमना-विरहात् । तथा च सर्वेषां वाच्यत्वापत्तौ शक्यतावच्छेदकैक्याभावेनानेकशक्तिकल्पना-पत्तेर्दुर्वारत्वात् । अत ईप्सितानीप्सितसाधारण्येन व्याप्यत्वापरपर्यायस्य क्रियाजन्य-फलाश्रयत्वरूपस्य कर्मत्वस्य, तत्समनियताखण्डोपाधेर्वा द्वितीयावाच्यत्वं युक्तम् । अपि च तथायुक्तञ्चानीप्सितमित्यादिसूत्राणां लक्ष्यार्थबोधकत्वे प्रथमसूत्रे शक्तिः, उत्तरसूत्रेषु लक्षणेति वृत्तिद्वयकल्पने गौरवापत्तेः । जघन्यवृत्तिकल्पने मानाभावाच्च । अपि च पाणिनि-कात्यायन-पतञ्जलिभिस्सर्वेषां सूत्राणां तत्तदर्थेषु शक्तिः कल्पिता ।

ते त्रयो महर्षिकोटावग्रगण्याः। तैः परिकल्पितं सर्वेषां सूत्राणां शक्यार्थबोधकत्वं यद्वर्तते, तदुल्लङ्घ्य स्वातन्त्र्यमवलम्ब्य न्यायसुधाकारादिभिर्मीमांसकैः परिकल्पितं सर्वेषां सूत्राणां लक्ष्यार्थबोधकत्वं केवलं साहसमात्रमेव । क्षन्तव्यं किञ्चिदुद्ग्रन्थ-लेखनेन ।

उपर्युक्तरीत्या वैयाकरणानां मते लक्षणाया अभावात् "कर्तुरीप्सिततमं कर्म" इति सूत्रमिव तथा युक्तञ्चानीप्सितमित्यादिसूत्राण्यपि शक्यार्थबोधकान्येवेति वैयाकरणानामाशय इत्यलमतिविस्तरेण ।

अत्रेदं किञ्चिद्विज्ञापनीयम्—लोके सर्वाणि शास्त्राणि महत्त्वपूर्णानि। तत्तच्छास्त्रप्रवर्तका अपि महान्तो विद्वन्मूर्धन्यास्सन्ति । तैस्तत्तच्छास्त्रसम्प्रदाय-संरक्षणाय स्वस्वसिद्धान्ता व्यधायिषत । अहं व्याकरणसिद्धान्तसमन्वयसन्दर्भे वैयाकरणभूमिकां श्रुत्वा नैयायिकमीमांसकानां मतोपरि सविमर्शं किञ्चिदलिखम् । पदार्थपरिशोधनं प्रधानं लक्ष्यमभिलक्ष्य मेऽत्र प्रवृत्तिस्सञ्जाता, न तु विद्वन्मूर्धन्यानां तेषामुपरि दोषारोपणं कर्तुमिति सविनयं सम्प्रार्थ्य सर्वेषां पण्डितप्रकाण्डानां सविधेऽहं विनीतो बद्धाञ्जलिश्च भवामि ।

## ख. "अष्टनो दीर्घात्" इति सूत्रस्थदीर्घग्रहणज्ञापकत्वविचारः

"अष्टन आ विभक्तौ" इति सूत्रे[1] "रायो हलि" इति सूत्रात् हलीत्यपकृष्यते। तच्च विभक्तेर्विशेषणम् । तेन "यस्मिन् विधिस्तदादावल्ग्रहणे" इति परिभाषया तदादिविधिः। तथा चाष्टन आत्वं स्याद् हलादौ विभक्ताविति सूत्रार्थः। अनन्तर-सूत्रं "अष्टाभ्य औश्" इति। अत्र सूत्रे "अष्टाभ्यः" इति कृतात्वस्यानुकरणम्। ननु "अष्टाभ्य औश्" इति सूत्रेण कृताकारादित्यर्थः कथं लभ्यत इति चेत्, न, तथा सति लाघवादष्टभ्य इत्येव वक्तव्ये "अष्टाभ्य" इति कृतात्वनिर्देशो जश्शसो-र्विषये हलादिविभक्तिपरकत्वाभावेऽप्यात्वं ज्ञापयति ।

ननु "अष्टन आ विभक्तौ" इति सूत्रे वा इति पदं न विद्यते। नापि तत्पदमनुवर्तते। तथा चात्वस्य नित्यतया तस्याविवक्षणेन लाघवादष्टभ्य इत्येव वक्तव्ये "अष्टाभ्य" इति दीर्घोच्चारणमयुक्तमिति चेत्, न, "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणज्ञापकेनाष्टन आत्वं विकल्पेन भवतीति न दोषः। तथा हि—"अष्टनो दीर्घात्" इति पाणिनिसूत्रम्। दीर्घान्तादष्टनः परा असर्वनामस्थानविभक्तिरुदात्ता स्यादिति तत्सूत्रार्थः। अष्टाभिरित्युदाहरणम्। तत्र सूत्रे दीर्घग्रहणं ह्रस्वान्ता-

१. वैयाकरणसिद्धान्तकौमुदीग्रन्थे, हलन्तपुंलिङ्गप्रकरणे, ३८४ पृष्ठे, सूत्रसंख्या—७।२।८४।

दष्टनः पराया विभक्तेः अष्टनस्वरवारणाय कृतम्। यद्यात्वं नित्यमेव स्यात् तदा ह्रस्वान्ताष्टन्-शब्दस्यैवाभावेन ह्रस्वान्ताद् अष्टन्-शब्दात् पराया विभक्तेरभावेन तत्र स्वरव्यावृत्त्यर्थं क्रियमाणं दीर्घग्रहणं व्यर्थं स्यात्। तद्व्यर्थीभूयात्वस्य वैकल्पिकत्वं ज्ञापयति। तथा च अष्टभिरित्यत्र ह्रस्वान्ताष्टन्-शब्दात् पराया विभक्तेस्स्वर-व्यावृत्त्यर्थं "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणं स्वांशे चरितार्थम्। अष्ट-भिरिति प्रत्युदाहरणे "षट्-त्रिचतुर्भ्यो हलादि"रिति षट्स्वरं बाधित्वा उपोत्तमस्वरः प्रवर्तते। तेनाष्टाभिरित्यत्र द्वितीयाकारः अन्तोदात्तः, अष्टभिरित्यत्र टकारोत्तरा-कारो मध्योदात्त इति विवेकः।

**प्रकारत्रयेण दीर्घग्रहणस्य ज्ञापकत्वाभावप्रतिपादनं तत्खण्डनपूर्वकं ज्ञापकत्वसमर्थनञ्च**

अष्टन्-शब्दात् तृतीयाबहुवचने "स्वौजसमौट्" इत्यादिसूत्रेण भिस्प्रत्यये, "अष्टन आ विभक्तौ" इति सूत्रेणाष्टन्-शब्दस्यात्वे, अन्तादेशे च कृते अष्टा+भिस् इति जाते कार्यकालपक्षे यदा कार्यं तदा संज्ञेति नियमादष्टेत्यत्र कृतात्वे नान्तत्वा-भावेन "ष्णान्ता षट्" इति सूत्रेण षट्संज्ञायाः अप्रवृत्त्या "षट्त्रिचतुर्भ्यो हलादिः" इति सूत्रस्य वा "झल्युपोत्तम"मित्युपोत्तमस्वरविधायकसूत्रस्य वा अप्रवृत्तौ तत्र "अष्टनो दीर्घात्" इति सूत्रेणाष्टनस्वरः प्रवर्तते। तथा चाष्टाभिरि-त्यत्राष्टनस्वरश्चरितार्थः। 'अष्टभ्य' इत्यत्राष्टनस्वरः प्राप्नोति, "झल्युपोत्तमम्" इत्युपोत्तमोदात्तत्वञ्च प्राप्नोति। तत्र परत्वादष्टनस्वरं बाधित्वा "झल्युपोत्तम"-मित्यस्य प्रवृत्तौ ततः "सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव" इति न्यायेन[1] अष्टनस्वरो न प्रवर्तते। तथा चाष्टभ्य इत्यत्र अष्टनस्वरस्य प्राप्तेरेवाभावाद्दीर्घ-ग्रहणस्य ज्ञापनोत्तरमपि स्वांशे चारितार्थ्यं नास्ति। अतो दीर्घग्रहणस्य ज्ञापकत्वं नैव घटत इति पूर्वः पक्षः।

**स्वांशे चारितार्थ्यप्रदर्शनपूर्वकं दीर्घग्रहणस्य ज्ञापकत्वसमर्थनम्**

अत्रेदं समाधानम्—"अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणज्ञापकतापरभाष्य-प्रामाण्येन[2] सकृद्गतिन्यायस्यानित्यत्वज्ञापनद्वारा पुनः प्रसङ्गन्यायस्य प्रवृत्तिं ज्ञाप-यति। तथा चाष्टभ्य इत्यत्र परत्वाज्झल्युपोत्तमस्वरे कृतेऽपि पुनः प्राप्तस्याष्टनस्वर-वारणाय दीर्घग्रहणं स्वांशे चरितार्थम्।

---

१. परिभाषेन्दुशेखरे-तत्त्वप्रकाशिका-सहिते, सूत्रे, पृ० ७०३।

२. पातञ्जल-महाभाष्ये-प्रदीपोद्द्योतसहिते, षष्ठाध्याये प्रथमपादे षष्ठाह्निके, १७२ सूत्रे, पृ० ७०३।

यद्वा अत्र यथोद्देशपक्ष आश्रीयते। तत्पक्षे भविष्यति किञ्चिदनेन प्रयोजनमित्यभिसन्धिमात्रेणाष्टन्-इत्यस्यान्तरङ्गत्वात् प्रथमं षट्संज्ञायां जातायां कृतात्वेऽपि स्थानिवद्भावेन, "एकदेशविकृतमनन्यवत्" इति परिभाषया[1] वा "अष्टा" इत्याकारान्तस्यापि षट्त्वेन तत्राऽप्यष्टनस्वरं बाधित्वोपोत्तमोदात्तस्वरे प्राप्ते अष्टनस्वरस्य निरवकाशत्वेन अपवादत्वात् प्राप्तस्याष्टनस्वरस्य वारणाय दीर्घग्रहणस्य स्वांशे चारितार्थ्यं निराबाधमेव। नान्तत्वसंख्यावाचकत्वसमानाधिकरणधर्मस्य षट्त्वस्याल्विधित्वाभावान्नात्र "अनल्विधा"विति स्थानिवद्भावनिषेधः। तथा च "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणस्य ज्ञापकत्वं युज्यत एव।

अत्रायं प्रश्नः — यदि अष्टन्निति नान्ते विद्यमानस्य षट्त्वस्य स्थानिवद्भावेनाष्टेत्याकारान्तेऽपि अतिदेशात् कृतात्वस्याष्टेत्याकारान्तस्यापि षट्त्वेन ततः परयोर्जश्शसोः "षड्भ्यो लुक्" इति सूत्रेण लुगापत्तिरिति।

अत्रेदं समाधानम्—यदि अष्टन्निति नान्ते विद्यमानस्य षट्त्वस्य स्थानिवद्भावेनाष्टेत्याकारान्तेऽपि अतिदिश्य ततः "अष्टा" इत्याकारान्तात् परयोर्जश्शसोः षड्भ्यो लुक्" इति सूत्रेण लुक् प्रवर्तेत तदा "अष्टाभ्य औश्" इति सूत्रं सर्वथा निरवकाशं स्यात्। तथा चौश्विधानसामर्थ्यात् "अष्टौ" इत्यत्र लुङ् न प्रवर्तते। अतो दीर्घग्रहणस्य ज्ञापकत्वं युक्तमेव।

### दीर्घग्रहणस्य द्वितीयज्ञापकत्वाभावप्रदर्शनं, तत्खण्डनञ्च

अत्र पुनः पूर्वपक्षः — यदि "अष्टाभ्य औश्" इत्यौश्विधानसामर्थ्यादष्टावित्यत्र लुङ् न भवतीत्युच्यते, तदा"अष्टौ" इत्यत्राष्टन्-शब्दाद्द्वितीयाबहुवचने "स्वौजसमौट्" इत्यादिसूत्रेण 'शस्'प्रत्यये शकारस्यानुबन्धलोपे "अष्टन्+अस्" इति स्थिते "अष्टन आ विभक्तौ" इति सूत्रेणाष्टन आत्वे, "अष्टाभ्य औश्" इति सूत्रेण शसः औशादेशे अष्टा+औ इति स्थिते हलादिविभक्तेरभावेन "षट्त्रिचतुर्भ्यो हलादि"रिति सूत्रेण षट्स्वरस्याप्रवृत्त्या तत्र "अष्टनो दीर्घात्" इत्यष्टनस्वरः प्रवर्तते। "अष्टौ" इत्यत्र एकादेशोत्तरं विभक्तिपरकत्वाभावादष्टनस्वरो न प्रवर्तत इत्यप्ययुक्तम्। "यद्धि तु परम्" इति सूत्रे [2]भाष्ये "स्वरात् पूर्वं सन्धिकार्यं न प्रवर्तते" इति ध्वनितत्वात्। तत्र हि भाष्ये "एह्री"त्यत्र आ+इहीति स्थिते यदि प्रथमत एकादेशः क्रियेत, तदा एहीत्यस्य "तिङ्ङतिङः" इति निघातो न स्याद् इत्युक्तम्। तदा च "नेन्द्रस्य परस्य" इति सामान्यापेक्षं ज्ञापकम्। अनेन भाष्येण स्वरात् पूर्वं सन्धिकार्यं न

---

१. परिभाषेन्दुशेखरे—तत्त्वप्रकाशिका-सहिते, पृ० १४७।

२. पातञ्जल-महाभाष्ये—प्रदीपोद्द्योतसहिते, अष्टमाध्याये, प्रथमपादे द्वितीयाह्निके, ५६ सूत्रे, पृ० ५८-६०।

प्रवर्त्तत इति ध्वनितम्। तथा चाष्टावित्यत्राष्टनस्वरस्य सावकाशत्वाद् दीर्घग्रहणस्य स्वांशे चारितार्थ्याभावात् कथं ज्ञापकत्वमिति।

अत्रेदं समाधानम्—"अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणज्ञापकतापर-भाष्यप्रामाण्येनाष्टन् शब्दस्य घृतादिषु पाठात् "घृतादीनाञ्च" इति सूत्रेण तस्यान्तोदात्तत्वे, तत एकादेशेऽपि "एकादेश उदात्तेनोदात्तः" इति सूत्रेणोदात्त-त्वसिद्धेस्तत्राष्टनस्वरो निरवकाश एव। एवञ्च अष्टाभिरित्यत्र निरवकाशत्वात् प्राप्तस्य अष्टनस्वरस्य वारणाय दीर्घग्रहणस्य स्वांशे चारितार्थ्यं वर्तत इति ज्ञापकत्वं निराबाधम्।

### दीर्घग्रहणस्य तृतीयज्ञापकत्वाभावप्रतिपादनं तत्खण्डनञ्च

अत्र पुनः पूर्वपक्षः—षट्त्स्वरविधायके "षट्त्रिचतुर्भ्यो हलादि"रिति सूत्रे विहितविशेषणमावश्यकम्। तथा च प्रियाष्टाभ्यामित्यादावष्टन्-शब्दाद्विभक्तेर-विधानात् तत्र षटत्स्वरो न प्रवर्तते। तथा च तत्र षट्त्स्वरस्याप्राप्त्या अष्टनस्वरस्य सावकाशत्वाद्दीर्घग्रहणस्य स्वांशे चारितार्थ्याभावात् कथं ज्ञापकत्वं घटते। तत्र षट्स्वरविधायके विहितविशेषणस्वीकारे "चतुरश्शसि" इति सूत्रस्थं "स्त्रियां प्रतिषेधो वाच्यः" इति वार्तिकं, तद्व्याख्यानभाष्यञ्च[1] प्रमाणम्। तथा हि—"चतुरश्शसि" इति सूत्रेण चतुश्शब्दात् पराया विभक्तेरन्तोदात्तत्वं विधीयते। एष स्वरः स्त्रीलिङ्गे "चतस्रः पश्य" इत्यत्र प्राप्नोतीति तत्र तद्वारणाय "स्त्रियां प्रतिषेधो वाच्यः" इति वार्तिककृतोक्ते भाष्यकारः "चतुरश्शसि स्त्रियां अप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः, इह शसि स्वरः कस्मान्न भवति? आद्युदात्तनिपात-नात्। आद्युदात्तनिपातनं करिष्यते। स निपातस्वरः शसिस्वरस्य बाधको भविष्यति" इत्यवदत्। एवञ्च "चतस्रः पश्य" इत्यत्र चतस्रद्याद्युदात्तनिपात-नेनान्तोदात्तत्वसिद्धेर्भाष्यकृता वार्तिकं प्रत्याख्यातम्। चतसृणामित्यत्र विभक्ति-स्वरोऽपि "षट्त्रिचतुर्भ्यो हलादि"रिति सूत्रे हलादिग्रहणेन निपातनस्वरो विभक्तिस्वरस्य बाधको न भवतीति ज्ञापनात् सिद्ध्यति। तथा हि—षट्त्रिचतुरां बहुवचनविषयत्वाद्द्विवचनैकवचने न स्तः। अन्या हलादयः। उपसमस्ते सम्भवेऽपि विहितविशेषणान्न दोषः। तत्र षड्भ्यः परयोर्जश्शसोर्लुगेव। अन्या हलादयः। त्रिशब्दे जसि नेदम्, असर्वनामस्थान इत्यधिकारात्। शसि "एकादेश उदात्ते-नोदात्तः" इत्यनेनैव सिद्धम्। अन्या हलादयः। तिस्रचपि "तिसृभ्यो जस" इत्यनेन भाव्यम्। तिस्रः पश्येत्यत्र "उदात्तयणो हल्पूर्वात्" इत्यनेन भाव्यम्। चतुश्शब्दे

१. पातञ्जल-महाभाष्ये-प्रदीपोद्द्योतसहिते, षष्ठाध्याये प्रथमपादे षष्ठाह्निके, १६७ सूत्रे, पृ० ६९७-६९८।

जसि असर्वनामस्थान इत्यनुवृत्त्या न दोषः। तस्मात् "चतस्रः पश्य" इत्येव तद्व्यावर्त्यम्। यदि निपातनस्वरो विभक्तिस्वरं बाधेत, तदा समासे "प्रियतिस्रा" इत्याद्येकवचनादिषु षट्त्रिस्वरप्राप्तौ तद्वारणाय हलादिग्रहणस्य व्यावर्त्यसम्भवे "हलादिग्रहणानर्थक्यं, न ह्यन्यद्धलादिग्रहणं प्रयोजयति, अन्यदतश्चतसृशब्दात्" इति भाष्योक्तं भज्येत। अष्टौ, परमाष्टावित्यादौ विहितविशेषणत्वाङ्गीकारेऽपि "एकादेश उदात्तेनोदात्तः" इत्यनेन स्वरस्सिद्ध्यतीति न दोषः। तथा च प्रियाष्टाभ्यामित्यादावष्टनस्वरस्य सावकाशाद् दीर्घग्रहणस्य स्वांशे चारितार्थ्याभावात् कथं ज्ञापकत्वं घटत इति।

अत्रेदं समाधानम्—"अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणस्य ज्ञापकतापरभाष्यप्रामाण्येन "अष्टनो दीर्घात्" इति सूत्रेऽपि विहितविशेषणाश्रयणात् 'प्रियाष्टाभिः' इत्यत्र अष्टनस्वरो न प्रवर्तत इति तस्य निरवकाशाद् अष्टभिरित्यत्र प्राप्तौ तत्र तद्वारणाय दीर्घग्रहणं स्वांशे चरितार्थम्। किञ्च षट्संज्ञासूत्रे भाष्ये "प्रियाष्टादीनामनभिधानमेव" इति स्पष्टमुक्तत्वाच्च। इदं वार्तिकमतरीत्या।

वस्तुतस्तु विहितविशेषणमप्रमाणमेव। "तिसृभ्यो जसः" इति सूत्रे वार्तिककृता जस्-ग्रहण प्रत्याख्यातम्। कुत इति चेत्, त्रिशब्दस्य बहुवचनविषयत्वेनैकवचनद्विवचने न स्तः। तृतीयाद्यारभ्यान्या हलादयः। एवञ्च जस एव "तिसृभ्यो जसः" इति सूत्रेणान्तोदात्तो भवतीति तत्सूत्रे जस्-ग्रहणस्य अनावश्यकत्वात्। तत्र भाष्यकार आचार्यान्तरसंवादमवष्टभ्य "उपसमस्तार्थमेके जस्-ग्रहणमिच्छन्ती"त्यवदत्। समस्ततिसृशब्दसमीपजन्यविभक्तिस्वरव्यावृत्त्यर्थं जस्-ग्रहणमिति तद्भाष्यार्थः। एतद्भाष्येण "तिसृभ्यो जसः" इति स्वरः "प्रियतिसृ" इत्यादौ तदन्ते यथा भवति, तथैव प्रियाष्टाभ्यामित्यत्र षट्त्रिस्वरोऽपि तदन्ते प्रवर्तते। एवञ्च प्रियाष्टाभ्यामित्यत्र तदन्तेऽपि षट्त्रिस्वरस्य प्रवृत्त्याऽष्टनस्वरस्य निरवकाशत्वादष्टनस्वरे प्राप्ते तद्वारणाय दीर्घग्रहणस्य स्वांशे चारितार्थ्यं वर्तत इति ज्ञापकत्वं युज्यत एव। विहितविशेषणास्वीकारे "चतुरश्शसि" इति सूत्रवार्तिकादिकं विरुणद्धीत्यपि वक्तुं न शक्यते। "तिसृभ्यो जस्-ग्रहणानर्थक्यमि"ति वार्तिकं भाष्ये यथा दूषितं तद्वदेव "चतुरश्शसि" इति सूत्रस्थवार्तिकादिकमपि दूषितप्रायमेव। अत एव भाष्ये[1] "उपसमस्तार्थमेके" इत्यादिग्रन्थे 'एके' इति भाष्योक्तं स्वरसतया सङ्गच्छते। एवञ्च "अष्टनो दीर्घात्" इति सूत्रे दीर्घग्रहणस्य ज्ञापकत्वं सुस्थमेव।

---

१. पातञ्जल-महाभाष्ये-प्रदीपोद्द्योतसहिते, षष्ठाध्याये प्रथमपादे षष्ठाह्निके, १६६ सूत्रे पृ० १९७।

## ग. "समर्थः पदविधिरि"ति सूत्रार्थविचारः

श्रीमता पाणिनिना अष्टाध्यायी व्यरचि। तस्मिन् ग्रन्थेऽष्टावध्यायाः, प्रत्यध्यायं चत्वारः पादाश्च वर्तन्ते। आहत्य ३,८९१ सूत्राणि सन्ति। तत्र द्वितीयाध्याये प्रथमपादे प्रथमसूत्रं भवति "समर्थः पदविधिः" इति। समर्थः, पदविधिरिति पदच्छेदः। विधिरित्यत्र विपूर्वक-धाधातोः "उपसर्गे घोः किः" इति सूत्रेण कर्मणि किप्रत्यये, तस्य कित्वात् "आतो लोप इटि च" इति सूत्रेण धाधातोराकारस्य लोपे ततो "विधि" इत्यस्य कृदन्तत्वेन प्रातिपदिकसंज्ञायाम्, ततः प्रथमैकवचने सुप्रत्यये, सस्य रुत्वविसर्गयोः कृतयोः विधिरिति निष्पन्नम्। विधीयत असाविति विधिरिति कर्मव्युत्पत्त्या कार्यमिति तदर्थो लभ्यते। पदस्य विधिः पदविधिः। पदसम्बन्धिकार्यमिति तदर्थः। सूत्रे समर्थशब्दो लक्षणया समर्थाश्रितो भवति। एवञ्च पदसम्बन्धी यो विधिस्स समर्थाश्रितो बोध्य इति सूत्रार्थः। सामर्थ्यं द्विविधम्—एकार्थीभावो व्यपेक्षा चेति।

### एकार्थीभावस्वरूपम्

पदद्वयबोध्ययोरर्थयोरेकपदबोध्यत्वमेकार्थीभावः। तद्यथा—राजपुरुष इत्यत्र राज्ञः पुरुष इति विग्रहे राजन्+ङस्, पुरुष+स् इत्यवस्थायां राजपदं राजत्वावच्छिन्नं राजानं बोधयति। पुरुषपदं पुरुषत्वावच्छिन्नं पुरुषं बोधयति। विग्रहावस्थायां राजपुरुषपदयोश्शक्तिद्वयं क्लृप्तम्। समासे तु क्लृप्तावयवशक्त्योस्त्यागपूर्वकं राजन्+ङस्, पुरुष+स् इति समुदाये विशिष्टा शक्तिः कल्प्या। तथा च राजन्+ङस्, पुरुष+स् इति समुदायो राजान्यस्वामिकत्वाभाववद्राजसम्बन्धिपुरुषे शक्त इत्यर्थं बोधयति। इदमेवैकार्थीभावस्वरूपम्।

### अत्रायं प्रश्नः

पदद्वयबोध्ययोरर्थयोरेकपदबोध्यत्वमेकार्थीभाव इत्युक्ते "राजपुरुष" इत्यादिसिद्धावपि दाशरथिः, पाचक इत्यादौ पदद्वयस्याभावात् तत्रैकार्थीभावो न प्रवर्तेत इति।

### अत्रेदं समाधानम्

पदद्वयबोध्ययोरित्यादिपूर्वोक्तलक्षणे दाशरथिः, पाचक इत्यादौ इञ्ण्वुलादीनां प्रत्ययत्वेन पदत्वाभावात् तत्र समर्थः पदविधिरिति सूत्रेणैकार्थीभावस्याप्रवृत्तिरित्याशयेन वैयाकरणसिद्धान्तलघुमञ्जूषायाम् एकार्थीभावस्य लक्षणान्तरमुक्तम्। तच्च "यत्किञ्चित्पदजन्यपृथगुपस्थितिविषयार्थकत्वेन लोके प्रसिद्धानां पदार्थानां विशिष्ट-

विषयेकशक्त्या एकोपस्थितिजनकत्वमेकार्थीभाव" इति। तथा च दाशरथिरित्यादौ दशरथस्यापत्यमित्यर्थे इञ्-प्रत्ययस्य पदत्वाभावेऽपि तद्बोध्यार्थबोधकापत्यमिति शब्दस्य लोके प्रसिद्धत्वात् तदादाय तत्रैकार्थीभावप्रवृत्तौ न दोषः। एवमेव पाचक इत्यादावपि। अत एव मञ्जूषायां नागेशेन यत्किञ्चित्पदजन्येत्युक्तम्। इदमेवैकार्थीभावस्वरूपम्। एतादृशैकार्थीभावः कृत्तद्धितादिपञ्चसु वृत्तिषु प्रवर्तते। अत एव 'औपगवः' 'दाशरथिः' 'पाचकः' इत्यादौ अणादितद्धितप्रत्ययाः, ण्वुलादिकृत्प्रत्ययाश्च भवन्ति। पृथगर्थानामेकार्थीभावस्समर्थवचनं कर्तव्यम्। क्व पृथगर्थानि, क्व एकार्थानि, वाक्ये पृथगर्थानि—राज्ञः पुरुष इति। समासे एकार्थानि—'राजपुरुष' इति। इति समर्थसूत्रस्थभाष्याद् वृत्तावेकार्थीभावः प्रवर्तते। परस्परव्यपेक्षां सामर्थ्यमेके। का पुनः शब्दयोर्व्यपेक्षा—न ब्रूमश्शब्दयोरिति। किं तर्हि? अर्थयोः। इह राज्ञः पुरुष इत्युक्ते राजा पुरुषमपेक्षते, ममाऽयमिति। पुरुषोऽपि राजानमपेक्षते 'अहमस्य' इतीत्यादिभाष्याद्व्यपेक्षापक्षो वाक्य आश्रयणीयः। तथा च व्यपेक्षा-पक्षे राजपुरुष इति समुदायेऽवयवशक्त्यतिरिक्ता समुदाये शक्तिर्नास्ति। आकाङ्क्षावशाद्राजपुरुष इत्यादावर्थोपस्थितिर्भवति।

### व्यपेक्षा-वादिमतम्

समर्थसूत्रार्थविवरणावसरे व्यपेक्षावादिन एवमाहुः — "परस्परव्यपेक्षां सामर्थ्यमेके" इति भाष्याद् व्यपेक्षा-पक्ष एव भाष्यसम्मतः। विशिष्टशक्तिवादे समासात् प्राग्वाक्ये विद्यमानावयवशक्तेः क्लृप्तायास्त्यागः, अक्लृप्तसमुदायशक्तिस्वीकार इत्यतिगौरवम्। अस्मिन् पक्षे "राज्ञः पुरुष" इत्यादौ परस्परसाकाङ्क्षयोः राजपुरुषयोस्सम्बन्धस्य राजादिपदोत्तरविभक्तिर्वाचिकेति।

### व्यपेक्षापक्षवादिमतखण्डनद्वारा एकार्थीभावसमर्थनम्

तन्न। विशिष्टशक्त्यस्वीकारे राज्ञः पुरुष इति स्वतन्त्रवाक्य इव राजपुरुष इत्यत्रापि राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वाद् राजपदार्थे ऋद्धस्य विशेषणस्यान्वयापत्तौ ऋद्धस्य राजपुरुष इति प्रयोगापत्तिः। किञ्च भाष्ये अथैतस्मिन् व्यपेक्षायां योऽसावेकार्थीभावकृतो विशेषस्स वक्तव्यः" इत्यादिना व्यपेक्षापक्षो दूषितः।

### प्रकृतभाष्यार्थविवरणम्

वृत्तावेकार्थीभावानभ्युपगमे वाक्य इव वृत्तावुपसर्जनपदार्थे विशेषणान्वयादीनां प्रसङ्गात् तदभावो वचनेन प्रतिपाद्यः। एकार्थीभावाभ्युपगमे तु न किञ्चिद्वचनेन प्रतिपाद्यम्। एवञ्च तत्तद्वचनकरणरूपगौरवग्रस्तत्वाद् व्यपेक्षापक्षो नाश्रयणीय इति तस्य भाष्यस्यार्थः।

अपि च समासे विशिष्टशक्त्यस्वीकारे पङ्कजपदेऽपि समुदायशक्तिर्न सिद्ध्येत्। इष्टापत्तिस्तु न कार्या। तथा सति सकलतान्त्रिकसिद्धान्तो विरुध्येत। तत्परिपालनलोभेन तत्र विशिष्टशक्तिस्वीकारे तु सर्वत्रापि वृत्तौ सा सेत्स्यति। अर्धजरतीयत्वस्यान्याय्यत्वात्। पङ्कजपदे यदि विशिष्टशक्तिर्न स्यात् तदा पङ्के जातमित्यवयवार्थेनैव पङ्कजाधिकरणकोत्पत्त्याश्रय इति बोधोपपत्तौ तत्रापि समुदायशक्तिर्व्यर्था स्यात्। न च पङ्कजपदे पद्मत्वेन रूपेण पद्मभानाय तत्र समुदायशक्तिरिति वाच्यम्, चित्रगुरित्यत्रापि चित्राभिन्नगोसम्बन्धीत्यवयव-शक्त्योपस्थितावपि स्वामित्वेन रूपेणान्यपदार्थोपस्थितये समुदायशक्तिरावश्यकी। 'चित्रगु'रित्यत्र स्वामिबाधनाय यदि लक्षणा तर्हि पङ्कजपदेऽपि तत्तुल्यम्।

## एकार्थीभावानभ्युपगमे मीमांसकानां रथकाराधिकरणविरोधप्रदर्शनम्

एकार्थीभावस्यैव विशिष्टशक्तिः, जहत्स्वार्थत्यादिनामान्तराणि वर्तन्ते। तत्र वृत्तौ विशिष्टशक्त्यस्वीकारे मीमांसकानां रथकाराधिकरणं विरुध्येत। तथा हि—"वर्षासु रथकारोऽग्निमादधीत" इति वेदवाक्यं वर्तते। तत्र रथकारपदेन रथं करोतीति व्युत्पत्त्या त्रैवर्णिकस्य ग्रहणमुत रूढ्या प्रतिलोमजातिविशेषस्य ग्रहण-मिति संशय्य "योगाद्रूढिर्बलीयसीति" न्यायेन प्रतिलोमजातिविशेषस्यैव ग्रहणं न तु रथनिर्माणकर्तृद्विजातीनामित्युक्त्वा रथकारत्वजात्याश्रयस्य श्रुत्यन्यथानुप-पत्त्या वेदाध्ययन-आधानसिद्धाग्न्यभावेऽपि आधानमात्रोपयोगिवेदाध्ययनं तत्र कल्प्यत इति सिद्धान्तितम्। व्यपेक्षावादे अवयवार्थमादाय त्रैवर्णिकानां विषये विधेश्चरितार्थतया मीमांसकम्मन्यानामधिकरणविरोधः स्पष्ट एव।

अपि च विशिष्टशक्त्यस्वीकारे "राजपुरुष" इति समासे ऋद्धस्येत्यादि-विशेषणान्वयवारणाय "सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो नेति" वचनमपूर्वं वक्तव्यम्। अस्माकन्तु पदार्थैकदेशत्वेन न तत्र विशेषणान्वय इति न्यायसिद्धम्। किञ्च व्यपेक्षावादे "राज्ञः पुरुष" इति प्रयोगस्यावश्यकप्राप्तावार-भ्यमाणस्समासो येन नाप्राप्तिन्यायेन तं बाधते। अतस्तन्मते वाक्यसमासयो-रुभयोरपि साधुत्वबोधनाय "विभाषा"-वचनमपूर्वं कर्तव्यम्। किञ्च "धवखदिरौ" इत्यत्र, एवं निष्कौशाम्बिः, गोरथ इत्यादौ च चकारलोपादिर्वक्तव्यः। तथा हि- "धवखदिरौ" इत्यत्र धवश्च खदिरश्चेति विग्रहवाक्ये चकारदर्शनाद्वृत्तावपि चकारः श्रूयेत। अन्यथा तस्य विग्रहत्वं न स्यात्। समाससमानार्थकवाक्यस्यैव विग्रहत्वात्। एवञ्चार्थभानाय वृत्तावपि च शब्दप्रयोगे धवखदिरावितिं प्रयोगो न सिद्ध्यतीति तदर्थं "द्वन्द्वे च लोप" इति वचनमपूर्वं कर्तव्यम्। एवमेव "निष्कौ-शाम्बिः", "गोरथः" "घृतघटः", "गुडधानाः", "केशचूडः", "सुवर्णालङ्कारः",

"द्विदश", "सप्तपर्ण" इत्यादावतिक्रान्त-युक्त-पूर्ण-मिश्र-सङ्घात-विकार-सुच्प्रत्ययानां लोपो वक्तव्य इत्यतिगौरवम्। विशिष्टशक्तिवादे तु विशिष्टस्य विशिष्टे शक्तिरिति न दोषः।

ननु समासे लक्षणयैव निर्वाहान्न पूर्वोक्तदोषावकाश इति चेत्, न, यदि तत्र लक्षणा स्वीक्रियेत ,तर्हि लक्षणावादिनस्तव बहुव्युत्पत्तिभञ्जनं कर्तव्यम्। तथा हि—

**व्यपेक्षावादिमते विशिष्टशक्त्यस्वीकारे बहुव्युत्पत्तिभङ्गप्रकारः**

(क) समानाधिकरणनामार्थयोरभेदान्वयः।

(ख) नामार्थ-धात्वर्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्नः।

(ग) प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यम्।

(घ) पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन।

(ङ) प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वम्।

(च) नामार्थप्रकारकबोधे विशेष्यतया विभक्तिजन्योपस्थितिर्हेतुः।

उपर्युक्तानामेतासां व्युत्पत्तीनां भङ्गो व्यपेक्षावादे। तथा हि—"चित्रगु"-रित्यत्र चित्राभिन्नगोस्वामीति प्रतीतिरनुभवसिद्धा। सा च विशिष्टशक्तिमन्तरा न सिद्ध्यति। न च तत्र लक्षणा। "प्राप्तोदको ग्राम" इत्यादावभीष्टार्थनिर्वाहकलक्षणाया असम्भवात्। तथा हि—प्राप्तोदक इत्यत्र प्रपूर्वकाप्लृधातोः प्राप्तिरर्थः। क्तप्रत्ययस्य कर्ता अर्थः। तस्योदके अभेदेनान्वयः। ततस्सम्बन्धिनि लक्षणायामपि प्राप्तिकर्त्रभिन्नोदकसम्बन्धो ग्राम इत्येव बोधस्स्यात्। न तूदककर्तृकप्राप्तिकर्मग्राम इत्यभीष्टार्थबोधः। मम तु "प्राप्तोदक"पदस्योदककर्तृकप्राप्तिकर्मणि शक्तिरिति न दोषः। ननु उदकस्य धात्वर्थे प्राप्तौ कर्तृत्वेनान्वये, ततः क्तप्रत्ययस्य कर्मणि लक्षणायां न दोष इति चेत्, न, "समानाधिकरणनामार्थयोरभेदान्वय" इति व्युत्पत्तिर्विद्यते। यद्युदकस्य धात्वर्थे प्राप्तौ कर्तृत्वसम्बन्धेन भेदेनान्वये सा व्युत्पत्तिर्भिद्येते। किञ्च उदकस्य नामार्थस्य धात्वर्थे प्राप्तौ कर्तृतासम्बन्धेन भेदेनान्वये "नामार्थयोर्भेदेन साक्षादन्वयोऽव्युत्पन्न इति व्युत्पत्तिर्भिद्येत। एतद्व्युत्पत्त्यनङ्गीकारे तण्डुलाभिन्नकर्मवृत्तिविक्लित्त्यनुकूलो देवदत्तकर्तृको व्यापार इति बोधे "देवदत्तेन पच्यते तण्डुल" इति प्रयोगस्येव देवदत्तस्य नामार्थस्य धात्वर्थे पाके कर्तृता-सम्बन्धेनान्वयात् "देवदत्तः पच्यते तण्डुल" इति प्रयोगस्याऽपि साधुत्वापत्तिः।

ननूदकस्य प्रत्ययार्थे कर्तर्यभेदेन, तस्य च धात्वर्थे प्राप्तावन्वयानन्तरं तत्सम्बन्धिनि ग्रामे लक्षणाश्रयणान्न दोष इति चेत्, न, तथा सति "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति" व्युत्पत्तिभङ्गापत्तिः। कुत इति चेत्, प्रत्ययार्थस्य

कर्तृधात्वर्थेऽन्वये तस्य विशेष्यत्वाभावात्। किञ्च प्राप्तपदे प्राप्तेर्विशेष्यत्वेन तस्या एव नामपदजन्यप्रतीतिविशेष्यत्वेन प्राप्तपदार्थैकदेशप्राप्तावुदकपदार्थस्यान्वयानापत्तेः। 'पदार्थः पदार्थेनान्वेतो'ति व्युत्पत्तेः। अन्यथा तद्व्युत्पत्तिर्भिद्येत। किञ्च क्तप्रत्ययस्योदकशब्दाप्रकृतिकतया तस्य उदकपदार्थान्वितस्वार्थबोधकत्वानुपपत्तिः। "प्रत्ययानां स्वप्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति" व्युत्पत्तेः, अन्यथेयं व्युत्पत्तिर्भिद्येत।

अथ च विशिष्टशक्त्यस्वीकारे 'राजपुरुष' इत्यादौ राजपदार्थस्य पुरुषेऽभेदेनान्वयानन्तरं तत्सम्बन्धिनि ग्रामे लक्षणायामपि "नामार्थप्रकारकबोधे" इत्यादिव्युत्पत्तेर्विशिष्टादेव प्रत्ययोत्पत्तेः पुरुषादेर्विभक्तिजन्योपस्थितिविषयत्वाभावात् राजसम्बन्धिरूपनामार्थस्य पुरुषेऽन्वयो न स्यात्। एतद्व्युत्पत्त्यनङ्गीकारे कर्मतासम्बन्धेन तण्डुलवृत्तिः पाक इति बोधतात्पर्ये 'तण्डुलः पचतीति' प्रयोगापत्तिः। एतद्व्युत्पत्त्याश्रयणे तु कर्मता-सम्बन्धेन तण्डुलादेः पाकादावन्वयो न भवतीति न दोषः।

ननु 'शुभ्रस्तण्डुल' इत्यादावपि विभक्तिजन्योपस्थितेरभावात् कथं शुभ्रस्य तण्डुलेऽन्वय इति चेत्, न, तत्राभिहिते प्रातिपदिकार्थे प्रथमाया विधानात् प्रातिपदिकार्थकप्रथमार्थे तण्डुलस्य, तस्य च शुभ्रेऽभेदेनान्वयाच्च न दोषः। ननु शुभ्रस्तण्डुल इत्यत्र व्यभिचारवारणेऽपि 'शुभ्रेण तण्डुलेन' इत्यत्र प्रातिपदिकार्थे तृतीयादेरविधानात् तत्र शुभ्रपदार्थस्य तण्डुल एवान्वयात् तस्यापि व्यभिचारो दुर्वार एवेति चेत्, न, तत्रापि नामार्थस्य साक्षान्नामार्थान्तरेऽनन्वयेन विभक्त्यर्थस्यैव तण्डुलादावन्वयेन न तद्व्युत्पत्तिव्यभिचारः।

विशिष्टशक्तिस्वीकारे भिन्नोपस्थितिविषयाणां व्युत्पत्तौ नामैकोपस्थितिनियामकसमुदायशक्त्याश्रयसमासादिवृत्तावप्रवृत्तेर्नास्माकं मते तत्तद्व्युत्पत्तिभङ्गः।

वस्तुतस्तु 'चित्रगु'रित्यत्र लक्षणाऽप्ययुक्ता। तत्र विशिष्टशक्तिमन्तरा स्वाम्यादिप्रतीतिर्न सिध्यति। तत्र लक्षणा नाश्रयितुं युक्ता। यदि चित्रपदे लक्षणा तर्हि चित्रस्वामी गौरिति बोधापत्तेः। नाऽपि गोपदे। तथा सति गोस्वामी चित्र इति बोधापत्तेः। किञ्च चित्रपदे लक्षणायां चित्रस्वामीति पदार्थे चित्रस्य पदार्थैकदेशत्वेन तत्र गवादेरन्वयो न स्यात्। "पदार्थः पदार्थेनान्वेतीति" न्यायात्। अन्यथा "पदार्थः पदार्थेनेति" व्युत्पत्तिविरोधः स्यात्। ननु चित्रपदार्थस्य प्रथमं गोपदार्थेऽभेदेन अन्वयः। अनन्तरं गोपदे तत्स्वामिनि लक्षणायां न कश्चिद्दोष इति चेद्विनिगमनाविरहाच्चित्रपदे न लक्षणा, किन्तु गोपद एवेत्ययुक्तत्वात्।

ननु गोपदे लक्षणा-स्वीकारे गोपदार्थस्य द्रव्यतया लक्ष्येण स्वामिना सम्बन्धः स्वस्वत्वनिरूपितस्वामित्वरूपस्साक्षात्सम्बन्धः। चित्रपदे तत्स्वीकारे तु तच्छक्यार्थस्य गुणरूपतया लक्ष्येण स्वामिना द्रव्यद्वारकः स्वशक्यसमवायिनिष्ठस्वत्वनिरूपितस्वामित्वरूपससम्बन्धः परम्परा-सम्बन्धः। तथा च साक्षात् सम्बन्धे सम्भवति परम्परा-सम्बन्धस्य ग्रहोतुमशक्यतया गोपद एव लक्षणा न चित्रपदे इति चेत्, उच्यते—एवं तर्हि चित्रगुरित्यत्र लक्षणास्वोकारेऽप्यषष्ठ्यर्थबहुव्रीहौ 'प्राप्तोदकः', 'कृतविश्व' इत्यादौ विनिगमकाभावाल्लक्षणा नाश्रायते। अतो व्यपेक्षावादिभिरप्यगत्या विशिष्टशक्तिरेवाश्रयणोया, न लक्षणादिकम्।

## चित्रगुरित्यत्र लक्षणाश्रयवतां नैयायिकानां मतवर्णनम्

अत्र नैयायिकाः—चित्रगुरित्यादौ न केवलं चित्रपदे लक्षणा। तथा सति चित्रस्वामी गौरिति बाधापत्तेः। नाऽपि गोपदे सा। तथा सति गोस्वामो चित्र इति बोधापत्तेश्च। अतः प्राप्तोदकमित्यादौ पदद्वये लक्षणा अङ्गीकर्तव्येति।

## न्यायमतखण्डनम्

उपर्युक्तनैयायिकाशयो न सम्यक्। "चित्रस्वामो गौः, गोस्वामो चित्र" इति बाधावृत्तिप्रसङ्गात्। न च परस्परं तात्पर्यग्राहकत्वादेकस्यैकदैव लक्षणा, न द्वयोरिति न बाधावृत्तिरिति वाच्यम्, एवमपि विनिगमनाविरहेण लक्षणाया असम्भवात्। "प्रत्ययाना सन्निहितपदार्थगतस्वार्थबाधकत्व"मिति व्युत्पत्त्या गोपद एव लक्षणेत्यपि न युक्तम्। उत्तरपदमात्रस्यैवान्यार्थप्रतिपादकतयाऽन्यपदार्थे वर्तमानानेकसुबन्ताभावाद् बहुव्रोह्यनुपपत्तिः। किञ्च घटादिपदेष्वकारादोनां चरमवर्णानामेव वाचकत्वम्, पूर्वभागे लक्षणा स्यात्। न च चरमवर्णमात्रश्रवणे घटाद्यर्थबोधो न भासत इति वाच्यम्, तथा सति 'प्राप्तादक' इत्यत्राऽप्युदकपदमात्रश्रवणादर्थबोधो दुर्वार एव। किञ्चावयवाना शक्ति, लक्षणा वाऽजानतामपि बालानां समुदायव्युत्पादने बोधस्सर्वानुभवसिद्धः। पूर्वोक्तदोषग्रस्तत्वाद्व्यपेक्षापक्षो नाश्रयणोयः। किन्तु वृत्तौ विशिष्टशक्तिरेवाश्रयणायेति दिक्।

## विशिष्टशक्तिमनङ्गीकुर्वतां नैयायिकमोमांसकादीनां मतप्रदर्शनम्

अत्र नैयायिकमोमांसकादयः—समासादिवृत्तिषु समुदायशक्तिस्वोकारे यानि प्रयोजनान्युपसर्जने विशेषणान्वयाभावादोनि तानि सर्वाण्यपि त्वन्मत इव मन्मतेऽपि लक्षणावादे तत्तद्वचनाकरणेऽपि सिद्ध्यन्त्येव। परन्तु तव विशिष्टशक्तिकल्पनागौरवमवशिष्यते। तथा हि—दशकस्यैवाप्रतो विशिष्टशक्तिरनावश्यको। राजपुरुष

इत्यादितोऽभीष्टार्थलाभस्तु सम्बन्धिनि लक्षणयैव भवति । राजपदस्य सम्बन्धिनि लाक्षणिकत्वादेव तत्र विशेषणान्वयो न भवति । "पदार्थः पदार्थेनान्वेतो"ति न्यायात् । एवञ्च "सविशेषणानामि"ति वार्तिकमस्माकं मतेऽपि नाऽपूर्वम् । नाऽप्यस्माकमिवादिशब्दलोपविधानमावश्यकम् । कुत इति चेत्, 'घनश्याम' इत्यादौ घनादिशब्दे घनसदृशे लक्षणास्वीकारेण घनशब्देनैव सादृश्यस्योक्ततया 'उक्तार्थानामप्रयोग:' इति न्यायेनेवादीनां शब्दानां प्रयोग एव न भवति । किञ्च समासे लक्षणया राजसम्बन्ध्यभिन्नः पुरुष इति बोधनेच्छया राजपुरुष इति, व्यस्ते राज्ञः पुरुष इत्यस्माकं मतेऽपि विभाषावचनं सिद्धार्थानुवादकमेव । पङ्कजपदे विशिष्टशक्तिस्वीकारेऽपि न दोषः । यतस्तत्र अवयवज्ञानसहितस्य, तज्ज्ञानरहितस्य च बोधात् तत्र लक्षणाया वक्तुमशक्यतया समुदायशक्तिराश्रीयते । न च 'चित्रगु'रित्यादौ लक्षणासम्भवेऽपि 'प्राप्तोदक' इत्यादौ लक्षणाया असम्भवात् । तत्र लक्षणायां बहुव्युत्पत्तिभङ्ग इति वाच्यम् । 'प्राप्तोदक' इत्यादावुदकपदस्यैवोदककर्तृकप्राप्तिकर्मणि लक्षणेति न दोषः । नामार्थस्योदकस्य कर्तृतासम्बन्धेन धात्वर्थेऽन्वयोऽपि न सम्भवति । 'प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वमिति' व्युत्पत्तेः । एवञ्च "नामार्थधात्वर्थयोः साक्षाद्भेदेनान्वयोऽप्यव्युत्पन्न' इति व्युत्पत्तिविरोधोऽपि नास्ति । किञ्च घटादिपदे चरमवर्णस्यैव वाचकत्वे इष्टापत्तिरेव । यतो हि तत्र चरमवर्णस्यात्यन्तप्रत्ययसन्निधानेऽपि तस्य बोधकत्वाननुभवात् समुदायस्यैव वाचकत्वं कल्प्यत इति न दोष इति वदन्ति ।

## नैयायिकमीमांसकमतखण्डनम्

तन्न । समासे विशिष्टशक्त्यस्वीकारे राजपुरुष इत्यादिसमुदायस्यार्थवत्त्वाभावेन प्रातिपदिकसंज्ञा तत्र न प्राप्नोति । तथा सति समासाद्विभक्तिर्न स्यात् । ननु राजपुरुष इत्यादिसमासे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञाया अप्राप्तावपि कृत्तद्धितसूत्रे समासग्रहणात् प्रातिपदिकसंज्ञा भविष्यति । तत्र प्रत्ययान्तत्वेन कृत्तद्धितानां विषये पूर्वसूत्रेणाऽप्राप्तौ कृत्तद्धितसूत्रं विधायकं भवतीति चेन्, न, भाष्ये समासादिष्वर्थत्वात् प्रातिपदिकसंज्ञामाशङ्क्य समासग्रहणस्य नियमार्थत्वमाश्रित्य परिहृतत्वेन समासग्रहणस्य नियमार्थत्व एव मुनितात्पर्यावधारणेन तद्विरुद्धकल्पना न कार्या । किञ्च कृत्तद्धितसूत्रे कृत्तद्धितविषये तदन्तग्रहणार्थमर्थवद्ग्रहणानुवृत्तिरावश्यकी । ननु समासस्य शक्त्यार्थवत्त्वाभावेऽपि लक्षणयाऽर्थवत्त्वस्य सत्त्वात् प्रातिपदिकत्वसिद्धिरिति चेत्, न, तत्र समासवाक्ये शक्तेरेवाभावे शक्यसम्बन्धरूपलक्षणाया अप्यभावेन लाक्षणिकार्थवत्त्वस्यापि दुर्वचत्वात् ।

ननु "तिप्तस्झि" इत्यादिसूत्रे तिप्रत्ययादारभ्य "स्वौजसमौडिति' सूत्रे पकारपर्यन्तं तिप्प्रत्याहारो भाष्यकारैरुक्तः, तमादाय 'अतिप्प्रातिपदिकमिति न्यासः क्रियते। गुरुभूतार्थवदादिसूत्रद्वयं नारम्भणीयम्। किञ्च 'अतिप्प्रातिपदिकं समासश्चे'ति न्यासः कार्यः। तदानीं तिबन्तभिन्नं प्रातिपदिकं, समासश्च प्रातिपदिकसंज्ञं भवतीत्यर्थसिद्धया सर्वलक्ष्यसङ्ग्रहान्न दोष इति चेत्, न, समासेऽपि प्रत्येकं वर्णेषु प्रातिपदिकसंज्ञावारणायार्थवत्त्वस्यावश्यकतया समासस्य अर्थवत्त्वाभावात् पूर्वसूत्रस्याप्रवृत्त्याऽतिव्याप्तितादवस्थ्यमेव। एवञ्च धूमो यथा वह्निमनुमापयति तथा प्रातिपदिकसंज्ञारूपं कार्यं समासेऽर्थवत्त्वमनुमापयति।

अनुमानप्रकारश्चेत्थम्—समास एकार्थीभावरूपशक्तिमान्। प्रातिपदिकसंज्ञावत्त्वात्, पङ्कजशब्दवत्। यन्नैवं तन्नैवम्, यथा—दशदाडिमानीत्याद्यनर्थकसमुदाय इति। एवञ्च वृत्तौ समुदायशक्तिर्दर्शनान्तरीयैरपि स्वीकार्या। स्पष्टञ्चेदं भूषणसारव्याख्याने तत्त्वदर्शिनीग्रन्थे अस्मद्गुरुचरणैः।

### विशिष्टशक्त्यस्वीकारे मीमांसकम्मन्यानामधिकरणत्रयविरोधप्रदर्शनम्

मीमांसका वृत्तौ विशिष्टशक्ति नैवाङ्गीकुर्वन्ति। तन्मते अधिकरणत्रयं विरुणद्धि। तथा हि—

### (क) वषट्कर्त्रधिकरणविरोधः

तृतीयाध्याये पञ्चमपादे सोमयागप्रकरणे श्रूयते—"वषट्कर्तुः प्रथमभक्ष" इति। वषट्=देवतोद्देशेन हविस्त्यागसम्बन्धी मन्त्रविशेषः, तं करोतीति वषट्कर्ता। वषण्णामकमन्त्रोच्चारयिता होतृविशेषः। तत्रानेन वाक्येन प्राथम्यविशिष्टभक्षान्तरविधानमुत "होतृचमस' इति समाख्यया प्राप्तभक्षानुवादेन प्राथम्यविधिः। ततश्च समाख्यया यत्र वषट्कर्तुर्भक्षणं प्राप्तं तत्प्रथमं कर्तव्यम्। ततोऽन्यस्य भक्षणं कर्तव्यमिति तद्वाक्यार्थः। यत्र तु ग्रहेषु चमसान्तरेषु वा न समाख्यया भक्षणप्राप्तिस्तत्र सत्यपि वषट्कारे होत्रादेर्नास्ति भक्षणम्, यथा—ग्रावस्तुत इति पूर्वपक्षे, "वषट्काराच्च भक्षयेत्' इति जैमिनेस्सिद्धान्तसूत्रम्। अस्यायमर्थः—भक्षानुवादेन प्राथम्यविधान उद्देश्यस्य प्रथमप्रतीत्यवश्यम्भावाद्भक्षशब्देन प्रथमं तदर्थः प्रतिपाद्यः। न चेतत्सम्भवति। पदद्वयस्यापि विशिष्टैकार्थप्रतिपादकत्वाभावे एकार्थीभावलक्षणसामर्थ्याभावेन समासस्यैवानुपपत्तेः। तथा च प्रकृते प्राथम्यस्य पूर्वकर्मण्यनिवेशेन वषट्कर्तृ-प्राथम्योभयविशिष्टं भक्षान्तरमेव सोमसंस्कारार्थं विधीयते। तत्र च यागार्थत्वेन वषट्कारस्य क्लृप्तत्वात् कर्तुरुपलक्षणमात्रत्वेनार्थान्निमित्तत्वावगतेर्वषट्कारादिनिमित्तकमिदं भक्षणं ग्रहेषु, चमसेषु वा अविशेषात् सिद्धयति। एवञ्च

ग्रावस्तुतोऽपि भक्षणमस्त्येवेति सिद्धान्तितम् । व्यपेक्षावादिनोऽपि मीमांसका निरुक्तरीत्या विशिष्टैकोपस्थितिजनकत्वरूपैकार्थीभावभङ्गभिया उद्देश्यविधेयभावेनान्वयं नेच्छन्ति । विशिष्टशक्त्यनङ्गीकारे 'पदार्थयोरुद्देश्यविधेयभावेनान्वये पृथगुपस्थितिस्तन्त्रमिति' व्युत्पत्तिभङ्गापत्तिः ।

## (ख) स्विष्टकृद्धोमाधिकरणविरोधः

किञ्च विशिष्टशक्त्यस्वीकारे मीमांसकानां दशमाध्यायस्थं 'स्विष्टकृद्धोमाधिकरणं' विरुणद्धि । तथा हि—दशमाध्याये 'इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् त्र्यङ्गैर्वा शरद्विकारः स्यात्' इति जैमिनेस्सूत्रम् । तत्र श्रूयते—'त्र्यङ्गैः स्विष्टकृतं यजतो'ति । तत्र पशौ चोदकप्राप्तः स्विष्टकृद्यागः प्रधानहविर्भ्यो हृदयादिभ्य उत्तरार्थं गृहीत्वा कर्तव्य उताङ्गान्तरेभ्य इति संशये प्रधानशेषप्रतिपत्त्यर्थत्वात् प्रकृतौ पशावपि प्रधानशेषेभ्यः स्विष्टकृद्यागः कर्तव्यः । त्र्यङ्गैरिति वचनन्तु त्रित्वविशिष्टाङ्गानामेव विधायकम् । तत्र चेज्याशेषाणामङ्गानां प्राप्तत्वात् प्राप्ताप्राप्तविवेकन्यायेन त्रित्वविधौ पर्यवसानं स्यात् । तेन तेषामेवाङ्गानां मध्ये त्रिभिरङ्गैः स्विष्टकृदिज्येतेति पूर्वपक्षे प्रथमभक्ष इत्यत्रेव त्र्यङ्गैरिति समासविधानानुपपत्त्या अङ्गानुवादेन त्रित्वं न विधीयते, किन्तु त्रित्वविशिष्टाङ्गान्तरविधानम् । तथा चेज्याशेषभूतहृदयातिरिक्तैस्त्रिभिरङ्गैः स्विष्टकृदिज्येतेति सिद्धान्तितम् । यदि विशिष्टशक्तिर्नाङ्गीक्रियेत तदा विशिष्टैकोपस्थितिजनकत्वरूपैकार्थीभावलक्षणसामर्थ्याभावेन समासानुत्पत्तौ त्र्यङ्गैरिति समस्तरूपं न स्यात् । तथा सति तदधिकरणमसङ्गतं स्यात् ।

## (ग) अरुणाधिकरणविरोधः

किञ्च विशिष्टशक्त्यस्वीकारे अरुणाधिकरणस्य उत्थितिरेव न स्यात् । तथा हि ज्योतिष्टोमप्रकरणे श्रूयते—"अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणातीति" । तत्र प्रथमतः 'अरुणया क्रीणाति', 'पिङ्गाक्ष्या क्रीणाती'त्यादिना पार्ष्टिकबोधमङ्गीकृत्य पश्चाद्विशिष्टबोधोऽङ्गीकृतो मीमांसकैः । तत्र प्रथमतः प्राथमिकबोधे आरुण्यपदं वाक्याद्भित्त्वा प्रकरणे सर्वद्रव्येषु निविशते, उत क्रीणातिना सम्बध्य तदङ्गमेकहायन्यां निविशत इति संशये आरुण्यरूपगुणस्य अमूर्तत्वात् क्रयरूपक्रियासाधनत्वासम्भवेन पृथग्भूतोऽविशेषात् प्राकरणिकद्रव्यमात्रे निविशत इति पूर्वपक्षे अरुणापदस्य गुणितादात्म्येन गुणबोधकत्वाद् गुणिद्रव्यस्य च वाक्ये श्रुतत्वेन सन्निहितत्वादेकहायन्येवेति विशिष्टविधिरयमिति तत्र सिद्धान्तितम् । तस्मिन्नधिकरणे एकहायनी-पिङ्गाक्षीपदयोर्द्रव्यवाचकत्वं सिद्धवत्कृत्यारुण्यांश एव पार्थक्येन पूर्वपक्षः कृतः । समासशक्त्यस्वीकारे पिङ्गाक्ष्यैकहायनीपदयोरपि पिङ्गाक्षित्वैकहायनत्वादिगुणमात्रवाच्यतया

तयोरप्यमूर्तत्वात् क्रीणातौ करणत्वासम्भवेन क्रीणातिकरणस्येतद्वाक्यादलाभादारुण्यस्य वाक्यभेदशङ्काया एवाऽसम्भवात् तदधिकरणासङ्गतिः स्पष्टैवेति ।

**विशिष्टशक्त्यङ्गीकुर्वतां वैयाकरणानां मते निषादस्थपत्यधिकरणविरोधपरिहारः**

अत्र मीमांसकाः — वृत्तौ विशिष्टशक्तिस्वीकारे निषादस्थपत्यधिकरणं विरुणद्धि । तथा हि—ऐन्द्रं वास्तुमयं चरुं निर्वपेदित्युपक्रम्य 'एतया निषादस्थपतिं याजयेत्' इति श्रूयते । तत्र सन्देहः—निषादानां स्थपतिरिति षष्ठीसमासाश्रयणेन, निषादः स्थपतिर्यस्येति बहुव्रीह्याश्रयणेन वा त्रैवर्णिकोऽत्राधिकारी उत निषादश्चासौ स्थपतिश्चेति कर्मधारयाश्रयणेन प्रभुर्निषादोऽधिकारी इति । तत्र कर्मधारयाश्रयणेनाऽविदुषो वेदानधिकारिणोऽत्र त्रैवर्णिकस्य अधिकारित्वकल्पनापेक्षया षष्ठीतत्पुरुषबहुव्रीह्योरन्यतरस्याश्रयणेन विदुषो वेदाधिकारिणोऽग्निहोत्रिणस्त्रैवर्णिकस्यैवाधिकारित्वकल्पनं कार्यमिति पूर्वपक्षे बहुव्रीहेः षष्ठीतत्पुरुषः प्रबलः, अन्तरङ्गत्वात् । ततोऽपि कर्मधारयोऽन्तरङ्गत्वात् प्रबलः । एवञ्च प्रबलस्य कर्मधारयस्य आश्रयणेन निषादस्यैव स्थपतेरधिकारः कल्प्यः । श्रुतिप्रामाण्याच्च निषादस्य तद्यागोपयोगिवेदाधिकारः कल्प्यत इति निषादस्थपत्यधिकरणे सिद्धान्तितम् ।

विशिष्टशक्त्यङ्गीकारे तेषां समासानामन्तरङ्गबहिरङ्गभावो न युज्यते । तथा च षष्ठीतत्पुरुषकर्मधारयबहुव्रीहिणां त्रयाणामपि शक्यार्थबोधने वैषम्याभावात् कर्मधारयस्यैवाश्रयणे विनिगमकाभावात् कर्मधारयप्राबल्येन मीमांसकोक्तनिषादस्थपत्यधिकरणविरोधस्तदवस्थ एवेति वदन्ति ।

**निषादस्थपत्यधिकरणविरोधपरिहारः**

अत्रायं सिद्धान्तः—शाब्दबोधाविदूरप्राक्क्षणेऽन्तरङ्गबहिरङ्गभावो विचार्यते । एवञ्च तत्पुरुषादीनां त्रयाणामपि शक्यार्थप्रतिपादकत्वाऽविशेषेऽपि निरुक्तरीत्या शक्तिग्रहादिकालिकमन्तरङ्गबहिरङ्गभावमादाय मीमांसकैरधिकरणरचना कृतेति न तद्विरोधः । उक्तञ्च —

"पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षण स्थिते ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम्" ।। इति ।

अत्र कारिकायामन्तरङ्गबहिरङ्गशब्दौ लाघवगौरवपरौ ।

ननु लाघवमात्रेण नार्थनिर्णयसिद्धिः । अन्यथा बहुव्रीहित्वाभिव्यञ्जकसमासान्तादीनामभावे सर्वत्रापि कर्मधारयत्वापत्तेः । लाघवमात्रेण सर्वेषामपि धर्ममात्रवाचकत्वे विशिष्टशक्तेरुच्छेदप्रसङ्गाच्चेति चेत्, न, लाघवमात्रेण न प्रकृतार्थ-

सिद्धिः। किन्तु लाघवं तात्पर्यकल्पनायामुपयुज्यते। तेन च प्रकृतार्थसिद्धिः। निषादस्थपतिशब्दस्य नानार्थकतया ततो नानार्थोपस्थितो "नानार्थतात्पर्याद्विशेषावगतिरिति" न्यायेन तात्पर्यविषयीभूतार्थस्येव बोधः नान्यस्य। तात्पर्यकल्पकन्तु लाघवादोति निषादस्थपतिशब्देन निषादरूपस्य स्थपतिरूपार्थस्यैवोपपत्तिर्नान्यिस्येति तदधिकरणसिद्धान्तोपपत्तिः। स्पष्टञ्चेदं भूषणसारव्याख्याने तत्त्वदर्शिनोग्रन्थे अस्मद्गुरुचरणैरित्यलमतिविस्तरेण।

## (घ) न पदान्तद्विर्वचनेत्यादिसूत्रार्थविचारः

"न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदोर्घजश्चर्विधिषु" इति पाणिनिसूत्रम्। अचः परस्मिन् पूर्वविधाविति सूत्रेण द्विर्वचनादिषु परेषु अजादेशस्य स्थानिवद्भावे प्राप्ते तन्निषेधार्थमिदं सूत्रमारब्धम्। अत्र सूत्रे पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्पदानां द्वन्द्वनिर्दिष्टानां सर्वेषां "द्वन्द्वान्ते श्रूयमाणं पदमिति" न्यायाद् विधिपदार्थेऽन्वयः। पदस्यान्तः पदान्तः। अन्तश्शब्दश्चरमावयववाचकः। विधानं विधिरिति विपूर्वकधाधातोः "उपसर्गे घोः कि"रिति भावे किप्रत्ययः। पदान्तस्य विधिः पदान्तविधिरिति कर्मषष्ठ्यन्तेन समासः। एवञ्च पदचरमावयवादिकार्यकर्मकविधाने परनिमित्तोऽजादेशः स्थानिवत् स्यादिति सूत्रार्थः। एतादृशार्थस्वोकारादेव 'वृक्षव्' इत्यत्र वलोपो वारितः। तथा हि—वृक्षं वेति इति वातोति वा विग्रहे वृक्षोपपदाद् "वी"धातो"र्वा"धातोर्वा क्विपि तदन्तादाचष्टार्थ "तत्करोति तदाचष्टे" इति सूत्रेण णिचि वृक्षवो+इ इति स्थिते ततो विच्प्रत्यये, इष्टवद्भावेन टिलोपे, विज्निमित्तकत्वेन "णेरनिटि" इति णिलोपे वृक्षव्+व् इत्यवस्थायां "लोपो व्योर्वलि" इत्यनेन वलि लोपो न भवति। णिलोपस्य, टिलोपस्य वा "अचः परस्मिन् पूर्वविधौ" इति सूत्रेण स्थानिवत्वाण्णिचा "टि" इत्यनेन वा व्यवधानाद् वलि लोपो न।

अत्र पूर्वपक्षः —वृक्षव्+व् इति स्थिते वलोपस्य पदान्तकार्यत्वान्न पदान्तेति निषेधाद्वलि लोपो दुर्वार इति।

अत्रेदं समाधानम्—लोपस्याभावरूपतया वयवत्वेनपदान न पदान्तसूत्रस्याप्रवृत्तेः। यदि विपूर्वक-'धा'धातोर्विधीयत इति विधिरिति कर्मणि किप्रत्ययः क्रियते, तदा कर्मण उक्तत्वात् कर्मषष्ठ्यप्राप्त्या सम्बन्धसामान्ये षष्ठीकृते पदान्तस्य स्थाने यो विधिस्तस्मिन् कर्तव्ये स्थानिवद्भावो नेत्यर्थलाभाद् वृक्षव्+व् इत्यत्र वलि लोपस्यापि पदान्तसम्बन्धित्वेन निषेधप्रवृत्तौ वलिलोपापत्तिः स्यात्। अतस्तद्वारणाय

भावे क्विप्रत्यय इत्यभ्युपेयम्। तथा च पदस्य चरमावयवे कार्ये कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवदित्यर्थो लोभ्यते। तथा च लपस्य पदानवयवत्वेन न वलोपप्रसङ्गः।

अत्र पुनः पूर्वपक्षः—प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्च इति वार्तिकेन प्रातिपदिकादेव णिचो विधानात् 'वृक्षव्' इति क्विबन्तस्य पदत्वाभावेन सामान्यत एवास्य सूत्रस्य प्रवृत्तौ किमर्थं चरमावयवपर्यन्तानुधावनमिति चेत्, न, सुबन्ताण्णिजिति हरदत्तादिमते प्रथमतः प्रातिपदिकात् सुबुत्पत्तिः। ततो णिचि, सुपो धातुप्रातिपदिकयोरिति सुब्लुकि 'वृक्षवी' इत्यस्य प्रत्ययलक्षणेन सुबन्तत्वात् पदसंज्ञा प्रवर्तते। ततो णिचि, टिलोपे, णिलोपे च कृते एकदेशविकृतन्यायेन वान्तेऽपि पदसंज्ञा वर्तते। अतः 'वृक्षव्' इत्यत्र वकारस्य पदान्तत्वात् तस्य लोपे कर्तव्ये स्थानिवत्त्वनिषेधाद् वलोपापत्तिवारणाय पदचरमावयवे कर्तव्य इत्यर्थोऽवश्यमाश्रयणीयः।

ननु इष्टवदित्यतिदिष्टेन भत्वेन पदसंज्ञाया बाधाद् वृक्षव्+व् इत्यत्र पदसंज्ञाया अभावादस्य निषेधस्याप्रवृत्तिरेवेति चेत्, अत्र णिचं निमित्तीकृत्य इष्टवद्भावेन प्राप्ताया भसंज्ञाया णेरनिटीति णिलोपेन निमित्तभूतस्य णेरभावेनाप्रवृत्त्या पदसंज्ञैव प्रवर्तते। न च 'वृक्षव्' इत्यत्र णिलोपस्य स्थानिवद्भावेन भसंज्ञा भविष्यतीति वाच्यम्, अनल्विधाविति निषेधेन णेर्विशेषणतया अलाश्रयणान्न स्थानिवद्भावः प्रवर्तते। तथा हि—'णाविष्टवदि'त्यनेन 'यचि भम्' इति शास्त्रस्यैवातिदेशः। तत्सूत्रेऽजादिप्रत्ययोऽपेक्षितः। अतो विशेषणतयाऽलाश्रयणा'दनल्विधावि'ति निषेधः प्रवर्तते। ननु कार्यातिदेशपक्षे णाविष्टवदित्यतिदेशेन भसंज्ञाविधानेन स्थानिवद्भावस्सिद्ध्यतीति चेत्, तदापि यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिस्तन्निमित्तातिरिक्तसर्वनिमित्तकत्वमतिदेशस्यापोत्यर्थोऽङ्गीकार्यः। अन्यथा 'रामाय' इतिवद् रामस्येत्यत्रापि 'सुपि च' इति दीर्घापत्तिः। प्रकृतेऽत्र यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तिः=कप्रत्ययावधिकस्वादिघटकत्वरूपनिमित्तवैकल्यस्य 'यचि भम्' इति शास्त्रस्याप्रवृत्तिः। अतस्तद् "णाविष्टवदि"त्यनेन अतिदिश्यते। तत्र तदतिरिक्तयजादित्वमस्त्येवेति कृत्वा विशेषणतया अलाश्रयणं भसंज्ञायाः स्पष्टमेव। एवञ्चात्र भसंज्ञा न भवति, किन्तु पदसंज्ञेव।

ननु 'वृक्षव्' इत्यत्र स्थानिवत्सूत्रेण भसंज्ञायां णिलोपस्य स्थानिवत्त्वाभावेऽपि "अचः परस्मिन्नि"ति सूत्रेण परनिमित्तोऽजादेशो णिलोपः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य 'वृक्षव्' इत्यस्य भसंज्ञायां कर्तव्यायामित्यर्थकेन स्थानिवद्भावः प्रवर्तत इति चेत्, न, तथा सति णिलोपस्यैव टिलोप-

स्यापि स्थानिवत्त्वापत्तौ वान्ते भत्वस्य दुर्लभत्वेन ईकारान्ते पदसंज्ञा, वान्ते भसंज्ञेति अनयोरेतादृशविषयभेदसत्त्वेन बाध्यबाधकभावाभावात् पदसंज्ञा निराबाधैव ।

एतत्सर्वं सुबन्ताण्णिजिति हरदत्तादिमतेन। तत्र अन्तर्वर्तिविभक्त्या सुबन्तत्वात् पदसंज्ञा प्रवर्तते। अतः पदान्तकार्यत्वात् स्थानिवद्भावनिषेधः प्राप्नोति। तद्वारणाय पदस्य चरमावयवे इत्यर्थो वक्तव्यः। तथा च 'वृक्षव्' इत्यत्र णिलोपस्य स्थानिवत्त्वाद्वलोपो न भवति । एतत्सर्वं हरदत्तादिमते ।

वस्तुतस्तु प्रातिपदिकाद्धात्वर्थे इति वचनेन प्रातिपदिकादेव णिचो विधानात् 'वृक्षव्' इत्यस्य पदत्वं नास्ति। अतो नेदमुदाहरणं पदचरमावयवे कार्यस्य । किन्तु "एषो यन् हसती"त्युदाहरणम् । अत्र इण्धातोर्लटश्शतरि, "इणो यण्" इति यणि, नुमि, संयोगान्तलोपे 'यन्' इति रूपम् । अत्र एषस्+यन्+हसतीति स्थिते एतत्तदोरिति सुलोपे कर्तव्ये स्थानिवद्भावनिषेधो न प्रवर्तते। लोपस्य पदानवयवत्वात् । तथा च यणः स्थानिवत्त्वेन हल्परकत्वाभावात् सुलोपो न भवति। तत एषस्+यन्+हसतीति स्थिते सस्य रुत्वे, तस्य "हशि च" इत्यनेनोत्वे उत्वस्य पदावयवत्वेन स्थानिवद्भावनिषेधाद् उत्वं निराबाधमित्येतदेव प्रयोजनं पदचरमावयवे स्थानिवद्भावनिषेधस्य। स्पष्टञ्चेदं प्रौढमनोरमाशब्दरत्नयोः ।

### न पदान्तसूत्रस्थसवर्णस्योदाहरणप्रसङ्गः

न पदान्तसूत्रस्थस्वरसवर्णानुस्वारयोः स्थानिवद्भावाप्रवृत्तावुदाहरणं शिण्ढीति मनोरमाकाराः। तथा हि शिष्लृ व्याप्तावित्यस्माद्धातोः कर्तरि लोटि, सिपि, "रुधादिभ्यः श्नमि"त्यनेन श्नमि, सेर्ह्यादेशे, "हुझल्भ्यो हेर्धिः" इति हेर्धित्वे "श्नसोरल्लोपः" इत्यकारलोपे शिन्ष्+धि इति स्थिते ष्टुत्वे, जश्त्वे, "झरो झरि सवर्णे" इति वा डलोपे, "नश्चापदान्तस्ये"त्यनुस्वारे, परसवर्णे च कृते शिण्ढीति रूपम् । अत्र शिन्ड्+ढि इति स्थिते परनिमित्तोऽजादेशः अल्लोपः स्थानिवत् स्यादकारवत्स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य नकारस्यानुस्वारे कर्तव्ये इति स्थानिवद्भावे प्राप्ते अकारेण व्यवधानाज्झल्परकत्वाभावाद् अनुस्वारो न

प्राप्नोति। तथा चानेन सूत्रेणानुस्वारे कर्तव्ये स्थानिवत्त्वनिषेधाद् अनुस्वारो भवति। अनन्तरं परसवर्णविषयेऽप्यनेन सूत्रेण स्थानिवद्भावनिषेधादनुस्वारस्य यञ्-परकत्वमाश्रित्य परसवर्णोऽपि भवति। एवञ्च सवर्णानुस्वारयोः शिण्ढीत्युदाहरणमिति तेषामाशयः।

### शब्दरत्नकाराशयवर्णनम्

वस्तुतस्तु अनुस्वारस्येदमुदाहरणं भवितुमर्हति। तत्र स्थानिभूतादचः पूर्वत्वस्य सत्त्वात्। परन्तु सवर्णविषयेऽनुस्वारस्य स्थानिभूतादचः पूर्वत्वाभावेन स्थानिवद्भावप्रवृत्तिरेव नास्ति। तथा च सवर्णे इदमुदाहरणं न भवति।

अत्रेयमाशङ्का—ननु नकारे विद्यमानं स्थानिभूतादचः पूर्वत्वमनुस्वारेऽतिदिश्यते। तथा च स्थानिवद्भावस्य प्रवृत्तिरस्त्येवेति चेत्, न, अत्रातिदेशिकस्थानिभूतादचः पूर्वत्वस्य सत्त्वेऽपि वास्तविकस्थानिभूतादचः पूर्वत्वस्याभावात्। ननु सवर्णे कर्तव्ये स्थानिवद्भावनिषेधज्ञापकादेवानुस्वारेऽशास्त्रीयत्वेऽपि स्थानिभूतादचः पूर्वत्वमतिदिश्यते। तथा चेदमुदाहरणमेवेति चेत्, न, ज्ञापकस्थले वैयर्थ्यं, स्वांशे चारितार्थ्यं, ज्ञापकत्वमन्यत्र फलञ्चेति पदार्थचतुष्टयमपेक्षते। प्रकृते ज्ञापनोत्तरं स्वांशे चारितार्थ्यसत्त्वेऽप्यन्यत्र फलाभावात्। किञ्चाकारयुतो नकारेत्याकारकानुपूर्वीसहितस्थानिभूतादचः पूर्वत्वस्यानुस्वारे अतिदेशसहस्रेणाऽप्यतिदेष्टुमशक्यत्वात्।

ननु स्थानिभूतादचः पूर्वत्वं नामाजवधिकत्वविशिष्टत्वम्। तच्च नानुपूर्वीरूपम्, किन्त्वतिरिक्तो धर्मः। एतादृशाचः पूर्वत्वमनुस्वारेऽपि विद्यत एवेति चेत्, न, एतादृशाजवधिकत्वविशिष्टपूर्वत्वस्य नकारवृत्तित्वेन तस्य चाल्विधित्वेनानल्विधाविति निषेधात्।

अत्र पुनः पूर्वपक्षः—एतादृशाचः पूर्वत्वं समुदायवृत्तिधर्मो मूलकृन्मते। यथा—"ससजुषो रुः" इत्यादौ। तथा च स्थानिवद्भावो भवत्येवेति चेत्, अज्रूपस्य हलो विशेषणतयाऽलाश्रयणात् स्थानिवद्भावो न प्रवर्तत एव।

अथवा अस्तु स्थानिवद्भावः। तथाऽपि न पदान्तसूत्रेण स्थानिवद्भावनिषेधो न प्रवर्तते। भाष्ये पूर्वत्रासिद्धे न स्थानिवदिति स्वीकृत्य वरेयलोपस्वरभिन्नं

न पदान्तसूत्रं प्रत्याख्यातम्। एवञ्च सवर्णविषये स्थानिवद्भावस्य सत्त्वेन यञ्परकत्वाभावात् परसवर्णो न भवत्येव। तथा चानुस्वारघटितमेव साधु।

ननु वार्तिके प्रतिपदोक्तणत्वस्यैव स्वीकारात् प्रकृते स्थानिवद्भावनिषेधे कृते यञ्परकत्वात् परसवर्णे शिण्ढीत्युदाहरणं युक्तमेवेति चेत्, न, रषाभ्यामिति सूत्रे अपदान्तस्य मूर्धन्य इत्यनुवृत्त्य नकारस्य मूर्धन्यो भवतीत्युक्ते आन्तरतम्याण्णकारो भवतीति णग्रहणं प्रत्याख्यातम्। एवञ्च सर्वस्यापि लाक्षणिकत्वान्नात्रेयं परिभाषा प्रवर्तते। किञ्च "दीर्घादाचार्याणाम्" इत्युत्तरं "अनुस्वारस्य ययि परसवर्णः", "वा पदान्तस्य", "तोर्लि" "उदःस्थास्तम्भोः पूर्वस्य", "झयो होऽन्यतरस्याम्", "शश्छोऽटि" इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि", "अभ्यासे चर्च", "खरि च", "वाऽवसाने", "अणोऽप्रगृह्यस्यानुनासिक" इति पञ्चसूत्र्याः पाठ इति भाष्यसम्मताष्टाध्यायीपाठपक्षे परसवर्णदृष्ट्या जश्त्वस्यासिद्धत्वेन षकारस्यैव सत्त्वेन यय्परकत्वाभावात् परसवर्णाप्राप्तेस्सर्वथा परसवर्णघटकशिण्ढीत्युदाहरणमयुक्तमिति महान् पूर्वपक्षः।

अत्रोच्यते—एवं तर्हि न पदान्तसूत्रे सवर्णग्रहणस्य पाद्धसतीत्युदाहरणं भवितुमर्हति। तथा हि—पदधातोः क्विपि, क्विबन्तत्वेन प्रातिपदिकसंज्ञायाम्, ततो णिचि पुनः क्विपि, 'णेरनिटि' इति णिलोपे, उपधावृद्धौ, विभक्तिकार्ये 'पाद्' इति रूपम्। अत्र पाद्+हसतीति स्थिते 'झयो होऽन्यतरस्यामि'त्यनेन हस्य पूर्वसवर्णे पाद्धसतीति रूपम्। अत्र 'अचः परस्मिन्' इति सूत्रेण परनिमित्तः अजादेशो णिलोपः स्थानिवत् स्यात्। स्थानिभूतादचः पूर्वस्मात् परस्य हस्य पूर्वसवर्णे कर्तव्ये इत्यनेन स्थानिवद्भावे प्राप्ते अनेन सूत्रेण सवर्णे कर्तव्ये स्थानिवत्त्वनिषेधात् पूर्वसवर्णो भवति।

नन्वत्र 'क्वौ लुप्तं न स्थानिवदि'त्यनेनैव स्थानिवत्त्वनिषेधसिद्धौ नेदमस्य सूत्रस्यासाधारणं प्रयोजनमिति धिया हरिद्धसतीत्युदाहरणान्तरमुक्तम्। हरितमाचष्ट इत्यर्थे हरितशब्दात् 'तत्करोति तदाचष्टे' इति णिचि, ततः क्विपि इष्टवद्भावेन टिलोपे, णिलोपे च कृते ततो हसतीत्यनेन सम्बन्धे हरित्+हसतीति जाते परनिमित्तोऽजादेशः टिलोपः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वस्मात् परत्वेन दृष्टस्य हकारस्य पूर्वसवर्णे कर्तव्ये इति स्थानिवद्भावे प्राप्ते न पदान्तेति निषेधात् झयः परीभूतस्य हस्य पूर्वसवर्णे हरिद्धसति इति निराबाधम्। नाऽत्र क्वौ लुप्तमित्यस्य प्राप्तिः। टिलोपस्यैव स्थानिवत्त्वात्।

ननु पञ्चमीसमासस्यानित्यत्वात् तदभावे न पदान्तसूत्रस्येदं कथमुदाहरणं भवतीति चेत्, तर्हि हरिन्नमतीत्येवासाधारणं प्रयोजनमस्य सवर्णग्रहणस्य। तथा हि—हरितमाचष्ट इत्यर्थे हरितशब्दाण्णिचि, क्विपि, टिलोपे, णिलोपे च कृते ततो नमतीत्यनेन योगे हरित्+नमतीति स्थिते 'यरोऽनुनासिकेऽनुनासिको वा' इत्यनुनासिके हरिन्नमतीति रूपम्। अत्र हरित्+नमतीति स्थिते परनिमित्तोऽजादेशष्टिलोपः स्थानिवत् स्यात् स्थानिभूतादचः पूर्वत्वेन दृष्टस्य तकारस्यानुनासिके कर्तव्ये इति स्थानिवद्भावे प्राप्तेऽनेन स्थानिवत्त्वनिषेधादनुनासिके कृते 'हरिन्नमति' इति सिद्ध्यति। ननु यरोऽनुनासिके इति सूत्रे सवर्णपदाभावेन कथमस्य सवर्णविधित्वमिति चेत्, न, अत्र सूत्रे 'अनुस्वारस्य ययि परसवर्णः' इति सूत्रात् सवर्णग्रहणमपकृष्यते। एवञ्चेदमपि सवर्णविधायकं भवति। इदं 'हयवरट्'सूत्रभाष्याज्ज्ञायते। तत्र हि—चतुर्+मुख इति स्थिते रेफस्यानुनासिकत्वं कुतो न स्यादित्याशङ्क्य 'रेफोष्मणां सवर्णा न सन्ती'ति समाहितम्। तेनास्य सवर्णविधित्वं स्पष्टमेवेति दिक्।



## सहायकग्रन्थसूची


| ग्रन्थः | ग्रन्थकर्ता | प्रकाशकः | प्रकाशनवर्षम् |
|---|---|---|---|
| १. अनर्घराघवम् | मुरारिः | चौखम्बाविद्याभवनम्, वाराणसी | वि० सं० २०३२ |
| २. अम्बाकर्त्री | पं० रघुनाथशर्मा | सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयः, वाराणसी | वि० सं० १८७२ १९५१ खिस्ताब्दः |
| ३. किरातार्जुनीयम् | भारविः | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | सन् १९६१ |
| ४. कुमारसम्भवम् | कालिदासः | काशी-हिन्दू-विश्वविद्यालयः, वाराणसी | सन् १९८६ |
| ५. काशिकावृत्तिः | वामनजयादित्यौ | प्राच्यभारतीप्रकाशनम्, वाराणसी | सन् १९६५ |
| ६. वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षितः | चौखम्बा-संस्कृत-संस्थान, वाराणसी | वि० सं० २०३६ |
| ७. वैयाकरणसिद्धान्तकारिकाः | भट्टोजिदीक्षितः | आनन्दाश्रम-मुद्रणालयः, पुण्यपत्तनम् | सन् १९७८ |
| ८. वैयाकरणसिद्धान्तलघुमञ्जूषा | नागेशभट्टः | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | सन् १९६७ |
| ९. वैयाकरणभूषणसारः | कौण्डभट्टः | अजन्ता प्रिन्टर्स कोल्लूर, आन्ध्रप्रदेश | सन् १९७० |
| १०. व्याकरणमहाभाष्यम् | पतञ्जलिः | मोतीलाल-बनारसीदास, दिल्ली | सन् १९६७ |
| ११. वाक्यपदीयम् | भर्तृहरिः | सम्पूर्णानन्दसंस्कृतविश्व-विद्यालयः, वाराणसी | सन् १९८० |

| | | | |
|---|---|---|---|
| १२. लघुशब्देन्दुशेखरः ( द्वितीयं संस्करणम् ) | भट्टनागेशः | चौखम्बा संस्कृत संस्थान, वाराणसी | सन् १९८७ |
| १३. भाट्टरहस्यम् | खण्डदेवः | मानवसंसाधनविकास-मन्त्रालयः, नवदेहली | सन् १९८५ |
| १४. पदमञ्जरी | हरदत्तमिश्रः | प्राच्यभारतीप्रकाशनम्, वाराणसी | सन् १९६५ |
| १५. प्रौढमनोरमा | भट्टोजिदीक्षितः | चौखम्बा संस्कृत सीरीज आफिस, वाराणसी | सन् १९३९ |
| १६. प्रौढमनोरमा | भट्टोजिदीक्षितः | काशीहिन्दूविश्वविद्यालयः, वाराणसी | सन् १९६४ |
| १७. परिभाषेन्दुशेखरः | नागेशभट्टः | चौखम्बा संस्कृत संस्थान, वाराणसी | सन् १९७८ |
| १८. पदवाक्यरत्नाकरः | गोकुलनाथोपाध्यायः | वाराणसेयसंस्कृत-विश्वविद्यालयः, वाराणसी | सन् १९६० |
| १९. पातञ्जलं महाभाष्यम् | पतञ्जलिः | वाणीविलासप्रकाशनम्, वाराणसी | सन् १९८७ |
| २०. वैयाकरणसिद्धान्तकौमुदी | भट्टोजिदीक्षितः | मोतीलाल बनारसीदास, वाराणसी | सन् १९७५ |
| २१. परिभाषेन्दुशेखरः | नागेशभट्टः | वासुदेवशास्त्री पटवर्धनः | वि० सं० २०३९ |

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन विधेयः।

रजिस्ट्रेशन न्यूजपेपर्स एक्ट के अन्तर्गत

## विज्ञप्ति

| | | |
|---|---|---|
| १. | प्रकाशन का नाम | सारस्वती सुषमा |
| २. | प्रकाशन की तिथि | त्रैमासिक |
| ३. | प्रकाशक का नाम | डॉ० हरिश्चन्द्रमणि त्रिपाठी |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ४. | सम्पादक का नाम | डॉ० आद्या प्रसाद मिश्र |
| | राष्ट्रियता | भारतीय |
| | पता | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |
| ५. | मुद्रक का नाम | श्री गिरीश चन्द्र |
| | राष्ट्रियता | भारतीय |
| | पता | विजय-प्रेस, सरसौली वाराणसी |
| ६. | स्वामित्व | सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी |

मैं आद्या प्रसाद मिश्र घोषित करता हूँ कि उल्लिखित विज्ञप्ति मेरी जानकारी के अनुसार बिलकुल ठीक है।

हस्ताक्षर
आद्या प्रसाद मिश्र
अनुसन्धानसंस्थाननिदेशक,
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय
वाराणसी–२२१ ००२.

पञ्जीकरणसंख्या — ६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. शिवमहिम्नःस्तोत्रम्—( द्वितीयं संस्करणम्)—स्तोत्रमिदं 'मधुसूदनी', 'नारायणी'-प्रभृतिभिः संस्कृतटीकाभिः, अथ च हिन्दी-पद्यानुवाद-हिन्दी-व्याख्यादिभिः सनाथीकृत्य प्रकाशितम्— १००-००

२. गर्गसंहिता ( द्वितीयं संस्करणम् )—पुराणविषयकोऽयं संहिताग्रन्थः श्रीमद्भागवतमहापुराणस्य पूरकरूपेणैव प्रसिद्धोऽस्ति । षट्खण्डात्मकोऽयं ग्रन्थः —१. गोलोकखण्डः, २. वृन्दावनखण्ड, ३. गिरिराजखण्डः, ४. माधुर्यखण्डः, ५. मथुराखण्डः, ६. द्वारकाखण्डश्च— २२०-००

३. वैयाकरणसिद्धान्तलघुमञ्जूषा —ग्रन्थरत्नमिदं श्रीदुर्बलाचार्यकृतया 'कुञ्जिका'-व्याख्यया, श्रीबालम्भट्टकृतया "कला-व्याख्यया, अथ च व्याकरणशास्त्रस्वतःप्रमाणभूतैराचार्यश्रीरामप्रसादत्रिपाठिभिः प्रणीतया 'सरला'-हिन्दीभाषा-व्याख्यया च समेवितं सत् प्रकाशितम्— प्रथमो भागः २००-००
द्वितीयो भागः १५०-००

४. दशपाद्युणादिवृत्तिः ( द्वितीयं संस्करणम् )—व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः सरस्वतीभवनस्थ-हस्तलिखितपाण्डुलिपीनाधारीकृत्य सुसम्पाद्य प्रकाशितः — २३२-००

५. वाक्यपदीयम्—आचार्यभर्तृहरिप्रणीतो व्याकरणशास्त्रस्य महनीयोऽयं ग्रन्थो हरिवृषभकृतया 'प्रकाश'-व्याख्यया, पण्डितश्रीरघुनाथशर्मकृतया 'अम्बाकर्त्री'-व्याख्यया च सनाथीकृत्य सुसम्पाद्य प्रकाशितः —
ब्रह्मकाण्डः — ६४-०० वाक्यकाण्डः — ४६-००
पदकाण्डे प्रथमो भागः — १००-०० पदकाण्डे द्वितीयो भागः — २३०-००
पदकाण्डे तृतीयो भागः — ६५-५०

६. कातन्त्रव्याकरणम्—आचार्यशर्ववर्मप्रणीतो व्याकरणशास्त्रस्यापूर्वोऽयं ग्रन्थः श्रीदुर्गसिंहकृताभ्यां कातन्त्रवृत्ति-टीकाभ्यां श्रीमत्त्रिलोचनदासकृतया 'कातन्त्रवृत्तिपञ्जिका'-टीकया, कविराजसुषेणशर्मकृतया 'कलापचन्द्र'-टीकया, अथ च डॉ० जानकीप्रसादद्विवेदिकृतया समीक्षया, विवरणात्मिकया भूमिकया, अनुसन्धानात्मकपरिशिष्टैश्च सनाथीकृत्य सुसम्पाद्य प्रकाशितः — प्रथमो भागः — ३५०-००

७. शब्दशास्त्रीयवृत्तिविमर्शः — ग्रन्थोऽयम् आचार्यबदरीनाथशुक्लस्मृति-व्याख्यानमालायाम् आचार्यश्रीरामप्रसादत्रिपाठिमहोदयैः पठितानां निबन्धाना सङ्कलनरूपेण प्रकाशितः । ग्रन्थेऽस्मिन् आचार्यश्रीत्रिपाठिभिः शक्ति-लक्षणा-व्यञ्जनाख्य-वृत्तीनां विस्तृतरूपेण व्याख्यानं कृतमस्ति— ७५-००

८. वैष्णवागमविमर्शः—ग्रन्थोऽयं म० म० गोपीनाथकविराजस्मृति-व्याख्यानमालायाम् आचार्यश्रीव्रजवल्लभद्विवेदिमहोदयैः पठितानां निबन्धानां सङ्कलनरूपेण प्रकाशितः । ग्रन्थेऽस्मिन् विदुषा लेखकेन त्रिविधानां वैष्णवागमानाम्, दशविधानां वैष्णवसम्प्रदायानाञ्च विस्तृतं विवेचनं कृतम्, अन्ते च जितन्तेस्तोत्रं संयोज्य ग्रन्थस्यास्य श्रीवृद्धिः कृताऽस्ति— १००-००

९. शारदातिलकम्—श्रीलक्ष्मणदेशिकेन्द्रविरचितस्तन्त्रशास्त्रस्य मूर्धन्योऽयं ग्रन्थः श्रीमद्राघवभट्टकृतया 'पदार्थादर्श'-व्याख्यया सनाथीकृत्य सुसम्पाद्य प्रकाशितः —
प्रथमो भागः — १५०-००

१०. खण्डनखण्डखाद्य—प्रमापक्ष—वेदान्तदर्शनस्यापूर्वोऽयं ग्रन्थः स्वामिश्रीगुरुशरणानन्दमहाराजैः प्रणीतः । ग्रन्थेऽस्मिन् खण्डनखण्डखाद्य-ग्रन्थान्तर्गतप्रमापक्षस्य साङ्गोपाङ्गनिरूपणपूर्वकं खण्डनसम्बन्ध्याक्षेपाणां समाधानादिकं सुविशदमनुसन्धानात्मकशैल्या हिन्दीभाषायां निरूपितम— ३००-००

पत्रव्यवहारसङ्केतः —प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१००२